THE

HARIDAS SANSKRIT SERIES.

14.

THE

# KĀVYA MĪMĀṂSĀ

*Of*

## RĀJAS'EKHARA

*Edited with*

THE MADHUSŪDANI COMMENTARY

*By*

SAHITYĀCHĀRYA

*Pandit Madhusūdana Mis'ra*

*BENARES.*

JAI KRISHNA DAS-HARIDAS GUPTA,

*The Chowkhamba Sanskrit Series office,*

1934.

॥ श्रीः ॥

हरिदास-संस्कृत-ग्रन्थमाला

१४

कविराज

राजशेखरविरचिता

# काव्यमीमांसा

महामहोपाध्याय पं० श्रीरामजीलालशास्त्रिणां तनुजनुषा साहित्याचार्यपदवीजुषा
भूतपूर्वाच्युतग्रन्थमाला-सम्पादकेन भूतपूर्व वाराणसेय-मारवाडी-संस्कृत
महाविद्यालय साहित्यशास्त्राध्यापकेन पं० मधुसूदनमिश्रेण निर्मितया
मधुसूदनीविवृत्या समुद्भासिता । तेनैव संशोध्य सम्पादिता ।

प्रकाशकः—
जयकृष्णदास हरिदास गुप्तः—
चौखम्बा संस्कृत सीरिज आफिस,
बनारस सिटी ।
१९९१

॥ श्रीः ॥

# भूमिका ।

हरेः खरनखाघातत्रस्तैः करिभिरीडितः ।
पातुं दधौ गजास्यत्वं तस्मै श्रीगणपे नमः ॥
"सतां सकाशतो भिक्षाकणान् संगृह्य यत्नतः ।
चरणे शिवयोः प्रीत्या उपदा काचिदर्प्यते" ॥

सुपरिशीलितमेवेदं सारेतरविचारचर्यालोचनचतुरचेतसां सुमेधसां यद्-गभीरशास्त्रसागरावगाहने दक्षाणामदक्षाणां समेषामेव विचक्षणानां चक्षुः सुखपक्षमन्वीक्षमाणं तन्मूलं धर्मार्थकाममोक्षेति-पुरुषार्थचतुष्टयसम्पत्तिमेव लोकयति स्म । नहि मूलोपायमन्तरेण उपेयप्राप्तिः सुकरेति प्रथमं तदुपायमन्वेष्टुं प्रसरति । प्रसृतं च तत् पुरुषार्थेष्वेव प्राग् दृष्टादृष्टतया द्वैतभावमाकलयति । तत्र दृष्टेषु चिरकालानुगतार्यव्यवहारसिद्धान्वयव्यतिरेकाधिगतसाधनभावेषु स्नानाशनेषु अनाकलितशास्त्रस्यैव लोकस्य दृश्यते स्वाभाविकी अबाधितप्रवृत्तिः । नहि कमपि "मलिनः स्नायात्" "बुभुक्षितो वाश्नीयादि"ति शास्त्रमुपयुनक्ति अवरुणद्धि वा ।

अदृष्टे च विषये

यन्न दुःखेन सम्भिन्नं न च ग्रस्तमनन्तरम् ।
अभिलाषोपनीतं च तत्सुखं स्वःपदास्पदम् ॥

इत्युक्तलक्षणे स्वर्गे अपवर्गे च नैसर्गिकाज्ञानतमोविलुप्तालोकस्य लोकस्य आलोकः शास्त्रमेव ।

यत उक्तं च—

स्वर्गापवर्गपुण्यानां पापस्य च विनिर्णये ।
आचाण्डालं मनुष्याणां शास्त्रमेवास्ति साधनमिति ॥

तदेवास्मदादीनां सकलसदुपायदर्शने दिव्यत्वसम्पादकम्, नहि युक्तयोगिनामिव विलक्षणान्तरप्रयत्नसमुद्भूतज्ञानाद्युपायान्तरकौशलमिति ।

तस्मात्पुरुषार्थसाधनोपायभूतस्य शास्त्रस्यैवाधिगमे प्रयत्नो विधेयः। तच्च शास्त्रं चतुर्दशविधम्। यथा चोक्तम्—

पुराणतर्कमीमांसाधर्मशास्त्राङ्गमिश्रिताः।
वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश। इति॥
अङ्गानि वेदाश्चत्वारो मीमांसान्यायविस्तरः।
पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दश॥ इति॥

किन्तु उपवेदानां चतुर्णां सम्मेलनादष्टादशविधम्। यथोट्टङ्कितं नैषधे—

अमुष्य विद्यारसनाग्रनर्त्तकी त्रयीव नीताङ्गगुणेन विस्तरम्।
अगाहताष्टादशतां जिगीषया नवद्वयद्वीपपृथग्जयश्रियाम्॥

इदमपि बोध्यं यद् "अलङ्कारः सप्तममङ्गमिति" "सकलविद्यास्थानैकायतनं काव्यं पञ्चदशं विद्यास्थानमिति" च राजशेखरोक्तेः। तथा वार्त्तादण्डनीत्योश्च ग्रहणेन द्वाविंशतिविधम्। तथा च एवमत्र बोध्यम्—

पुराणतर्कमीमांसाधर्मकाव्याङ्गवार्त्तया।
वेदोपवेदा दण्डश्च विद्या द्वाविंशतिर्मताः॥

नाशङ्कनीयम्—सर्वत्र विद्यानां चतुर्दशत्वमिह कुतो द्वाविंशतिविधत्वमिति। पृथक्प्रस्थाना हीमा विद्या न परस्परमन्तर्भावमर्हन्ति, साक्षात्परम्परया वा पुरुषार्थसाधनोपायत्वमासां सर्वासां विद्यानां समानमेवेति।

तत्र वेदाः ऋग्यजुःसामाथर्वाख्याश्चत्वारः। एतेषां मध्ये कस्य प्राधान्यम्, उत प्राथम्यमिति संख्यायां संख्यावतां यावन्तो वेदास्तावन्ति मतानि। तथाहि—

ऋचो वै ब्रह्मणः प्राणा इति, ऋग्वेदं भगवोऽध्येमि यजुर्वेदं सामवेदमाथर्वणमिति च छान्दोग्ये, ऋग्वेदो(ऽथ) यजुर्वेदः सामवेदोऽ(ह्य)थर्वण इति मुण्डके; ऋग्यजुःसामाथर्वाणश्चत्वारो वेदाः साङ्गाः सशाखाश्चत्वारः पादा भवन्तीति तापनीये;

तस्माद्यज्ञात्सर्वहुत ऋचः सामानि जज्ञिरे ।
छन्दांसि जज्ञिरे तस्माद्यजुस्तस्मादजायतेति यजुषि च ॥

सर्वत्रात्र ऋग्वेदस्यैव प्रथमपाठात, "यद्वै यज्ञस्य साम्ना यजुषा क्रियते शिथिलं तद्, ऋचा तद् दृढ"मिति तैत्तिरीयाणां यज्ञाङ्गदार्ढ्यसम्पादकत्वेन, सर्वब्राह्मणानां च तदेतदृचाभ्युक्तमिति विश्वासदार्ढ्यकारकत्वेन गृहीतत्वात्, यजुरादीतरवेदैस्तत्र तत्र यज्ञकाण्डेष्वादृततयाऽभ्यर्हितत्वाच्च सर्वेषु वेदेषु तस्यैव प्राधान्यम् उत प्राथम्यमिति ।

केचित्पुनरित्थमाचक्षते-'तस्य यजुरेवशिरः, ऋग्दक्षिणः पक्षः, सामोत्तरः, आदेशः आत्माथर्वाङ्गिरसः पुच्छं प्रतिष्ठे'त्यादिश्रुतिषु यजुषः शिरस्त्वाभिधानेन प्राप्तमुख्यत्वात्, स्तोत्रशस्त्रादिरूपाणामितरेषामृगादिवेदानां तस्य यज्ञशरीरत्वेनोपजीव्यत्वात्,

स्थाणुरयं भारहारः किलाभू-
दधीत्य वेदं न विजानात्यर्थम् ।
योऽर्थज्ञ इत्सकलं भद्रमश्नुते
नाकमेति ज्ञानविधूतपाप्मा ॥
यद्गृहीतमविज्ञातं निगदेनैव शब्द्यते ।
अनग्नाविव शुष्कैधो न तज्ज्वलति कर्हिचित् ॥

इत्यादिस्मृतिभिः यज्ञानुष्ठानफलकार्थबोधस्यैव प्रधानत्वाङ्गीकाराद् यजुषश्च यज्ञशरीरत्वाच्च सर्वेषु वदेषु यजुर्वेदस्यैव तथात्वं निष्पद्यत इति ।

इतरे त्वेवश्चातुर्यचय मश्चयन्ति-यथा प्रधाने प्रस्तुते तदनुयायिनः परे क्षणं सावहितीभावमाकलय्य तन्मुखप्रेक्षितामाचरन्ति तथा सामप्रस्तावे अन्यान्यवेदनिष्पाद्यक्रियाणां तावत्प्रतिबन्धः प्रत्युत तेषां तदुन्मुखत्वमिति सामवेदस्यैव तथात्वं सुस्थितं भवति—इति ।

अन्यैः दृढबद्धपरिकरैरिदमाघुष्यते-यदि पुनर्वेदानामौत्तराधर्यं विचार्यं चेत्तदा अथर्ववेद एव सर्वेषु वेदेषु प्राथम्यं प्राधान्यं वाऽवगाहते । तेषां युक्तयश्च--

'ब्रह्म ह वा इदमग्र आसीदि'त्युपक्रम्य = 'अथर्वणं वेदमभ्याश्नास्यदभ्यतपत्संतपत्तस्माच्छान्तात्संतप्तादोमिति, मन एवोर्ध्वमक्षरमुदक्रामदि'त्यादिश्रुतिभिरथर्ववेदादेव परमस्य मन्त्रस्य ब्रह्मणः प्रणवस्याभिव्यक्तिः तथा महाव्याहृतीनां शाखान्तरप्रसिद्धानामप्रसिद्धानां च बृहतीत्यादीनां तत एवोत्थानम् । अथर्ववेदीयपद्धतिकृतोपनयनसंस्कारस्य वेदान्तराध्ययनमविरुद्धम् । अन्यवेदोपनीयमानस्य तु ( आथर्वणोपनयनसंस्कारमप्रापितस्य ) नाथर्ववेदाध्ययनेऽधिकारः । तदुक्तम्—'भृग्वङ्गिरोविदा संस्कृतो अन्यान् वेदानधीयीत नान्यत्र संस्कृतो भृग्वङ्गिरसोऽधीयीते'ति । त्रय्येकशरणैरपि चैतदवश्याश्रयणीयम्, अथर्ववेदविहितं स्वकर्मभ्रंशे प्रायश्चित्तमाचरद्भिरित्यथर्ववेद एव ज्यायानिति अलमप्रकृतेन ।

एते चत्वारो वेदाः । 'अग्निहोत्रं जुहुयात्स्वर्गकामः, आत्मा वा अरे ज्ञातव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य' इतिप्रभृतिश्रुतिभिः स्वस्य साक्षादेव पुरुषार्थसाधनोपदेशस्वभावत्वमाविष्कुर्वन्ति । मन्वाद्युपनिबद्धं स्मृत्यपरपर्यायं धर्मशास्त्रमपि अष्टका-शिखाकर्म-प्रपाप्रवर्त्तनादीनामेव श्रूयमाणफलानाम् तथा अश्रूयमाणफलानां च कर्मणां "सर्वो हि शास्त्रार्थः पुरुषार्थसाधनोपयोगी न स्वरूपनिष्ठ" इति न्यायेन पुरुषार्थसाधनत्वमेवोपदिशति । पुराणेन तद्विशेषभूतेतिहासेन च आख्यायिकाख्यानादिवर्णनविधया वैदिकपदार्थ एव समुपबृंह्यते । तथाचोक्तम्—

इतिहासपुराणाभ्यां वेदं समुपबृंहयेत् ।
बिभेत्यल्पश्रुताद्वेदो मामयं प्रहरिष्यतीति । महाभारते आ० प० अ० १ श्लो० २६५ । वेदस्य च स्वत एव पुरुषार्थसाधनोपदेशस्वभावत्वादस्यापि तदर्थसमुपबृंहकस्य तथात्वं सुतरामुपपन्नम् । अतिगभीरस्य वेदस्यार्थमवबोधयितुं प्रवृत्तानि शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमलंकारः इति सप्ताङ्गानि परम्परया पुरुषार्थसाधनोपदेशीनि । अङ्गत्वं नामोपकारकत्वम् । तच्च वर्णस्वरमात्राबलसामसन्तानोच्चारणप्रकारोपदेशिकायाः शिक्षायाः वर्णस्वराद्यपराधपरिहारकत्वम् । आश्वलायनादिप्रणीतसूत्रस्व-

रूपस्य कल्पस्य ( कल्प्यते समर्थ्यते यागप्रयोगोऽत्रेति तस्य ) मन्त्रविनियोगेन क्रत्वनुष्ठानोपदेशकत्वम्। प्रकृतिप्रत्ययादिद्वारा पदस्व-रूपतदर्थनिश्चायकस्य व्याकरणस्य रक्षोहागमलघ्वसन्देहसहायकत्वम्। निरुक्तस्य वेदार्थावबोधकत्वम्। छन्दसः गायत्र्यादिछन्दोज्ञापकत्वम्। ज्योतिषः यज्ञादीनां कृते कालविशेषफलविशेषावगमयितृत्वम्। अलङ्कारस्य शोभासम्पादकत्वम्। समेषामेषामेकाकारानुगतो धर्मो-ऽनुगामित्वमङ्गसमाख्ययैव लभ्यते इत्यास्तामन्तरालो विषयः।

विचारणामन्तरेण महतो वेदराशेः शब्दस्तोमः स्वार्थमवधार-यितुं न प्रभवति। यतो हि विचारसहाय एव सङ्केतपुरस्कृतः शब्दः स्वार्थं निराकांक्षं बोधयितुं क्षम इति वेदार्थविचारात्मिका मीमांसा वेदस्येतिकर्त्तव्यतां निरूपयति।

तथाचोक्तम्—

धर्मे प्रमीयमाणे तु वेदेन करणात्मना
इतिकर्त्तव्यताभागं मीमांसा पूरयिष्यति। इति॥

ततश्च प्रत्यासन्नत्वेन वेदैकदेशभूता सापि वेदसमानैव पुरुषा-र्थसाधनोपदेशस्वभावा।

आन्वीक्षिकी न्यायविद्या हि—

प्रदीपः सर्वशास्त्राणामुपायः सर्वकर्मणाम्।
इयमान्वीक्षिकी विद्या विद्योद्देशे प्रकीर्तिता॥

इति कीर्त्तनात् सर्वशास्त्रकर्मणां प्रदीपोपायस्वरूपा वेदस्य दृढत-रप्रामाण्यसम्पादकस्तम्भतया प्रधानं प्रतिष्ठाननिबन्धनम्। अन्यथा कथमिव कुतार्किकदुस्तर्काकुलीकृतप्रामाण्येषु वेदेषु शिथिलितास्थाः विपुलधनश्रमादिसम्पाद्यं तदर्थमनुतिष्ठेयुस्तदेकशरणा ब्राह्मणाः, कुतो वाचाद्रियेरँत्साधवो माधवानुयायिनः। किं च कुर्युः परिवृढेऽदृढे धर्म-शास्त्रमीमांसादिपरिकरनिकराः। तस्मात्सकलकुतार्किकतर्कविकलन-पूर्वकप्रबलतरतत्प्रामाण्यप्रत्ययाभिधायि न्यायमुपादिक्शदिदमक्षपादोप-दिष्टं न्यायशास्त्रं परम्परया पुरुषार्थसाधनोपदेशि।

दृश्यश्रव्यादिभेदभिन्नं रसवत्काव्यं पुनः--

क्वचनानुकारपरिपाट्या प्रत्यक्षं विधिनिषेधौ प्रदर्शयन् कुहचित्प्रख्यातरामरावणादिनायकप्रतिनायकाश्रयेण अमृतेन संसिक्ताभिरिव चन्दनेन चर्चिताभिरिव हिमांशुकलाभिरामृष्टाभिरिव सूक्तिभिः प्रसिद्धविधिनिषेधास्पदं चरितमुपवर्णयन् सुकुमारमतीन् असुकरशास्त्रश्रवणविमुखान् कुतर्ककण्टकनिकरनिरुद्धसञ्चरमार्गाभासपरिभ्रान्तान् स्वरक्षाणक्षमामेकपदीमवलम्बयितुमकुशलान् बालिशान् अधिकृतान् स्त्रीनृत्यातोद्यप्रसक्तान्, "यौवनं धनसम्पत्तिः प्रभुत्वमविवेकिता । एकैकमप्यनर्थाय किमु यत्र चतुष्टयमि"ति नीत्या संभावितमहदनर्थसंघान् राजपुत्रप्रभृतीन् ; तथाव्युत्पादयितुमशक्यान् जडमतींश्च अभिमतवस्तुपुरस्कारेण गुडमिव रसास्वादसुखं मुखे दत्वा कटुकौषधपानादाविव शास्त्रे प्रवर्त्तयति विनयति व्युत्पादयति च । नह्येतादृशी सामर्थ्यकणिकाऽपि अन्यशास्त्राणामुदीते, काव्यस्यैवादः सर्वातिशायि माहात्म्यम् । यद्यदस्यातिशय्यं तदेतत्सर्वं प्रथिततममि'ति न तिरोहितं विदुषां समेषामपि । तथा 'न स शब्दो न तद्वाच्यं न सा विद्या न सा कला । जायते यन्न काव्याङ्गमि'ति पर्यालोचयतां मनसि स्वत एव समुच्छलति यदेतदेव पूर्वोक्तसकलविद्यास्थानानामेकमात्रमायतनम्, एतस्यैव पुरुषार्थचतुष्टयसम्पत्तिसाधकत्वं मुख्यमित्येतस्यैवोपेयस्य ग्रहणे यत्नो विधेय इति ।

तत्र किं तावत्काव्यम्, किमात्मकम्, कीदृग्विधम्, कुत्रास्य विचार इति प्रयततां सौकर्यार्थमेव आमूलचूडं सर्वाङ्गसुन्दरैः सुभाषितैः स्वविषयमुपस्थापयता सरलतया व्युत्पत्त्यै संजातलालसान् भृशमुपकर्त्तुं पूर्वोत्तरपक्षप्राचुर्यं प्रदर्शयता तदनुकूलहृदयंगमोपपत्तिविन्यासकौशलेनाधीतविद्यानामपि मनांसि समुल्लासयता कविशेखरेण राजशेखरेण काव्यस्य विचाररूपा काव्यमीमांसा प्राणायि । मन्ये इयम्—

काव्यत्वमधिसंगन्तुं साहित्याध्वनि तिष्ठते ।
मार्गदर्शकतां काव्यमीमांसा सत्करिष्यति ॥ इति ।

तदस्यां काव्यमीमांसायामष्टादशाध्यायाः । तत्र च ये ये विषयाः प्रत्यध्यायं प्रतिपादितास्ते संक्षेपेण जिज्ञासुजनसौकर्य्याय अस्माभि संग्रथिताः तद्यथा—

प्रथमोऽध्यायः—श्रीकण्ठस्य परमेष्ठिवैकुण्ठादिभ्यश्चतुःषष्ट्ये शिष्येभ्यः काव्यशास्त्रोपदेशः सारस्वतकाव्यपुरुषात्काव्यविद्याप्रवृत्तिः। सहस्राक्षादिभ्यो दिव्येभ्यः काव्यविद्यास्नातकेभ्यः काव्यविद्याया अष्टादशाधिकरणीप्रवचनम्—तेषां पृथक्पृथक् स्वशास्त्रविरचनम्। प्रकीर्णत्वात्तेषां किञ्चिदुच्छेदेन ग्रन्थकर्त्रा सङ्क्षेपेणास्य ग्रन्थस्य प्रणयनम्, एतद्ग्रन्थाध्यायनिर्देशश्च । (पृ० १—७)

द्वितीयोऽध्यायः—शास्त्रं काव्यं चेति वाङ्मयं द्विधा । शास्त्राणां परिसङ्ख्यानं, लक्षणं, सूत्रादिभिश्चेषां प्रणयनम् । वृत्तिपद्धतिभाष्यसमीक्षाटीकापञ्जिकाकारिकावार्तिका इति शास्त्रभेदाः, तेषां व्याख्याश्च । साहित्यविद्याया व्याख्या । (पृ० ८—२३)

तृतीयोऽध्यायः—सरस्वत्याः पुत्रेच्छा । स्वयम्भूवरदानम् । सरस्वत्याः काव्यपुरुषोत्पत्तिः । तस्य छन्दस्वद्वागुच्चारणम् । काव्यपुरुषस्य स्तुतिर्वर्णनं च । सारस्वतेयस्य उशनसे वाल्मीकये च छन्दस्वद्वाक्सञ्चारणम् । काव्यपुरुषस्य सरस्वत्या ब्रह्मलोकेऽनुगमनम् । तन्निवर्तनाय तद्वशीकरणार्थं साहित्यविद्यावधूत्पादनं, तस्यै काव्यपुरुषानुवर्तनाय, काव्यविद्यास्नातकेभ्यश्चैतयोः चरितस्तवनायादेशः। प्रथमं प्राचीं प्रति चलनम् । तत्र काव्यपुरुषमभियुञ्जाना सा औमेयीयं वेषं यथेष्टमसेविष्ट स तत्रत्याभिः स्त्रीभिरनुकृतः। सा औड्रमागधी प्रवृत्तिः । गौडाङ्गनावेषवर्णनम् । तयोरनुसारेण भारतीवृत्तिगौडीरीत्योः प्रादुर्भावः । ततः पाञ्चालान् प्रति चलनम् । पाञ्चालमध्यमाप्रवृत्तिसात्वतीवृत्तिपाञ्चालीरीतीनां प्रादुर्भावः । ततोऽवन्तीं प्रति चलनम् । तन्नेपथ्यानुसारेण आवन्तीप्रवृत्तिसात्वतीकैशिकीवृत्तीनां प्रादुर्भावः । ततो दक्षिणां प्रति चलनम् । तत्र दाक्षिणात्यप्रवृत्तिकैशिकीवृत्तिवैदर्भीरीतीनां प्रादुर्भावः । सम्पूर्णतया च काव्यपुरुषस्य वशीकरणम् । विदर्भेषु वत्सगुल्मे तयोर्गान्धर्वविवाहपरिणय-

नम् । ततो विनिवृत्य तेषु प्रदेशेषु विहृत्य तुषारगिर्यागमनम् । गौरी-सरस्वतीभ्यां वन्दनम् । तयोराशीर्वादेन कविमानसनिवासकरणं कविलोकस्वर्गसर्गश्च । (पृ० २४-३९)

चतुर्थोऽध्यायः—शिष्यो द्विविधः बुद्धिमानाहार्यबुद्धिश्च । ताभ्यामन्यथाबुद्धिर्दुर्बुद्धिः । समाध्यभ्यासयोर्व्याख्ये । तयोः शक्त्युद्भासनम् । शक्तिकर्तृके प्रतिभाव्युत्पत्तिकर्मणी । प्रतिभाव्याख्या । तस्याः कारयित्रीभावयित्रीभेदेन द्वैविध्यम् । सहजाहार्यौपदेशिकीति त्रिविधा कारयित्री । तासां व्याख्या । तदनुसारेण सारस्वतः आभ्यासिकः औपदेशिक इति त्रिविधाः कवयः । तेषां लक्षणानि । भावयित्रीव्याख्या । भावकत्वकवित्वयोः पृथक्त्वम् । अरोचकिनः, सतृणाभ्यवहारिणः, मत्सरिणः, तत्त्वाभिनिवेशिनश्चेति चत्वारः भावकाः । तेषां लक्षणानि । तत्त्वाभिनिवेशिनः विरलत्वम् । भावकविषये सङ्ग्रहश्लोकाः । (पृ० ४०-५४)

पञ्चमोऽध्यायः—व्युत्पत्तिप्रतिभयोर्व्याख्ये । तयोः कतरा श्रेयसीति विचारः । उभययोगः श्रेयानिति यायावरीयमतम् । शास्त्रकविः, काव्यकविः, उभयकविश्चेति कवयस्त्रिधा । तेषां स्वस्वविषये गरीयस्त्वमिति यायावरीयमतम् । त्रिधा शास्त्रकविः—यः शास्त्रं विधत्ते, यश्च शास्त्रे काव्यं विधत्ते, योऽपि काव्ये शास्त्रार्थं निधत्ते । काव्यकविः पुनरष्टधा-रचनाकविः, शब्दकविः, अर्थकविः, अलङ्कारकविः, उक्तिकविः, रसकविः, मार्गकविः, शास्त्रार्थकविरिति । रचनाकवेरुदाहरणम् । त्रिधा शब्दकविर्नामाख्यातार्थभेदेन । तेषामुदाहरणानि । अर्थकवेरुदाहरणम् । द्विधाऽलङ्कारकविः शब्दार्थभेदेन तयोरुदाहरणे । उक्तिकविरसकविमार्गकविशास्त्रार्थकवीनामुदाहरणानि । दश च कवेरवस्थाः । बुद्धिमदाहार्यबुद्ध्योः सप्त, तिस्रश्चौपदेशिकस्य । तद्यथा काव्यविद्यास्नातको, हृदयकविः, अन्यापदेशी, सेविता, घटमानो, महाकविः, कविराजः, आवेशिकः, अविच्छेदी, सङ्क्रामयिता च । तेषां लक्षणानि । पाकविवेकः । पिचुमन्दपाकं, बदरपाकं, मृद्वीकापाकं, वार्ताकपाकं, तिन्तिडीकपाकं, सहकारपाकं,

क्रमुकपाकं, त्रपुसपाकं, नालिकेरपाकमिति नवधा काव्यम्। तेषां त्रिकत्रये आद्यानां हेयता इतरेषाञ्चोपादेयता। अनवस्थितपाकस्य कपित्थपाकता। ( पृ० ५४-७२ )

षष्ठोऽध्यायः—पदस्य व्याख्या। तस्य सुब्वृत्तिः, समासवृत्तिः, तद्धितवृत्तिः, कृद्वृत्तिः, तिङ्वृत्तिश्चेति पञ्च वृत्तयः। पदजातस्यानन्त्यम्। वाक्यस्य व्याख्या। तस्य त्रिधाऽभिधाव्यापारः वैभक्तः, शाक्तः, शक्तिविभक्तिमयश्चेति। तेषां व्याख्या उदाहरणानि च। एकाख्यातम्, अनेकाख्यातम् ( सान्तरं निरन्तरञ्च ), आवृत्ताख्यातम्, एकाभिधेयाख्यातम्, परिणताख्यातम्, अनुवृत्ताख्यातम्, समुच्चिताख्यातम्, अध्याहृताख्यातम्, कृदभिहिताख्यातम्, अनपेक्षिताख्यातमिति वाक्यं दशधा। गुणवदलङ्कृतञ्च वाक्यमेव काव्यम। असत्यार्थाभिधायित्वान्नोपदेष्टव्यं काव्यमिति मतनिरासः। असदुपदेशकत्वान्नोपदेष्टव्यं काव्यमिति मतनिरासः। असभ्यार्थाभिधायित्वान्नोपदेष्टव्यं काव्यमिति मतस्य श्रुतौ च शास्त्रे चैतदर्थस्योपलब्धेर्निरासः। ( पृ० ७३-९४ )

सप्तमोऽध्यायः—ब्राह्मं, शैवं, वैष्णवमिति प्रणेतृभेदेन पुराणादिमतेन वाक्यं त्रिधा। स्वायम्भुवं, ऐश्वरं, आर्षम्, आर्षीकम्, आर्षिपुत्रकं चेति ब्राह्मं वचः पञ्चधा। तेषां व्याख्याः। सारस्वतकवीनां मते तु ब्रह्मविष्ण्वादिशिष्येषु चतुःषष्ठावुपदिष्टं वचः पारमेश्वरम्। क्रमेण चैतस्य देवैर्देवयोनिभिश्च यथामत्युपजीव्यमानत्वाद्दिव्यत्वेन व्यपदेशः। तच्च वैबुधं, वैद्याधरं, गान्धर्वं, योगिनीगतं चेति चतुर्धा। तेषां सव्याख्योदाहरणानि। वैष्णवस्य मानुषत्वेन व्यपदेशः। तच्च वैदर्भी, गौडीया, पाञ्चाली, चेति रीतित्रयभेदेन त्रिधा। काकुवक्रोक्तिर्नाम शब्दालङ्कारोऽयमिति रुद्रटमतस्य निरासः। काकोः पाठधर्मत्वम्। साकाङ्क्षा निराकाङ्क्षा चेति तस्या द्वैविध्यम्। आक्षेपगर्भा, प्रश्नगर्भा, वितर्कगर्भा, चेति त्रिधा साकाङ्क्षा। निराकाङ्क्षाऽपि विधिरूपा, उत्तररूपा, निर्णयरूपेति त्रिविधा। तासामुदाहरणानि। अभ्युपगमानुनयकाकूदाहरणम्। अभ्यनुज्ञोप-

हासकाकूदाहरणम् । त्रिचतुरकाकुयोगोदाहरणे । काकुकलनायां सामान्यपाठप्रतिष्ठायां च सङ्ग्रहश्लोकाः । मगधगौडकर्णाटद्रविड-लाटसुराष्ट्रकाश्मीरोत्तरापथपाञ्चालोद्भवानां कवीनां पाठप्रतिष्ठायां परिकरश्लोकाः । (पृ० ९५-११० )

अष्टमोऽध्यायः—श्रुतिः, स्मृतिः, इतिहासः, पुराणं, प्रमाण-विद्या, समयविद्या, राजसिद्धान्तत्रयी, लोको, विरचना, प्रकीर्णकम्, उचितसंयोगः, योक्तृसंयोग, उत्पाद्यसंयोगः, संयोगविकारः इत्येताः काव्यार्थानां षोडश योनयः । श्रौत-स्मार्त-ऐतिहासिक-पौराणिक-मैमांसिक-सांख्यीय-न्यायवैशेषिकीय-बौद्धीय-लौकायतिक-आर्हत-शैव सिद्धान्तीय-पाञ्चरात्र-बौद्धसिद्धान्तीय-नाट्यशास्त्रीय-कामसूत्रीय-लौकिक-विरचनाविषयक-हस्तिशिक्षीय-रत्नपरीक्षीय-धनुर्वेदीय-योग-शास्त्रीयाणामुचितसंयोगयोक्तृसंयोगोत्पाद्यसंयोगसंयोगविकाराणां काव्यार्थानामुदाहरणानि । ( पृ० ११०-१३१ )

नवमोऽध्यायः—दिव्यः, दिव्यमानुषः, मानुषः, पातालीयः, मर्त्यपातालीयः, दिव्यपातालीयः, दिव्यमर्त्यपातालीयश्चेति सप्तधा अर्थः । दिव्यमानुषश्चतुर्धा दिव्यस्य मर्त्यागमनेन मर्त्यस्य स्वर्गगम-नेन, दिव्यस्य मर्त्यभावेन मर्त्यस्य दिव्यभावेन, दिव्येतिवृत्तापरिकल्प-नया, प्रभावाविर्भूतदिव्यरूपतया च । तेषामुदाहरणानि । मर्त्य-पाता-लीयमर्त्यपातालीय-दिव्यपातालीय-स्वर्ग्यमर्त्यपातालीयानामुदाहरणा-नि । निःसीमार्थसार्थे रसवत एव निबन्धो युक्तः । सरिद्वर्णनरसवत्ता, अद्रिवर्णनरसवत्ता, सागरवर्णनरसवत्ता, विप्रलम्भेऽप्यतिरसवत्ता । तासामुदाहरणानि । वस्तुस्वरूपविचारः । मुक्तकप्रबन्धविषयत्वेना-र्थस्य द्वैविध्यम् । तावपि प्रत्येकं पञ्चधा—शुद्धः, चित्रः, कथोत्थः, संविधानकभूः, आख्यानकवांश्चेति । तेषामुदाहरणानि । संस्कृत-वत्स्वन्यास्वपि भाषासु अवधानावश्यकता । ( पृ० १३२-१५५ )

दशमोऽध्यायः—नामधातुपारायणादिकाव्यविद्यानां काव्य-मातॄणां च परिगणनम् । शुचिशीलनं कवेरावश्यकम् । तस्य भवनस्य, परिचारकस्य, मित्राणां, लेखकस्य च वर्णनं, तस्य गृहे भाषा-

नियमश्च । शिशुनागकुविन्दसातवाहनसाहसाङ्कानां प्राक्तननृपाणां स्वभवने वर्णभाषानियमः । कवेर्लेखनसाधनानि, काव्यप्रबन्धे भाषानियमश्च । कवेराहोरात्रिकम् । असूर्यम्पश्यनिषण्णदत्तावसरप्रायोजनिकानां चतुर्विधानां कवीनां लक्षणानि । पुरुषवत् योषितामपि कवीभवनम् । सिद्धस्य प्रबन्धस्यानेकादर्शकरणम् । प्रबन्धविनाशकरणानि । राज्ञः कविसमाजवर्णनम् । काव्यशास्त्रपरीक्षार्थं महानगरेषु ब्रह्मसभाकरणम् । (पृ० १५५-१७८)

एकादशोऽध्यायः—पञ्चविधं शब्दहरणं पदतः, पादतः, अर्द्धतः, वृत्ततः, प्रबन्धतच । श्लिष्टस्य श्लिष्टपदेन हरणम्, श्लिष्टपदैकदेशेन हरणम्, श्लिष्टस्य यमकेन हरणम्, श्लिष्टस्य प्रश्नोत्तरे हरणम्, यमकस्य यमकेन हरणम् । अप्रसिद्धादिकारणैः शब्दार्थहरणेऽभिरमेत इत्यवन्तिसुन्दर्या मतम् । त्र्यधिकपदहरणं हरणं न वेति विचारः । पादहरणं स्वीकरणापरनामधेयं हरणम् । तद्वदर्धप्रयोगे व्यस्तार्धप्रयोगे च । पाद एवान्यथात्वकरणं पादोनहरणं वा न स्वीकरणम् । भिन्नार्थानां पादानामेकेन पादेनान्वयनं कवित्वमेव, तद्वत् कतिपयपदैकदेशप्रयोगौ । व्याक्यस्यान्यथा व्याख्यानमपि न स्वीकरणं हरणं वा । परकीयस्य स्वीयत्वेन बिलपनं दोषोदाहरणम् । मूल्यक्रयोऽपि हरणम् । नास्त्यचौरः कविजनः, परं तु यो निगूहितुं जानाति, स विना वाच्यं नन्दति । कविः कश्चिदुत्पादकः, कश्चित्परिवर्तकः, कश्चिदाच्छादकः, कश्चित्संवर्गकः, परं तु यः शब्दार्थोक्तिषु किञ्चन नूतनं पश्येत्, प्राच्यं किञ्चन चोल्लिखेत्, स महाकविः । (पृ० १७९—१९५)

द्वादशोऽध्यायः—अर्थहरणस्य विचारः । अन्ययोनिर्निह्नुतयोनिरयोनिरिति त्रयो भेदाः । अन्ययोनिर्द्विधा प्रतिबिम्बकल्प आलेख्यप्रख्यश्च । निह्नुतयोनिरपि द्विधा तुल्यदेहितुल्यः परपुरप्रवेशसदृशश्च । अयोनिः पुनरेकादश एव । व्याख्या उदाहरणानि च प्रतिबिम्बकल्पादिचतुर्णामर्थानाम् । अमीषामर्थानामयस्कान्तवच्चान्वर्थाः

भ्रामकचुम्बककर्षकद्रावकाः चत्वारः लौकिकाः कवयः । पञ्चमश्च चिन्तामणिरलौकिकोऽदृष्टचरार्थदर्शी । तेषां व्याख्याः । चिन्तामणेः लौकिकालौकिकमिश्रत्वेन त्रयो भेदाः । तेषामुदाहरणानि । प्रतिबिम्बकल्पादिचतुर्णामर्थानां प्रत्येकमाष्टक्यवशाद्द्वात्रिंशद्धरणोपायाः । तत्र प्रतिबिम्बकल्पस्याष्टौ विकल्पाः व्यस्तकः, खण्डं, तैलबिन्दुः, नटनेपथ्यं, छन्दोविनिमयः. हेतुव्यत्ययः, संक्रान्तकः, सम्पुटश्च । तेषामुदाहरणानि । सोऽयं कवेरकवित्वदायी सर्वथा प्रतिबिम्बकल्पः परिहरणीयः । (पृ० १९५-२१०)

त्रयोदशोऽध्यायः—आलेख्यप्रख्यतुल्यदेहितुल्यपरपुरप्रवेशसदृशानां प्रत्येकमष्टौ भेदाः । तत्र समक्रमः, विभूषणमोषः, व्युत्क्रमः, विशेषोक्तिः, उत्तंसः, नटनेपथ्यम्, एकपरिकार्यः, प्रत्यापत्तिः इति आलेख्यप्रख्यस्य अष्टौ भेदाः । विषयपरिवर्तः, द्वन्द्वविच्छित्तिः, रत्नमाला, सङ्ख्योल्लेखः, चूलिका (संवादिनी विसंवादिनीति द्विरूपा), विधानापहारः, माणिक्यपुञ्जः, कन्द इति तुल्यदेहितुल्यस्याष्टौ भेदाः अनयोर्मार्गयोरनुग्राह्यत्वम् । दूडुयुद्धं, प्रतिकञ्चुकं, वस्तुसंचारः, धातुवादः, सत्कारः, जीवञ्जीवकः, भावमुद्रा, तद्विरोधी इति परपुरप्रवेशसदृशस्य अष्टौ भेदाः । इति द्वात्रिंशद् हरणोपायाः । अर्थवैपरीत्येन च तेषां प्रतियोगिनः । एतेषां हानोपादानविज्ञाने कवित्वम् । ( पृ० २११—२३३ )

चतुर्दशोऽध्यायः—कविसमयलक्षणम् । स्वर्ग्यभौमपातालीयभेदैः कविसमयत्रैविध्यम् । तेषां मध्ये भौमस्य जातिद्रव्यगुणक्रियारूपतया चतुष्प्रकारत्वम् । तेषां प्रत्येकम् असतो निबन्धनात्, सतोऽप्यनिबन्धनात्, नियमतश्चेति त्रैविध्यम् । ( पृ० २३४—२४५ )

पञ्चदशोऽध्यायः—गुणसमयस्यापि असतो गुणस्य निबन्धनं, सतोऽप्यनिबन्धनं, नियमतश्चेति त्रैविध्यम् । ( पृ० २४५—२५३ )

षोडशोऽध्यायः—भौमवत्स्वर्ग्योऽपि कविसमयः, विशेषस्तु चन्द्रमसि ऐक्यकल्पनादि । भौमस्वर्ग्यवत् पातालीयः कविसमयः । विशेषस्तु नागसर्पयोः दैत्यदानवासुराणां च ऐक्यकल्पनम् ।

सप्तदशोऽध्यायः—जगत एकद्वित्रिसप्तचतुर्दशैकविंशतिरिति पृथक् पृथक् कल्पनाभेदेन भेदाः । भूलोकस्य द्वीपाः समुद्राश्च । जम्बूद्वीपस्य वर्षाणि वर्षगिरयश्च । भारतवर्षस्य नव भेदाः सम्राट्चक्रवर्तिनोऽर्याख्ये । आर्यावर्त्तस्य पूर्वदेशो, दक्षिणापथः, पश्चाद्देशः, उत्तरापथः, मध्यदेशश्चेति पञ्च विभागाः । विभागपञ्चके जनपदानां पर्वतानां, सरितामुत्पन्नद्रव्याणां च निर्देशः । दिग्विचारः । पौरस्त्यदाक्षिणात्यपाश्चात्योदीच्यानां देहवर्णनियमः । (पृ०२६३-२९३)

अष्टादशोऽध्यायः—सौरचान्द्रमसे माने । ऋतुषु वायुदिग्विचारः । वर्षाधर्मवर्णनम् । शरद्धर्मवर्णनम् । हेमन्तधर्मवर्णनम् । वसन्तधर्मवर्णनम् । ग्रीष्मधर्मवर्णनम् । सन्धिः, शैशवः, प्रौढिः, अनुवृत्तिश्चेति ऋतूनां चत्वारोऽवस्थाः । तासामुदाहरणानि । शोभान्धोगन्धरसैः । फलार्चनाभ्यां च पुष्पस्य षोढा उपयोगः । अन्तर्व्याजं, बहिर्व्याजं, बाह्यान्तर्व्याजं, सर्वव्याजं, बहुव्याजं, निर्व्याजमिति फलानां षोढा भेदः । (पृ० २९३-३२८ )

## अथ ग्रन्थकर्त्तुः परिचितिः ।

किं नाम करबदरसदृशमखिलं लोकवृत्तमालोकमानानां जनानां पुरतो निवेदनीयं वस्तु, तथापि परीक्षापारं जिगमिषूणां यूनां कुमाराणां च कृते किमपि कविराजराजशेखरपरिचितिमधिकृत्य कृतकृत्यतामाधातुं प्रयत्यते ।

अयं कविकुलमणिः कस्मिञ्जनपदे, समये, वर्णे च समभूत्, के चाऽस्य ग्रन्थाः, कीदृशं पाण्डित्यम्, स्वभावो, रचनाशैली चेति प्रत्येकं क्रमशः प्रस्तूयते ।

## तत्र देशः ।

अयं राजशेखरः कान्यकुब्जाधिपतेः श्रीमतो महेन्द्रपालस्य, तत्सूनोः श्रीमहीपालदेवस्य च सदसि प्राप्तप्रधानासनः कृताजीवनः समवसदिति सुप्रतीतम्, परमस्य वास्तव्यभूमिर्महाराष्ट्रप्रान्तीयं चेदिमण्डलमेव ।

यथाऽयम्—

समूर्त्तो यत्रासीद्गुणगण इवाकालजलदः,
सुरानन्दः सोऽपि श्रवणपुटपेयेन वचसा ।
नचान्ये गण्यन्ते तरलकविराजप्रभृतयो-
महाभागास्तस्मिन्नयमजनि यायावरकुले ॥

इति बालरामायणप्रस्तावनोक्त्या प्रतीतं स्वपूर्वपुरुषं सुरानन्दं चेदिमण्डलमण्डनत्वेन वर्णयाञ्चक्रे ।

तथाहि—

नदीनां मेकलसुता नृपाणां रणविग्रहः ।
कवीनां च सुरानन्दश्चेदिमण्डलमण्डनम् ॥

तथा, "तदामुष्यायणस्य महाराष्ट्रचूडामणेरकालजलदस्य चतुर्थः (प्रपौत्रः) दौर्दुकिः शीलवतीसूनुरुपाध्यायः श्रीराजशेखरः" इत्यनेनात्मनो महाराष्ट्रप्रान्तीयत्वं साधयामास ।

सुव्यक्तमेतेन-यदस्य कुलपुरुषाः सुरानन्दतरलप्रभृतयो विद्वांसः प्रख्यातपाण्डितीकाः समभूवन् । तत्राकालजलदः प्रपितामहः, दुर्दुकः पिता, तरलसुरानन्दौ च कौचिद्वंशपुरुषौ ।

तथाचाकालजलदादीनामादृत्य स्मरणेनेदमपि प्रतीयते, यदेतैरयं स्वकुलस्य महद्गौरवमनुभवति स्म ।

तथा च पद्यम्—

अकालजलदश्लोकैश्चित्रमात्मकृतैरिव ।
जातः कादम्बरीरामो नाटके प्रवरः कविरिति ।

### तस्य वर्णः ।

"उपाध्यायो यायावरीय श्रीराजशेखरः"

इति बालरामायणीयप्रस्तावनावाक्यादुपाध्यायत्वयायावरत्वप्रतीत्या अस्य ब्राह्मणत्वमेवावसीयते ।

तथाहि-यजनयाजनदानप्रतिग्रहाध्ययनाध्यापनेति षट्सु कर्मस्वलंकर्तृत्वं ब्राह्मणस्यैव इतरेषां तु यथायथं यजनदानाध्ययनेषु त्रिष्वेव कर्मस्वधिकारविधेः श्रुतिसिद्धत्वात् । तथा च ब्राह्मणम-

न्तरा नोपाध्यायत्वं सिद्ध्येद्राजशेखरस्य। अथ च द्विविधा ऋषयः शालीना यायावराश्च। त एव हि ऋषयो यायावरा ये न नियतमेकत्र स्थायिनः। तं च प्रायशा ब्राह्मणा अथ च तद्वंश्यत्वादयमपि ब्राह्मण एव।

परम्

चाहुआनकुलमौलिमालिया राअसेहरकइन्दगेहिणी
मत्तुणोकइमवन्दिसुन्दरी, साउज्जयिदु मे अमिच्छइ।

इति कर्पूरमञ्जरीसट्टकोक्तपद्यात् पृथ्वीराजहम्मीरादिप्रख्यातराजभिः प्रसिद्धिमुपागते चौहानेतिक्षत्रान्ववाये समुत्पन्ना "अवन्तिसुन्दरी" पत्नी आसीदित्येतस्य क्षात्रत्वशंकां जनियति सा च विदुषी आसीदिति न तिरोहितमेतद्ग्रन्थद्रष्टॄणाम्

तत्र समयः।

"कान्यकुब्जाधिपस्य श्रीमहेन्द्रपालस्य तत्सूनोः श्रीमहीपालस्य सदसि प्राप्तमहासन इति प्रतीत्या इत्थं निश्चीयते-यदयं ८८० खिस्ताब्दतः ९२० मितखिस्ताब्दानामन्तरालवर्त्तिनि समये प्रादुरासेति। यतो महेन्द्रपालः ९०३ खिस्ताब्दं यावन्महीपालश्च ९१७ खिस्ताब्दं यावद् भूमण्डलं (कान्यकुब्जप्रान्तीयं) शशास, तथा चानेन स्वकृतकाव्यमीमांसायां वाक्पतिराजोद्भटानन्दवर्धनादीनां स्मरणं कृतम्। तेषु च वाक्पतिराजोद्भटौ काश्मीराधिपतेः श्रीजयापीडस्य समकालिकौ, स च ७७९ खिस्ताब्दतः ८१३ खिस्ताब्दं यावत् काश्मीरान् शशास। आनन्दवर्द्धनश्च शासति काश्मीरानवन्तिवर्मणि स्वस्थितिमुपलेभे। तस्य समयश्च ८५७ खिस्ताब्दतः ८८४ खिस्ताब्दं यावदासीत्। अथ च यशस्तिलकचम्पूकारेण सोमदेवेन स्वकीयग्रन्थे समुपटीकितोऽयं कविकुलशेखरीभूतो राजशेखरः। एवं चाऽस्य समयो वाक्पतिराजप्रभृतिभ्योऽर्वाक् सोमदेवाच्च प्राक् ८८० एवं ९२० खिस्ताब्दानामन्तराले प्राप्त इति निश्चप्रचम्।

## केचास्य ग्रन्थाः ।

एतत्प्रणीता ग्रन्थाः कर्पूरमञ्जरी, काव्यमीमांसा, हरविलास, बालरामायण, बालमहाभारत, विद्धशालभञ्जिकादयो वर्त्तन्ते ।

तत्र तद्ग्रन्थावलोकनदत्तशेमुषीकाणां सचेतसां स्फुटमवगतं भवति यद्बालरामायणबालमहाभारतविद्धशालभञ्जिकादयो ग्रन्थाः पूर्वं प्रणीताः काव्यमीमांसा-कर्पूरमञ्जरीप्रभृतयस्तु तस्य भारत्याः पूर्णप्रौढत्वपरिचायका उत्तरं प्रणीताः ।

## पाण्डित्यम् ।

अस्य पाण्डित्यं सर्वतोदिक्कमासीत् । यतस्तत्र तत्र च ग्रन्थे महतां विदुषां नामोल्लेखनात्तथा तत्तद्ग्रन्थीयप्रतीकोद्धरणात्तद्ग्रन्था-वलोकनव्यसनित्वं सुतरां प्रकटीभवति प्रतिभावतां सताम् अन्यथा पाण्डित्यस्यातथात्वे तत्तद्ग्रन्थावलोकनमसुकरं स्यात् , तथा संस्कृत वत् प्राकृतभाषासु, अथवा प्राकृतभाषास्वेव विपुलानुरक्तिस्तस्यासीत्—

परुषा संस्कृतबन्धाः प्राकृतबन्धो भवति सुकुमारः ।
पुरुषमहिलानां यावदन्तरं तावदिति मानम् ॥ इति
तत्पद्येन कर्पूरमञ्जरीस्थेन स्फुटमेव बोभवीति ।

## स्वभावः ।

सरसः, प्रकृतिपर्यवेक्षणचातुरीधुरीणः, शान्तो मृदुरनाग्रही च । यतोऽयं शिवादित्रयेऽप्यैक्यमनुभवन् हरविलासग्रन्थे स्वमतमुट्टङ्क-याञ्चकार । तथा स्वाभिमानी चेत्यपि अवगच्छामः ।

तथाहि--

बभूव वल्मीकभवः कविः पुरा, ततः प्रपेदे भुवि भर्तृमेण्ठताम् ।
स्थितः पुनर्यो भवभूतिरेखया, स वर्त्तते सम्प्रति राजशेखरः ॥

तथा चायमपूर्ववस्तुसमुद्भासनरसिकः । यस्माद्ग्रन्थादौ अदृ-ष्टचरमश्रुतपूर्वं वस्तु उपस्थापयताऽनेन जनमनांसि विस्फारितानि क्रियन्ते इति ग्रन्थमवलोकयतां सुविदितमेवाऽस्ते ।

## रचनाशैली।

अभिनववस्तुसमुत्प्रेक्षणेन ग्रन्थेषु पदे २ प्रतीता भवति। परं काव्यमीमांसयास्य रचनाशैलीं केवलमुपसन्धारयामः। अस्य भाषा प्रसादवती अर्थमाहात्म्यनिर्भरा वर्त्तते। तथाचात्रत्यग्रन्थपर्यालोचनेनेत्थं प्रतीमो यदयं ग्रन्थकारः समालोचनस्वरूपया प्रगत्या जगति विलक्षणव्यक्तित्वमाकलयितुम्, अपूर्वभारतीभूरिवैभवं सन्दिदृक्षुः, परप्रणोतानि वचांसि चिन्वन्, अपरादर्शमनुतिष्ठासुः, अपूर्वपदार्थग्रामपरिसरे जगामेति।

यद्यपि अत्रत्यं वस्तु नापूर्वं नानाकलितं तथापि रामणीयकतया विलक्षणतया ससंगतिकतया च अपूर्वमिव अनाकलितमिव प्रतिभासत् विषयस्य प्रौढिभावमाचामयति स्वान्तमापाततः। परं तत्वाङ्कुरलोचनचणेभ्यो न निभृतं यत् कियदुद्भिन्नं स्वमलभदयमिति। नात्र बहु वक्ष्यामः कामसूत्रार्थशास्त्ररुद्रटकाव्यालङ्कारकाव्यपुरुषावतारप्रभृतिलक्षतद्ग्रन्थसमीक्षाकाणां सूक्ष्मेक्षिकया निरीक्षयतां समक्षम्। ते तद्ग्रन्थानेव साक्षीकुर्वन्तु इति प्रार्थयामहे। एवंसत्यपि नावमानना नासूयापि स्मरणीया भवति, किन्तु श्रुतेः सनाम्नोऽस्य ग्रन्थस्य राजशेखरत्वमेवावगमयति।

## अस्या विवृतिः।

उपर्युक्तस्वरूपे ग्रन्थे निरालोके सन्तमसावृते पथि व्रजतः सर्वत्र-ईश्वरानुस्यूतिरिव टीकाविरहिते मूलग्रन्थलेखकप्रमादात् कलिताण्डवाद्वा यन्त्रालयीयभूतलीलया वा स्थले२ जटिलवहुलदोषाकुले विवृतिं कुर्वतो मम **गुरुवर श्रीवालकृष्णमिश्र चरणदर्शितपथानुभूतिरेव** शरणं वलं चासीत्।

तथापि मदीयधर्मपत्न्याः श्रीमत्याः साग्रहोत्साहप्रदानं मुख्यतममस्या विवृतेः निर्माणकारणम्। हा हन्त सा अस्या पूर्त्तिमदृष्ट्वैव दुःखवहुलमिदं जगद्, नश्वरं शरीरं शोकविकलान् अस्मांश्चासमये विहाय देवभूयमापत्। तच्छोकविधुरैरस्माभिः कथं कथमपि संस्खलितया

मत्यापूरितया अनया कृत्या सावश्यं प्रसत्स्यति एवं विकलानस्मान् स्वात्मकलया शोकादुद्धरिष्यति—

"अपि दोषपरम्परावृता जयकृष्णेन हि श्रेष्ठिनोद्धृता ।
विबुधैर्हठतापराङ्मुखैः कथमालोच्य सुनिश्चितीकृता ॥
पदलब्धिकृते समादराद् बहुशश्छात्रशतेन घोषिता ।
विवृतिर्मुदमादधात्वियं तव यत्नस्तवकैः त्रिनिःसृता" ॥

प्रथमतः शोकेन वैकल्यमेव स्खलितेः प्रधानं कारणम् । परं दृश्यते च स्वाधीनस्यापि—

गच्छतः स्खलनं क्वापि भवत्येव प्रमादतः ।

किन्तु—

हसन्ति दुर्जनास्तत्र समादधति सज्जनाः । इति

विदुषामाश्रवो

**मधुसूदनमिश्रः ।**

राधाकृष्ण-संस्कृतमहाविद्यालय

खुरजा ( बुलन्दशहर )



॥ श्रीः ॥

# काव्यमीमांसा

## मधुसूदनी-विवृति-सहिता ।

### कविरहस्यम् ।

### प्रथमोऽध्यायः

## शास्त्रसंग्रहः १

अथातः काव्यं मीमांसिष्यामहे, यथोपदिदेश श्रीकण्ठः परमेष्ठिवै-

---

॥ श्रीः ॥

अग्निष्टोममुखा यज्ञाः संस्कारा देवता अपि
यमाश्रित्योपजीवन्ति सोऽग्निः शं विदधातु मे ।
मीमांसान्यायशास्त्रज्ञं वेदवेदान्तपारगम्
पितरं रामजीलालं नमामि गुणिनां वरम् ॥
सर्वतन्त्रस्वतन्त्राणां श्रीदामोदरशास्त्रिणाम्
गुरूणां चरणौ वन्दे मध्वाचार्यपदे स्थितौ ।
स्तौमि देवीप्रसादं यश्छात्राणां वृन्दशः कृते
तरणिः संतितीर्षूणां साहित्यामृतसागरम् ॥
बालकृष्णगुरून्नौमि सर्वविद्यास्वरूपिणः
अज्ञानासुरनाशाय कृष्णो व्याजेन सोतरत् ।
यद्वचोमन्थमादाय गम्भीरं शास्त्रवारिधिम्
निर्मथ्य विपुलं रत्नं प्रापुश्छात्राः सहस्रशः ॥

कुण्ठादिभ्यश्चतुःषष्टये शिष्येभ्यः । सोऽपि भगवान्स्वयम्भूरिच्छाजन्मभ्यः

---

दुर्व्याख्यां काव्यमीमांसां पूर्वैरविवृतामपि
विवृणोमि यथाबुद्धि वालव्युत्पत्तिहेतवे ।

आरिप्सितस्य ग्रन्थस्य निरन्तरायपरिसमाप्तये सदाचारपरम्परापरिप्राप्तं श्रुत्या श्रेयःसाधनं मंगलं शिष्यशिक्षायै ग्रन्थघटकीकुर्वन् श्रोतृप्रवृत्त्यर्थं विषयसम्बन्धप्रयोजनान्याह--*अथेति* । अथशब्दो ऽत्रारम्भार्थः । तथाच काव्यस्य मीमांसा आरभ्यत इति पर्यवसितम् । मंगलं तु नास्याभिधेयोर्थः, किन्तु श्रुत्यास्य मंगलप्रयोजकता । तदुक्तम् । शारीरकभाष्ये 'अर्थान्तरप्रयुक्तोऽथशब्दः श्रुत्या मंगलप्रयोजनो भवतीति । ओंकारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा । कण्ठं भित्वा विनिर्यातौ तस्मान्मांगलिकावुभावित्यनेनापि तस्य श्रवणेनैव मंगलसाधनत्वमुक्तं भवति । अतः शब्दो हेतुवचनः । एवं हि शब्दसाधुत्व-पदार्थज्ञानादिकारणी-भूतपाणिनीय-कणभुजीयादि-मतपर्यालोचनानन्तरं यतः काव्यं निर्मातुमालोचयितुं च जिज्ञासोदयः, अतो हेतोः काव्यं लोकोत्तरं कविकर्म । यदुक्तम्--

प्रज्ञानवनवोन्मेषशालिनी प्रतिभा मता ।
तदनुप्राणनाज्जीवद्वर्णना-निपुणः कविः ॥
तस्य कर्म स्मृतंकाव्यम् । इति ।

मीमांसिष्यामहे कथमिदं काव्यामृतमादौ लोके प्रसृतं, कान्यस्य कारणानि, कीदृशो न्तेवासिनोऽस्य ग्रहणे योग्याः, के चास्यारचनोपायाः, कियन्तोऽस्य भेदाः, किमात्मकं चेदमित्यादि सर्वं विवेक्ष्यामहे । एवं मीमांस्यं काव्यं विषयः, तज्ज्ञानं प्रयोजनम्, प्रतिपाद्यप्रतिपादकभावः सम्बन्धः ।

अस्य शास्त्रस्य परम्परां सूचयन्नागमविशुद्ध्यर्थं गुरुपूर्वक्रमं दर्शयति-*यथेति* । यथा यादृशं काव्यं, श्रीः हलाहलधारणजन्या शोभा कण्ठे यस्यासौ महेश्वरः, परमेष्ठी ब्रह्मा विगता कुण्ठा प्रतिबन्धिका शक्तिर्यस्यासौ विष्णुः । अनयोरितरेतरयोगद्वन्द्वः । तौ आदी येषां तेभ्यः तथाभूतेभ्यः । आदिशब्दात् रुद्रगुहबृहस्पतिभार्गवादीनां ग्रहणम् । चतुः षष्टये "विंशत्याद्याः सदैकत्वे सर्वाः संख्येयसंख्ययो" रिति कोषादेकवचनम् । शिष्येभ्य उपदिदेश अनुशशास, तादृशं काव्यं, मीमांसिष्यामह इति पूर्वेणानुषंगः । *सोपीति*-सोपि श्रीकण्ठादूगृहीतोपदेशोऽपि भगवान् षडैश्वर्यसम्पन्नः, तदुक्तम् ।

ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः ।
ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा ॥ इति ।

स्वयम्भूर्ब्रह्मा । इच्छातो जन्म येषां तेभ्यो मनसा निर्मितेभ्यो मरीच्यादिभ्यः ।

स्वान्तेवासिभ्यः। तेषु सारस्वतेयो वृन्दीयसामपि वन्द्यः काव्यपुरुष आसीत्। तं च सर्वसमयविदं दिव्येन चक्षुषा भविष्यदर्थदर्शिनं भूर्भुवःस्वस्त्रितयवर्त्तिनीषु प्रजासु हितकाम्यया प्रजापतिः काव्यविद्याप्रवर्त्तनायै प्रायुङ्क्त। सोऽष्टादशाधिकरणीं दिव्येभ्यः काव्यविद्यास्नातकेभ्यः सप्रपञ्चं प्रोवाच। तत्र कविरहस्यं सहस्राक्षः समाम्नासीत्, औक्तिकमुक्तिगर्भः, रीतिनिर्णयं

---

स्वे आत्मीया अन्तेवासिनः छात्रास्तेभ्यः, उपदिदेशेति शेषः। *तेष्विति*-तेषु शिष्येषु सारस्वतेयः सरस्वतीपुत्रः। स्त्रीभ्यो ठक्। वृन्दीयसां देवानाम्। वृन्दारकशब्दादियसुनि प्रियस्थिरोरुबहुलेति वृन्दादेशः। वन्द्यः पूज्यः। काव्यप्रवर्त्तकः पुरुषः काव्यपुरुषः। अयमेवादौ लोके काव्यं प्रवर्त्तितवान्। तथाच वक्ष्यति ग्रन्थकृत् अनुपदमेव तमित्यादिना। त्वदुपज्ञमथातःछन्दस्वद्वचः प्रवर्त्स्यति, इत्यादिना सरस्वत्युक्तत्वाच्च। अथवा काव्यरूपः पुरुषः काव्यपुरुषः। काव्यैकरूपत्वाच्च सारस्वतेयेऽपि काव्यपुरुष इति भक्त्या प्रयुज्यत इति ग्रन्थकारोक्तेः। आसीत् अभवत्। *तंचेति*। सर्वान् समयान् सिद्धान्तान् "समयः शपथाचारकालसिद्धान्तकोविदाः" इत्यमरः वेत्तीति तम्। अखिलसिद्धान्तज्ञातारम्। दिव्येन चक्षुषा दिव्यदृष्ट्या भविष्यदर्थस्य दर्शिनं दर्शकं तं पूर्वोक्तम्। भूर्भुवःस्वस्त्रयोलोकाः। तत्त्रितयवर्त्तिनीषु प्रजासु आसां मध्य इत्यर्थः। हितकाम्यया आसामेवोपकारेच्छया। काव्यस्योपयोगिनी विद्या काव्यविद्या काव्यनिर्माणपर्यालोचनोपदेशिकेति यावत्। तस्याः प्रवर्त्तनायै तां प्रसारयितुमित्यर्थः। प्रजापतिर्ब्रह्मा प्रायुंक्त न्ययुंक्त *सेति*। स प्रजापतिनियुक्तः। अष्टादश अधिकरणानाम्। अधिक्रियन्ते विषयीक्रियन्तेऽवान्तरप्रमेयरूपाणि प्रकरणानि येषु तेषां समाहारस्तामष्टादशाधिकरणीम्, अष्टादशाधिकरणेषु विभक्तावयवाम्। काव्यविद्यां दिव्येभ्यः स्वर्गसमुद्भूतेभ्यः। ये कवित्वकामाः काव्यविद्योपविद्याग्रहणाय गुरुकुलमुपासते ते तद्विद्यायां स्नातकास्तेभ्यः। सप्रपञ्चं सविस्तरं प्रोवाच उपदिदेश।

तेभ्यः प्रोवाचेति सम्मुग्धाकारेणोक्तम्, कस्मै किं प्रोक्तं तत्र केन किमभ्यस्तमिति जिज्ञासायामाह—*तत्रेति*। तत्र तेषां काव्यविद्यास्नातकानां मध्ये सहस्राक्ष इन्द्रः कवीनां रहस्यं मार्मिकं वस्तु यस्मिन्नस्तीति। अर्शादित्वादच्। तन्नामाधिकरणं समाम्नासीत् अभ्यास्थत। समाम्नासीदित्यस्य सर्वत्रोत्तरत्रानुषंगः। तत्र कविभिः कथं व्यवहर्त्तव्यम् कथं कीदृशे च काव्यनिर्माणादौ प्रयतनीयम्, इत्याद्युपदेशकं यत् शास्त्रसंग्रह इत्यारभ्य भुवन कोश इत्येतावत्पर्यन्तं ग्रन्थकृन्निर्दिष्टं प्रथमाधिकरणं कविरहस्यं तादृशं किमपि पपाठेत्यर्थः। उक्तिः उच्चारणक्रियालक्षणं "पठन्ति लभटं लाटाः" इत्यादिपाठप्रतिष्ठारूपमभिधानं सा व्याख्यायतेऽस्मिंस्तदधि-

सुवर्णनाभः, आनुप्रासिकं प्रचेता, यमकं यमः, चित्रं चित्राङ्गदः, शब्दश्लेषं शेषः, वास्तवं पुलस्त्यः, औपम्यमौपकायनः; अतिशयं पाराशरः, अर्थश्लेषमुतथ्यः, उभयालङ्कारिकं कुबेरः, वैनोदिकं कामदेवः, रूपकनिरूपणीयं

---

करणमौक्तिकम्, उक्तिगर्भस्तन्नामा शिष्यः। रीयते क्षरति वाङ्मधुधारानया वा रिणन्ति गच्छन्ति गुणा अनयेति रीतिर्मार्गः। तस्या निर्णयः। त्रिविधा षड्विधा वेत्यादिरूपः यत्रास्तीति। अर्शाद्यच्। तन्नामाधिकरणं सुवर्णनाभः। रसाद्यनुगतत्वेन वर्णानां प्रकृष्ट आसः अनुप्रासः। स व्याख्येति पूर्ववत्। आनुप्रासिकमधिकरणं प्रचेता वरुणः। प्रचेता वरुणपाशीत्यमरः। यमं युग्मभावं कायतीति यमकं तदस्मिन्नस्तीति। अर्शाद्यच्। यमकाधिकरणं यमो यमराजः। मुद्रितपुस्तकेषु तु अत्रमहानपपाठः। मन्ये जीर्णपुस्तकाक्षरेषु सम्भ्रान्तत्वाद् विभिन्नयोः यमप्रचेतसोः प्रचेतायन इत्येकीकृत्य, तथा यमकानि चित्रं चित्रांगदः इति च मुद्रणा विहिता। अधिकरणनियतसंख्यासमसंख्याकत्वेन शिष्याणां परिगणनायां तेषां सप्तदशत्वमेव भवति। अतः प्रचेता यम इति विभज्य पाठ्यम्। यमकानि, इत्यत्र यमकमित्येकवचनान्तेन भवितव्यम्, अधिकरणस्यैकत्वात्। तत्रापि यमकं यम इत्येव सुपाठः। यत्तोऽत्र पूर्वं द्वितीयान्तस्य पश्चात्प्रथमान्तस्य पदस्य पाठो विहितः अतस्तथैव पाठो ज्यायान्, अन्यथा भग्नप्रक्रमाख्यो दोषः प्रसज्येत। यो हि आत्मानं कविराजं मनुते तस्य तु दोषकणिकापि निकारास्पदं किमुत साक्षाद्दोषः। वर्णस्थानस्वराकारगतिबन्धानुकूलो नियमश्चित्रमेतन्नामालङ्कारः। पद्मद्याकारहेतुत्वे वर्णानां चित्रमुच्यत इति दर्पणोक्तेः। तदस्मिन्नस्तीति पूर्ववत्। तदधिकरणं चित्राङ्गदः। शब्दस्य श्लेषः संभेदः। सोऽस्मिन्नस्तीति तदधिकरणं शेषः शेषनागः। वस्तु भावः। भावश्च क्रिया। एवं वस्तु भावं क्रियामितियावत्, वर्णनीयत्वेन अधिकृत्य कृतमधिकरणं वास्तवं स्वभावोक्तिसमन्वध्यधिकरणं पुलस्त्यः ब्रह्ममानसपुत्रातिरिक्तः कश्चनान्यः शिष्यः। तस्य तु काव्यपुरुषस्य सतीर्थ्यत्वात्। औ(१)पम्यमुपमैव (चतुर्वर्णादित्वात् स्वार्थे ष्यञ्) तदस्मिन्नस्तीति तदधिकरणम्, औपकायनः। अतिशयोऽस्मिन्नस्तीति सोतिशयः, अत्यन्तातिशयोक्तिनामकालंकारः तन्निरूपकाधिकरणं पराशरो व्यासपिता। अर्थस्य श्लेषोऽस्मिन्नस्तीति तदुतथ्योबृहस्पते ज्येष्ठभ्राता। उभयालंकारिकं शब्दार्थोभयनिष्ठोऽलङ्कारो व्याख्यायतेऽस्मिंस्तत्कुबेरः। विनोदो यासु ता वैनोदिकाः चतुःषष्टिकलायास्ता अस्मिन्नधिकरणे सन्ति तदधिकरणं चतुः षष्टिकलानाञ्चतुःशतोपकलानाञ्चोपदेशकमिति यावत् कामदेवः। रूपकाणां नाटकप्रकरणादीनां निरूपणं प्रयोगः

---

(१) औपम्यं हि नाम अन्येनान्यस्य सादृश्यमधिकृत्य प्रकाशनम्। इति चरके।

भरतः, रसाधिकारिकं नन्दिकेश्वरः, दोषाधिकरणं धिषणः, गुणौपादानिकमुपमन्युः, औपनिषदिकं कुचमारः, इति । ततस्ते पृथक् पृथक् स्वशास्त्राणि विरचयाञ्चक्रुः । इत्थङ्कारञ्च प्रकीर्णत्वात् सा किञ्चिदुच्चिच्छिदे । इतीयं प्रयोजकाङ्गवती सङ्क्षिप्य सर्वमर्थमल्पग्रन्थेन अष्टादशप्रकरणी प्रणीता ।

---

अभिनय इति यावत् रूपकनिरूपणम् । तदधिकृत्य कृतमधिकरणं भरतो नाटयशास्त्रप्रणेता । रसस्याधिकारः प्रकरणम् । तद् व्याख्यायत इति पूर्ववत् । एवं रसाधिकारिकमधिकरणं नन्दिकेश्वरः । दोषस्य निरूपकमधिकरणं दोषाधिकरणं धिषणः । गुणानामुपादानं ग्राह्यत्वं । गुणोपादानम् तद् व्याख्यायत इति पूर्ववत् । उत्तरपदवृद्धिश्च । उपमन्युः । उपनिषद् रहस्यम् । सा व्याख्यायतेऽस्मिंस्तदधिकरणमौपनिषदिकम् । कामस्य शास्त्रं द्विविधं । तंत्रावापभेदाभ्याम् । तत्र तन्त्र्यते जन्यते रतिर्येन तत्तंत्रमालिंगनादि । समन्तादावाप्यन्ते स्त्रियः पुरुषाश्च येन स आवापः संगमोपायः । ते यैरधिकरणैरुपदिश्येते तान्यपि ताभ्यां व्यपदिश्यन्ते । तदर्थत्वात् । एवं च सांप्रयोगिक-कन्यासंप्रयुक्तक-भार्याधिकारिक-पारदारिक-वैशिकाधिकरणानि तंत्रावापाभ्यां व्यपदिश्यन्ते । आभ्यामसिद्धे योषिदभिमुखी करणरूपकर्मणि औपनिषदिकं प्रयुज्यते । तच्च नायकयोः सुभगंकरणं, वशीकरणम्, वृष्यो योगाः, यत्र येषां स्वभावतः अवस्थाया वा नष्टो रागः प्रयोगात् प्रत्यानीयते तन्नष्टरागप्रत्यायनप्रकरणम्, लिंगवृद्धिविधयः अन्तर्धानादिसंपत्तये चित्रा योगाः, इत्येवंरूपविषयविभागसम्बलितमधिकरणम् । तत्कुचुमारः समाम्नासीत् अधिजगे । इतिः समाप्तौ ।

अध्ययनफलमाह—*तत इति* । ततोऽध्ययनानन्तरं ते सहस्राक्षादयः पृथक् पृथक् स्वाधीतविद्यां स्वेच्छाविषयीभूतविद्यां वावलम्ब्य शास्त्राणि ग्रन्था विरचयांचक्रुः ।

स्वस्य शास्त्रप्रणयनप्रवृत्तिकारणमाह—*इत्थमिति* । एवं पार्थक्येन शास्त्रप्रणयनात् प्रकीर्णत्वात् ग्रन्थानां विच्छिन्नत्वात् । प्रकीर्णं ग्रन्थविच्छेदः इति जटाधरः । सा काव्यविद्या किंचिदल्पमुच्चिच्छिद उच्छिन्ना । क्वचिद्दश्यमानत्वात् किञ्चिदिति निर्देशः । इति हेतोः प्रयोजकानि काव्यव्युत्पत्तौ कारणानि यानि अंगानि तदीयप्रधानफलजनकव्यापारजनकत्वे सति तदीयप्रधानफलाजनकत्वविशिष्टरूपाणि तद्वती इयं काव्यमीमांसा सर्वमर्थं संक्षिप्य अखिलं काव्यौपयिकं पदार्थजातं सूक्ष्मया दिशा निर्दिश्य अल्पग्रन्थेन स्वल्पसन्दर्भेण अष्टादश प्रकरणानां प्रक्रियन्ते प्रकर्षेण व्युत्पाद्यन्ते अर्था येषु तेषां समाहारः । अष्टादशप्रकरणी प्रणीता । प्रणीतेति स्वीयकविरहस्याधिकरणस्य पूर्णता सूच्यते ।

तस्या अयं प्रकरणाधिकरणसमुद्देशः । १ शास्त्रसङ्ग्रहः २ शास्त्रनिर्देशः ३ काव्यपुरुषोत्पत्तिः ४ शिष्यप्रतिभे । ५ व्युत्पत्ति-कवि-पाकाः, ६ पदवाक्यविवेकः, ७ वाक्यविधयः, ८ काकुप्रकाराः, ९ पाठप्रतिष्ठा, १० काव्यार्थयोनयः । ११ अर्थानुशासनं, १२ कविचर्या, १३ राजचर्या, १४ शब्दार्थहरणोपायाः, १५ कविविशेषः, १६ कविसमयः, १७ देशकालविभागः, १८ भुवनकोश, इति कविरहस्यं प्रथममधिकरणमित्यादि ।

इति सूत्राण्यथैतेषां व्याख्याभाष्यं भविष्यति ।
समासव्यासविन्यासः सैष शिष्यहिताय नः ।

---

*तस्या इत्यादिना* स्वग्रन्थस्यार्थावयवानाचष्टे--तस्या अष्टादशप्रकरणेषु स्वस्वरूपमाविर्भावयन्त्या काव्यमीमांसायाः अयं सन्दर्भ्यमाणः प्रकरणैर्घटितस्य अधिकरणस्य । मध्यमपदलोपी समासः । समुद्देशः संक्षेपेण निर्देशः संक्षिप्तस्वरूपक्रमेयत्ताख्यानमित्यर्थः क्रियते इति शेषः ।

*शास्त्रसंग्रह इति* । इमानि अष्टादशप्रकारणार्थबोधकानि तत्संख्याकानि सूत्राणि । अत्र मुद्रितपुस्तके त्रुटितः अस्तव्यस्तश्च पाठः, तथा पंचदश सूत्राणि वर्तन्ते, अस्माभिस्तु अध्यायान्ते ग्रन्थकृन्निर्दिष्टं नाम अध्यायोक्तविषयञ्चाकलय्य यथैषां सूत्राणां विच्छेदो माभवेत्तथा अष्टादशप्रकरणीयं प्रणोतेति प्रतिज्ञानुसारेण अष्टादश सूत्राणि सत्रुटिपूरणं यथाक्रमं निर्दिष्टानि सामान्यतो निगदव्याख्यातान्येतानि तत्तत्प्रकरणव्याख्यावसरे विशेषं व्याख्यास्यामः । इदन्तु अवधेयम् । अत्र कविरहस्ये अष्टादशाध्यायैः शास्त्रसंग्रह इत्यारभ्य देशकालविभाग इत्यन्तानि सप्तदश सूत्राण्येव ग्रन्थकर्त्रा व्याख्यातानि केवलं भुवनकोश इति सूत्रं व्याख्यातुं पृथग्ग्रन्थो विनिर्मितः तदुक्तं तेनैव सप्तदशाध्यायान्ते ।

इत्थं देशविभागो मुद्रामात्रेण सूचितः सुधियाम् ।
यस्तु जिगोषत्यधिकं पश्यतु मद्भुवनकोशमसौ । इति
इतिः स्वरूपे । कविरहस्यनामकं प्रथमधिकरणम् । इतिः समाप्तौ ।

ग्रथ्यमानस्य विशृङ्खलतानिरासपूर्वकं स्वरचनाशैलीमाह--*इतीति* इति एवमुक्तप्रकारेण सूत्राणि अर्थात् ग्रन्थस्य प्रकरणानि सूत्ररूपेण निर्दिष्टानि । अथ सूत्रानन्तरमेतेषां सूत्राणां व्याख्या भाष्यं च भविष्यति अस्माभिर्निर्मास्यत इति भावः । स एष नोऽस्माकम् । समासश्च व्यासश्चेति समासव्यासौ ताभ्यां विन्यासो विरचनं शिष्याणां छात्राणां हिताय बुद्धिवैशद्यरूपेष्टसाधनाय वर्त्तत इति शेषः । कथं समा-

चित्रोदाहरणैर्गुर्वी ग्रन्थेन तु लघीयसी ॥
इयं नः काव्यमीमांसा काव्यव्युत्पत्तिकारणम् ।
इयं सा काव्यमीमांसा मीमांसा यत्र वाग्लवे ।
वाग्लवं न स जानाति न विजानाति यस्त्विमाम् ॥
यायावरीयः सङ्क्षिप्य मुनीनां मतविस्तरम् ।
व्याकरोत्काव्यमीमांसां कविभ्यो राजशेखरः ॥

॥ इति राजशेखरकृतौ काव्यमीमांसायां कविरहस्ये प्रथमेऽधिकरणे प्रथमोऽध्यायः शास्त्रसङ्ग्रहः ॥

---

सव्यासावित्यत आह--*चित्रेति* । चित्रैर्ना नाभेदप्रभेदभिन्नैरूदाहरणैः प्रकृतार्थोपपादकदृष्टान्तैः गुर्वी महती अनेन व्यासो निर्दिष्टः । ग्रन्थेन तु शास्त्रेण ( ग्रथ्यते विरच्यते इति ग्रन्थः शास्त्रम् कर्मणि घञ् ) लघीयसी अल्पीयसी । तुर्भेदे ग्रन्थोदाहरणयो र्भेदोऽस्तीति भावः । एवं समासोप्युक्तः । प्रकरणान्तःपातिपदार्थक्रमनिश्चितत्वादव्यामोहः समासफलम् । ज्ञीप्स्यमानप्रकृतिपदार्थस्फुटविचारो व्यासफलम् । इदमेव समासव्यासविन्याससतत्वम् ।

ग्रन्थस्य फलमाह--*इयमिति* इयं बुद्धिस्था नोऽस्माकं काव्यमीमांसा काव्यव्युत्पत्तौ काव्यस्य विशिष्टज्ञाने -कारणं हेतुः । अधीतयानया काव्यस्य विशिष्टज्ञानं भवतीति सारः ।

एवं काव्यस्य फलमुक्त्वा सप्रतिज्ञं काव्यमीमांसापदं निर्वक्ति-इयमिति* इयं विरच्यमाना सा काव्यमीमांसा वर्त्तते इति शेषः।यत्र यस्यां वाचो वाण्या लवे खण्ड एकदेश इतियावत् अर्थात् महावाङ्मयस्यैकदेशे काव्ये मीमांसा पूज्यविचारः । किं नाम काव्यम्, उपदेष्टव्यं नोपदेष्टव्यं वा, काव्येषु वर्णनीयार्थाः कीदृशाः, तन्निर्मातारश्च कीदृशाः, इत्यादिविचारो ग्रन्थकर्त्रा करिष्यते । प्रतिज्ञामाह--*य इति* यस्तु ( तु समुच्चये ) यः कोपि इमां मया निर्मास्यमाणां काव्यमीमांसां न विजानाति स काव्यं न जानाति कविकाव्ययोः सूक्ष्माणां विधानां ज्ञानमेतदध्ययनेनैव भावि नान्यथा । तस्मात् काव्यबुभूत्सुभिरियमवश्यमादर्तव्येति भावः । अत्र मुद्रितपुस्तके मीमांसा यत्र वाग्लव इत्यत्र वाग्लव इति प्रथमान्तः पाठोऽपपाठः । सप्तम्यन्तः पाठःसाधीयान् । तत्सिसाधयिषया मीमांस्य इति कल्पने यमकभंगापत्तिर्दुर्वारा । तस्मात्स एव साधुः ।

स्वकीर्त्यनुवृत्तये स्वकुलनाम्नी सूचयन् स्वकपोलकल्पनाव्युदासार्थं पूर्वाचार्यसम्मतत्वमेतद्ग्रन्थस्य व्यवस्थापयति--*यायायावरीय इति* । यायावरीयो याया-

# द्वितीयोऽध्यायः

## शास्त्रनिर्देशः २

इह हि वाङ्मयमुभयथा शास्त्रं काव्यं च । शास्त्रपूर्वकत्वात् काव्यानां

---

वरकुलोत्पन्नः राजशेखर एतन्नामा कविः मुनीनां मतस्य शास्त्रस्य विस्तरं संक्षिप्य समासीकृत्य काव्यमीमांसां काव्यविषयकपूज्यविचारं कविभ्यः काव्यनिर्मातृपर्यालोचयितृभ्यः व्याकारोत् व्याख्यत् । यायावरस्य गोत्रप्रवर्त्तकस्य कस्यचिन्महापुरुषस्यापत्यं यायावरीयः एषा कुलाक्रमादागता संज्ञा । राजशेखर इति सांस्कारिकी संज्ञा । इतिः अध्यायसमाप्तिसूचकः । अध्यायः प्रमेयविरतिस्थानम् । प्रमेयविरतिस्थानमध्यायश्च प्रपाठक इति वैजयन्ती । इतिप्रथमोऽध्यायः ।

शारदां सारदां देवीं वन्दे वन्द्यपदां सदा
विशदा कौमुदी यस्याः सादयत्यनिशं तमः ।

अथ समुद्देशनिर्देशक्रमेण सूत्राणिव्याचिख्यासुः "न स शब्दो न तद्वाच्यं न सा विद्या न सा कला । जायते यन्न काव्यांगमहो भारो महान् कवेरित्यभिप्रायवान् अवसरप्राप्तं सूत्रमासूत्रयति--*शास्त्रेति* अनेन अनन्तरवक्तव्यत्वरूपावसरसंगतिरपि दर्शिता । शास्त्राणां निर्देशः शास्त्रनिर्देशः क्रियत इति शेषः । तत्तत्प्रसंगेन काव्येषु पृथक् पृथक् शास्त्रीयविषयस्य वर्णितत्वेन तेषां काव्यानां ज्ञानं दुर्लभम् । यथा साध्ये निश्चितमन्वयेन घटितमित्यत्र न्यायसिद्धान्तस्य, फलभाजि समीक्ष्योक्ते बुद्धेर्भोग इवात्मनीत्यत्र सांख्यस्य, स्वेद्यमामज्वरं प्राज्ञः कोऽम्भसा परिषिंचयेदित्यायुर्वेदस्य, मरणं प्रकृतिः शरीरिणां विकृतिर्जीवनमुच्यते बुधैरिति वेदान्तस्य ज्ञानमन्तरा एषां पद्यानां ज्ञानं दुर्लभमेव । अतस्तदथ शास्त्राणां नामतो निर्देशोऽस्माभिः क्रियते । प्रमेयभागस्तु तत्तद्गुरुभ्यो ज्ञेयः । इति भावः ।

तत्किं शास्त्रमित्यकांक्षायां वाङ्मयमुखेन तद्दर्शयति--*इह हीति* इह लोके वाङ्मयम् ( स्वरूपार्थे मयट् ) वाणीस्वरूपम् , उभयथा द्विविधं शास्त्रं काव्यञ्चेति, शास्त्रकाव्यभेदादित्यर्थः । केचित्तु शब्दस्य प्राधान्ये शास्त्रम् , अर्थस्य तत्त्व आख्यानम् , द्वयोर्गुणत्वे व्यापारप्राधान्ये काव्यम् , इति त्रिविधं वाङ्मयमाचक्षते । तदुक्तम् ।

शब्दप्रधानमाश्रित्य तत्र शास्त्रं पृथग्विदुः ।
अर्थे तत्वेन युक्ते तु वदन्त्याख्यानमेतयोः ॥
द्वयोर्गुणत्वे व्यापारप्राधान्ये काव्यगीर्भवेत् ॥ इति ॥

केचिदस्य चातुर्विध्यमाचक्षते । तथा चोक्तम् ।

शास्त्रं काव्यं शास्त्रकाव्यं काव्यशास्त्रं च भेदतः ।

पूर्व शास्त्रेष्वभिनिविशेत । नह्यप्रवर्त्तितप्रदीपास्तमसि तत्त्वार्थसार्थमध्यक्षयन्ति । तच्च द्विधा अपौरुषेयं पौरुषेयं च । अपौरुषेयं श्रुतिः । सा च मन्त्रब्राह्मणे । विवृतक्रियातन्त्रा मन्त्राः । मन्त्राणां स्तुतिनिन्दाऽऽख्यानविनियोगादिग्रन्थो ब्राह्मणम् । ऋग्यजुःसामवेदास्त्रयी । अथर्व तुरीयम् । तत्रार्थ-

---

चतुःप्रकारः प्रसरः सतां सारस्वतो मतः ॥ इति ॥

शास्त्रेति । काव्यानां, शास्त्रं पूर्वं प्रथमं येषां तेषां भावस्तत्वं तस्मात् विद्याप्राथम्यात् पूर्वं शास्त्रेषु न्यायादिषु अभिनिविशेत अध्यवस्येत्। पूर्वोक्तमर्थं दृष्टान्तेन समर्थयति *नहीति* । अप्रवर्तितः प्रदीपो यैस्ते अप्रज्वालितप्रकाशसाधनाः पुरुषास्तमसि अन्धकारे तत्वं वस्तुनस्तादात्म्यम्, अर्थो वस्तु, तयोः सार्थं समूहं नाध्यक्षयन्ति न प्रत्यक्षयन्ति । अन्धकारे पदार्थज्ञानाय प्रदीपानामिव काव्यार्थज्ञानाय शास्त्रणामावश्यकता इति भावः । शास्त्रं विभजते *तच्चेति* । तच्छास्त्रमपौरुषेयमेकम्, पौरुषेयमेकमिति द्विधा । अपौरुषेयं कर्तृत्वेन पुरुषसम्बन्धरहितम्, तथात्वादेवास्य अदुष्टत्वमनभिशंकनीयत्वञ्च । पौरुषेयं कर्त्तृत्वेन पुरुषसम्बन्धसहितम् । तथात्वादेवास्य दुष्टत्वम्, पुरुषाणां रागादिभिरविद्यया चोपप्लुतत्वात् । "किमिदं सत्यं मिथ्या वेति" अभिशंकनीयत्वं च । तथाचाहुः ।

दोषाः सन्ति न सन्तीति पौरुषेयस्य युज्यते ।
वेदे कर्त्तुरभावात्तु दोषशंकैव नास्ति नः ॥ इति ॥

अपौरुषेयस्य भेदोपभेदानुपवर्णयति *अपौरुषेयमिति* । अपौरुषेयम् पुरुषनिर्मितं यन्नभवतीति तत् श्रुतिर्वेदः । सा च मीनशरीरावच्छेदेन भगवद्वाक्यरूपा, इति नैयायिकाःधर्मब्रह्मप्रतिपादकापौरुषेयवाक्यरूपा, इति वेदान्तिनः, ब्रह्ममुखनिर्गतधर्मज्ञापकशास्त्रमिति पौराणिका वदन्ति । सा च । चोप्यर्थकः । श्रुतिरपि मंत्रश्च ब्राह्मणं चेति ते । विवृता विस्तृताः क्रिया यागादयस्तंत्राणि वेदशाखाविशेषाश्च यैस्ते मनानान्मंत्राः । यत्राभियुक्तानां विषयतासम्बन्धेन मंत्रपदवाच्यत्वप्रकारिकोपस्थितिः स मन्त्रः । मंत्रत्वमखण्डोपाधिर्वेदत्ववत्, इति तच्चोदकेषु मंत्राख्येति मीमांसासूत्रानुसारि लक्षणम् । मंत्राणां स्तुतेः प्रशंसायाः, निन्दायाः, व्याख्यानस्य निर्वचनस्य, विनियोगस्य विधेः, आदिशब्दात् हेतु-संशय परक्रिया-पुराकल्पा नां ग्रहणम् । तथाचैतेषां वोधको ग्रन्थो ब्राह्मणम् ।

वस्तुतस्तु ब्राह्मणस्य लक्षणं निर्देष्टुमशक्यम् । स्तुत्यादीनां मंत्रेऽपि दृष्टतया अव्याप्त्यतिव्याप्त्योरनिराकरणीयत्वात् । तद्यथा वायुर्वै क्षेपिष्ठा देवता इति स्तुतिः, अमेध्या वै माषा इति निन्दा, यदधात्तद्दध्नो दधित्वमिति व्याख्यानम् ( निर्वचनम् ) यजमानतसम्मितौदुम्वरी भवतीति विनियोगः । इत्यादयो यथा ब्राह्मणे तथा

व्यवस्थितपादा ऋचः। ताः सगीतयः सामानि। अच्छन्दांस्यगीतानि यजूंषि। ऋचो यजूंषि सामानि चाथर्वाणि त इमे चत्वारो वेदाः।

---

अग्निर्मूर्धादिव इति स्तुतिः, मोघमन्नं विन्दते अप्रचेता इति निन्दा, उदानिषु महीरिति तस्मादुदकमुच्यते इति व्याख्यानम् (निर्वचनम्) वसन्ताय कपिञ्जलानालभेत इति विनियोग इत्यादयो मन्त्रेष्वपि तस्मात् "शेषे ब्राह्मणशब्दः" इति मीमांसासूत्रानुसारि मंत्रातिरिक्तवेद एव ब्राह्मणम्। ऋकूच यजुश्च साम चेति ऋग्यजुःसामानि तान्येव वेदास्तथा। त्रयी गद्यपद्यगीत्यात्मकरचनाशाली वेदस्त्रयीशब्देन व्यवह्रियत इति भावः। तत्र गद्यात्मको यजुर्वेदः। पद्यत्मके ऋगथर्वणी। गीतिरूपं साम। तथाचोक्तम्।

विनियोक्तव्यरूपश्च त्रिविधः सम्प्रदर्श्यते।
ऋग्यजुःसामरूपेण मंत्रो वेदचतुष्टये॥ इति॥

*अथेति।* अथ लोकमंगलाय अर्व्यते प्रस्तूते यत् (अथपूर्वस्य अर्व्वतेः कर्मणि अनिपू शकन्ध्वादित्वात्पररूपम्) तत् भैषज्यराजनीत्यादिप्रतिपादको वेदः अथर्व तुरीयं चतुर्थम्। नपुंसकमथर्वपदाभिप्रायेण।

ऋगादीनां स्वरुपं निर्दिशति--*तत्रेति*। तत्र त्रय्या मध्ये अर्थेन अर्थवशेन अर्थात् एकान्वयित्वेन व्यवस्थिताः शास्त्रनिरूपितविधानमापन्नाः पादा अनष्टुबादयो यासु ता ऋच्यन्ते प्रस्तूयन्ते देवा आभिरिति ऋचः। यदुक्तम्, ऋक्प्रातिशाख्यवृत्तौ-

यः कश्चित्पादवान्मन्त्रो युक्तश्चाक्षरसंख्यया।
स्वरयुक्तोऽवसाने च तामृचं परिजानते॥इति॥

ता ऋचः सगीतयः गीतिभिः सहिताः स्यति छिनत्ति दुःखं गेयत्वात् वा स्यति दुःखयति दुरध्येयत्वात्, वा स्यति पापं ब्रह्माननिर्गतत्वात् साम। षोन्तकर्मणि इत्यस्मात् सातिभ्यां मनिन् मनिनौ--इति मनिन्। अच्छन्दांसि गद्यमयत्वात् अगीतानि गीतिरहितानि इज्यत एभिस्तानि यजूंषि। तदुक्तं तिथ्यादितत्वे। यन्मंत्रजातं प्रश्लिष्य पठितं गानादिविच्छेदरहितं तद्यजुरिति। परिगणय्यदर्शयति *ऋचइति।* ऋचो यजूंषि सामानि चाथर्वाणि त इमे पूर्वोक्ताश्चत्वारो वेदाः। वेदशब्दस्य बहुप्रकारा व्युत्पत्तयो वर्त्तन्ते तासु काश्चित प्रदर्श्यन्ते, विद्यन्ते ज्ञायन्ते धर्मादिपुरुषार्थचतुष्टयोपाया एभिरिति वा विद्यन्ते ज्ञायन्ते लभ्यन्ते धर्मादिपुरुषार्था एभिरिति वेदाः। अस्मिन् करणघञन्तपक्ष उञ्छादीनां चेत्यन्तोदात्तत्वम्। इष्टानिष्टप्राप्तिपरिहारयोरलौकिकमुपायं यो ग्रन्थो वेदयति स वेद इति कर्तृघञन्तपक्षे वृषादीनां चेत्याद्युदात्तत्वं वोध्यम्।

इतिहासवेदधनुर्वेदौ गान्धर्वायुर्वेदावपि चोपवेदाः । "वेदोपवेदात्मा सार्व-

---

इत्थं वेदान् प्रदर्श्योपवेदान् प्रदर्शयति--*इतिहासेति ।* इति ह पारम्पर्योपदेश आस्ते ऽस्मिन्, इति इतिहासः। (आधारे घञ्) तदुक्तम्--

धर्मार्थकाममोक्षाणामुपदेशसमन्वितम् ।
पूर्ववृत्तकथायुक्तमितिहासं प्रचक्षते ॥ इति ॥

सचासौ वेदः । धनुषो वेदः धनुर्वेदः । द्वयोरितरेतरयोगद्वन्द्वः । गन्धर्वस्येदं गान्धर्वम् तल्लक्षणं यथा ।

पदस्थस्वरसंघातस्तालेन संगतस्तथा ।
प्रयुक्तश्चावधानेन गान्धर्वमभिधीयते ॥ इति ॥

शरीरेन्द्रियसत्वादिसंयोगधारि जीवितमायुः । तस्य वेदः । आयुर्वेदः । वेत्ति विन्त्यो रेकस्मात् करणे घञ् । गान्धर्वश्चायुर्वेदश्च तौ । उपवेदास्तद्वत्पूज्यत्वात् तत्तुल्या इत्यर्थः। वेदनिर्देशक्रमेण उपवेदानां निर्दिष्टत्वात्तेषां क्रमशस्तदुपवेदत्वं सूचितम् । यथा ऋग्वेदस्य इतिहासवेदः । यजुषोः धनुर्वेदः । साम्नो गन्धर्ववेदः, अथर्वण आयुर्वेदः । चरणव्यूहेतु--ऋग्वेदस्यायुर्वेद इत्युक्तम् । अस्माकन्तूल्लेखः, इह खल्वायुर्वेदोनाम यदुपांगमथर्व्ववेदस्येति, विधाताथर्व्वसर्व्वस्वमायुर्वेदं प्रकाशयन्, इति सुश्रुतभावप्रकाशयोर्मताभ्याम् ।

एवं वेदोपवेदान् प्रदर्श्य परकीयमतेन नाटयस्यापि वेदत्वं व्यवस्थापयति-- *वेदेति* वेदाश्चोपवेदाश्चेति वेदोपवेदाः । ते आत्मानः जनकतया यस्यासौ । सर्व्वैर्वर्णैः पठितुं योग्यः । ( तदर्हतीति ठक् ) सार्ववर्णिकः पंचमो नाट्यवेदः नाटयसंज्ञो वेदः।

इति द्रुहिणस्य ब्रह्मण अयं द्रौहिणिः तदनुयायी भरतः। द्रौहिणिनामग्रहणं पूजार्थम् । अनेनेतदुक्तं भवति वेदेषु शूद्रादीनामनधिकृतत्वात् वेदोपवेदेभ्यः सारमाकृष्य तैरप्यध्येतुं शक्यः पंचमो नाटयवेदः ब्रह्मणा पृथक् ससृजे । तदुक्तं नाटयशास्त्रे ।

महेन्द्रप्रमुखैर्देवैरुक्तः किल पितामहः ।
क्रीडनीयकमिच्छामो दृश्यं श्रव्यं च यद्भवेत् ॥
न वेदव्यवहारोयं संश्राव्यः शूद्रजातिषु ।
तस्मात्सृजापरं वेदं पंचमं सार्ववर्णिकम् ॥
एवमस्त्विति तानुक्त्वा देवराजं विसृज्य च ।
सस्मार चतुरो वेदान् योगमास्थायतत्ववित् ॥
धर्म्यमर्थ्यं यशस्यं च सोपदेशं ससंग्रहम् ।
भविष्यतश्च लोकस्य सर्वकर्मानुदर्शकम् ॥

वर्णिकः पञ्चमो नाटयवेदः" इति द्रौहिणिः। शिक्षा, कल्पो, व्याकरणं, निरुक्तं, छन्दोविचितिः, ज्योतिषं च षडङ्गानि" इत्याचार्याः। "उपकारकत्वादलङ्कारः सप्तममङ्गम्" इति यायावरीयः। ऋते च तत्स्वरूपपरिज्ञानाद्वेदार्थानवगतिः।

---

सर्वशास्त्रार्थसम्पन्नं सर्वशिल्पप्रदर्शकम्।
नाट्यसंज्ञमिमं वेदं सेतिहासं करोम्यहम्॥
एवं संकल्प्य भगवान् सर्ववेदाननुस्मरन्।
नाट्यवेदं ततश्चक्रे चतुर्वेदार्थसम्भवम्॥
जग्राह पाठ्यमृग्वेदात सामभ्यो गीतिमेव च।
यजुर्वेदादभिनयान् रसानाथर्वणादपि॥
वेदोपवेदैः सम्बद्धो नाट्यवेदो महात्मना।
एवं भगवता सृष्टो ब्रह्मणा ललितात्मकः॥ इति॥

मुद्रित पुस्तकेषु त्वत्र गेयवेद इतिपाठो वर्त्तते। स तु अनवधानमूलः। नाट्यवेदैकदेशस्यापि तस्य गान्धर्ववेदरूपेण स्वतन्त्रतया स्वीकारात्, प्रत्युत एवमुपवर्णितस्वरूपस्य नाट्यवेदस्यैव द्रौहिणेरुक्तत्वाच्च। तथाहि।

पप्रच्छुस्ते महात्मानो नियतेन्द्रियबुद्धयः।
नाठ्यवेदः कथं ब्रह्मन्नुत्पन्नः कस्य वा कृते।
तेषां तद्वचनं श्रुत्वा मुनीनां भरतो मुनिः।
प्रत्युवाच ततो वाक्यं नाट्यवेदकथां प्रति।
श्रूयतां नाट्यवेदस्य संभवो ब्रह्मनिर्मितः। इति।

एवं वेदोपवेदान् परिगणय्य अंगानि परिगणयति *शिक्षेति*। एषां लक्षणमग्रे वक्ष्यति ग्रन्थकृत् स्वयमेव। षट् षट्संख्याकानि, अंग्यते उपक्रियत उपपाद्यते वेदार्थ एभिरिति अङ्गानि वेदार्थोपकारकाणि इति, आचार्य्याः धर्मार्थकाममोक्षवादिनः वदन्तीति शेषः। तदेवहि शिक्षादीनामङ्गत्वं नाम यद्वेदार्थस्योपपादकत्वमुपकारकत्वं वा। एवं चैतादृशमुपकारकत्वमलंकारेष्वपि वर्तते। तस्मादलंकारोऽपि। वेदस्य सप्तममंगम्–इत्याशयेनाह––*उपेति* उपकारकत्वाद्वेदार्थोपपादकत्वादलंकारोऽलंकारशास्त्रं सप्तममंगम्। इति,यायावरीयः। स्वनामकीर्तनेन मदुयज्ञ एवायमर्थः, इति ध्वन्यते। कथमलंकारस्यांगत्वमित्यत आह––ऋतेचेति। तस्य स्वरूपं तत्स्वरूपं तस्य परिज्ञानं तस्मात् काव्यस्वरूपाववोधाद् ऋते विना वेदार्थस्यानवगतिरपरिज्ञानम्। यथसो यं द्वासुपर्णाविति रूपा शास्त्रीया श्रौती उक्तिः दुर्वोधेति शेषः। अयं भावः विरुद्धशोका-

यथा—

"द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते ।
तयोरन्यः पिप्पलं स्वाद्वत्ति अनश्नन्नन्यो अभिचाकशीति ॥"

सेयं शास्त्रोक्तिः । प्रत्यधिकरणं च ऋचं यजुः सामाथर्वणं ब्राह्मणं चोदाहृत्य भाषामुदाहरिष्यामः । तत्र वर्णानां स्थानकरणप्रयत्नादिभिः

---

नन्दधर्मिणोरेकस्मिन् शरीरे नियम्यनियन्तृभावेन स्थितयोर्जीवेश्वरयोर्वैलक्षण्यं भगवती श्रुतिरतिशयोक्तिनामालंकारेणोपदिशति । यावच्चातिशयोक्तेः स्वरूपं न विज्ञायते तावदस्याः श्रुतेर्भावाकलनं दुःशकम् । तज्ज्ञानं च, अलंकारशास्त्राधीनम् । तस्मात सुष्ठूक्तम् उपकारकत्वादलंकारः सप्तममंगमिति ।

*द्वा सुपर्णाविति* । द्वा द्वावित्यर्थः । अत्र सर्वत्र सुपां सुलुगिति सूत्रेण औ स्थाने आ--इत्यादेशो विहितः । द्वित्वसंख्याविशिष्टौ पक्षिणौ जीवेश्वररूपौ सुपर्णौ शोभनपक्षशालिनौ । पक्षान्तरे वृक्षात् पृथग्भूतपक्षिणाविव देहात् पृथग्भूतौ । सयुजौ मिलितौ । पक्षान्तरे सदृशौ चिद्रूपत्वात् । सखायौ समानशीलव्यसनौ । पक्षान्तरेऽपि तथैव, अवियोगादुपकार्योपकारितया स्थितत्वाच्च । समानमेकम् । वृक्षं तरुम् पक्षान्तरे वृश्च्यत, इति वृक्षो देहः । ऊर्ध्वमूलमधः शाखमश्वत्थं प्राहुरव्ययम् । इति स्मृतेः । तं परिषस्वजात आश्रित्य स्थिताविस्यर्थः । तयोर्मध्येऽन्यो जीवरूपः । स्वादु मधुरं पक्षान्तर आपातरमणीयम् पिप्पलं पिप्पलस्य फलम् पिप्पलम् (फले लुक्) पक्षान्तरे कर्मफलं सुखदुःखादिकमत्ति भक्षयति अनुभवति । अन्य ईश्वररूपः अनश्नन् , अखादन् कर्मफलविषयोपभोगरहितः सन् अभिचाकशीति प्रकाशते नित्यानन्दतृप्तत्वात् अत्र जीवेश्वरयोः पक्षितादात्म्येनाध्यवसानात्तयोरतिशयः प्रतीयते, इति "निगीर्याध्यवसानं तु प्रकृतस्य परेण यदिति" स्वरूपातिशयोक्तिः । अप्रस्तुताभ्यां पक्षिभ्यां प्रस्तुतयोः जीवेश्वरयोः निगीर्य पृथगनिर्दिश्य अध्यवसानमाहार्याभेदनिश्चय इति लक्षणसंगतिः । भेदेऽभेदाध्यवसायात्मिकातिशयोक्तिरियम् । एनमेवार्थमधिकृत्य श्रीमद्भागवतेऽप्युक्तम् ।

सुपर्णावेतौ सदृशौ सखायौ यदृच्छयैतौ कृतनीडौ च वृक्षे ।
एकस्तयोः खादति पिप्पलान्नमन्यो निरन्नोऽपि वलेन भूयान् । इति ॥

प्रत्यधिकरणम्, अधिकरणमधिकरणं प्रतीति तथा । प्रत्येकाधिकरणे । भाषां लोकोक्तिम् । उदाहरिष्यामो निरूपयिष्यामः ।

प्राङ्निर्दिष्टषडंगानां लक्षणं निर्वक्ति *तत्रेति*। तत्र षडंगेषु वर्णानां कचटतपादीनां स्थानं ताल्वादि, करणं वाह्यप्रयत्नः, यत्न आभ्यन्तरप्रयत्नः, त आदयो येषां तैः

निष्पत्तिनिर्णयिनी शिक्षा आपिशलीयादिका। नानाशाखाधीतानां मन्त्राणां विनियोजकं सूत्रं कल्पः। सा च यजुर्विद्या। शब्दानामन्वाख्यानं व्याकरणम्। निर्वचनं निरुक्तम्। छन्दसां प्रतिपादयित्री छन्दोविचितिः। ग्रहगणितं ज्योतिषम्। अलङ्कारव्याख्यानं तु पुरस्तात्। पौरुषेयं तु पुराणम्, आन्वी-

---

निष्पत्तेः निर्णयिनी निश्चायिका शिक्षा। सा च आपिशलीयादिका। आदिपदात् पाणिनीययाज्ञवल्क्यादिनिर्मितानां ग्रहणम्। नानाशाखासु नैकविधवेदभागेषु। एकविंशतिः शाखा ऋचः, शतं शाखा यजुषः, सहस्रं शाखाः साम्नः, नव शाखा अथर्वणः, इत्येवं शाखानां नानात्वम्। अधीतानां पठितानां मंत्राणां विनियोजकं यो यमर्थमभिधानेन संस्कर्त्तुं समर्थो मंत्रस्तस्य तत्र विनियोग इत्येवं बोधकं सूत्रं कात्यायनबौधायनाश्वलायनापस्तम्बप्रभृतिनिर्मितं शास्त्रं कल्पो यागक्रियासमर्थक इतियावत्। सा पूर्वोक्ता कल्परूपा इज्यत इति यजुर्यजनं तस्य विद्या शास्त्रम्। शब्दानां सुप्तिङन्तपदानामन्वाख्यानं ( कर्त्तरि ल्युट् ) साधकं व्याक्रियन्ते व्युत्पाद्यन्ते साधुशब्दा अस्मिन्, इति व्याकरणम्, तदुक्तम्।

प्रकृतिप्रत्ययोपाधिनिपातादिविभागशः
पदान्वाख्यानकरणं शास्त्रं व्याकरणं विदुः। इति।

*निर्वचनमिति*। निर्वचनं निश्चयेन कथनं निरूक्तम्। वर्णागमादिभिर्निश्चयेनोक्तमित्यर्थः। उक्तञ्च यतः,

वर्णागमो वर्णविपर्ययश्च द्वौ चापरौ वर्णविकारनाशौ
धातोस्तदर्थातिशयेन योगस्तदुच्यते पंचविधं निरूक्तम्।

नन्वेवं निरूक्तं व्याकरणान्नातिरिच्यते वर्णागमादीनां तत्रापि दृश्यमानत्वात्। सत्यम्। किन्तु अर्थाभिधानसंयोगान्मंत्रेषु शेषशेषिभावः कल्प्यते। न हि निरूक्तादृतेऽन्यदंगं वान्यच्छास्त्रमस्ति तात्पर्येण यदशेषान् शब्दान् निर्ब्रूयात्। यच्च व्याकरणेषु निर्वचनं तच्छब्द मात्रस्यैव। तस्माच्छब्दमात्रनिर्वचनं व्याकरणम्। तात्पर्येण शब्दनिर्वचनं निरूक्तमिति भेदः। छन्दसामिति। चन्दयंत्याह्लादयन्ति ( चदि आह्लादे "चन्देरादे श्च छः" इत्यसुन् चकारस्य छः ) छन्दांसि ह्रस्वदीर्घयतिनियमबोधकवाक्यानि। तेषां प्रतिपादयित्री बोधिका छन्दोविचितिश्छन्दःप्रत्यायकं शास्त्रम्। *ग्रहेति*। ग्रहाणां गणितम्, ज्योतिः सूर्यादिग्रहाणां गत्यादिकं प्रतिपाद्यतयास्त्यस्मिन्निति ज्योतिषम्। अलंकारस्य काव्यशोभाकरधर्मस्य व्याख्यानं पुरस्तादग्रे पुस्तकान्तरे वक्ष्याम इतिशेषः। अस्मिन्नधिकरणेऽस्यादृष्टत्वा। *पौरुषेयमिति*। यद्यप्यंगानामपि पौरुषेयत्वं वर्त्तते तथापि शास्त्राभिप्राये-

क्षिकी, मीमांसा, स्मृतितन्त्रमिति चत्वारि शास्त्राणि । तत्र वेदाख्यानोपनिबन्धनप्रायं पुराणमष्टादशधा । यदाहुः—

"सर्गः प्रतिसंहारः कल्पो मन्वन्तराणि वंशविधिः ।
जगतो यत्र निबद्धं तद्विज्ञेयं पुराणमिति ॥"

"पुराणप्रविभेद एवेतिहासः" इत्येके । स च द्विधा परक्रियापुराकल्याभ्याम् ।

यदाहुः—

"परक्रिया पुराकल्प इतिहासगतिर्द्विधा ।

---

णेयमुक्तिः । अंगानां तूपशास्त्रत्वमतोऽतिक्रम्य पौरुषेयमित्युक्तिरिति न भ्रमितव्यम् । पुरा भवं पुराणम् । वेदव्यासप्रणीतं सर्गादिपंचलक्षणान्वितं शास्त्रम् । श्रवणात् प्रत्यक्षपरोक्षाभ्यां वेक्षितस्यार्थस्य अनु पश्चादीक्षा पर्यालोचनमन्वीक्षा । सा प्रयोजनमस्याः सा आन्वीक्षिकी अनुमानविद्या । मीमांसा पूज्यविचारकारिशास्त्रम् । वेदार्थस्मारकात्वात् स्मृतिः । तस्यास्तन्त्रं मन्वादिप्रणीतधर्मशास्त्रम् । इतीत्थंचत्वारि चतुः संख्याकानि शास्त्राणि विद्याः । तत्र पौरुषेयशास्त्रमध्ये । वेदसम्बन्ध्युपाख्यानस्य निवन्धनबहुलं पुराणं ब्राह्मपाद्मशैवभेदादष्टादशप्रकारम् । यदाहुः भारत इतिशेष ।

*सर्गइति* । यत्र येषु ग्रन्थेषु सर्गो महदंकारतन्मात्रादिनवधा सृष्टिः । प्रतिसंहारः प्रतिरूपः सर्गः । ब्रह्मणः सृष्टयनन्तरं दक्षादीनां सृष्टिः । तथाचोक्तम् ।

रुद्रो विराड् मनुर्दक्षो मारीच्याद्यास्तु मानसाः
यं यं सर्गं पृथक् चक्रुः प्रतिसर्गः स सम्मतः ।

*कल्पइति* कल्पयति नाशमिति कल्पः ससंधिचतुर्दशमनुसमयसम्मितः । स च श्वेतवाराहनीललोहितवामदेवप्रभृतित्रयस्त्रिंशत्संख्यात्मकः । मनोः स्वायम्भुवादेरन्तराणि अवसराः । वमत्युद्गिरति पूर्वपुरुषान् विद्यया जन्मना धनेन वाख्यातानां प्राणिनामेकलक्षणः संतानः, अपत्यधारा वा वंशः । तस्य विधिः । एतत्पंचकं निवद्धं तत्पुराणं विज्ञेयमिति ।

*पुराणेति* । पुराणप्रविभेद एव पुराणविशेष एव इतिहासः । इत्येक अचार्या वदंतीति शेषः । *सचेति* । सच पुराणविशेष इतिहासः परक्रियापुराकल्पाभ्यां द्विधा द्विप्रकारः । परिक्रियेर्ताकारघटितः पाठोऽपपाठः स्तुतिर्निन्दापरकृतिपुराकल्प इत्यर्थवाद इति गौतमसूत्रादिषु अकारघटितस्यैव दर्शनात् । एकानुवन्धी कथाविशेषः परक्रिया । अनेकानुवन्धी कथाविशेषः पुराकल्पः । यदाहुराचार्या इति शेषः ।

*परेति* । इतिहासः पुरावृत्तं तस्य गतिः स्वरूपम् । गतिशब्दोत्र स्वरूपार्थः ।

स्यादेकनायका पूर्वा द्वितीया बहुनायका ॥"

तत्र रामायणं भारतं चोदाहरणे । आन्वीक्षिकीं तु विद्यावसरे वक्ष्यामः । निगमवाक्यानां न्यायैः सहस्रेण विवेक्त्री मीमांसा । सा च द्विविधा विधिविवेचनी ब्रह्मनिदर्शनी च । अष्टादशैव श्रुत्यर्थस्मरणात्स्मृतयः । "तानीमानि चतुर्दश विद्यास्थानानि, यदुत वेदाश्चत्वारः, षडङ्गानि, चत्वारि शास्त्राणि" इत्याचार्याः । तान्येतानि कृत्स्नामपि भूर्भुवःस्वस्त्रयीं व्यासज्य वर्त्तन्ते । तदाहुः—

"विद्यास्थानानां गन्तुमन्तं न शक्तो जीवेद्वर्षाणां योऽपि साग्रं सहस्रम् ।
तस्मात्सङ्क्षेपादर्थसन्दोह उक्तो व्यासः संत्यक्तो ग्रन्थभीरुप्रियार्थम् ॥"

---

किरातेऽपि तदर्थो गतिशब्दो दृश्यते यथा—"चरतस्तपस्तव वनेषुसहा, न वयं निरूपयितुमस्य गतिम्" तव वनेषु तपश्चरतोऽस्य गतिं स्वरूपं निरूपयितुं न सहा इति मल्लिनाथः । द्विधा । परक्रियापुराकल्पभेदाभ्याम् । पूर्वा इतिहासगतिः परक्रिया, एको नायको नेता कथाया यस्यां सा एकनायका स्यात् । द्वितीया गतिः बहवो नायकाः कथाया यस्यां सा बहुनायका ।

*तत्रेति* । तत्र तयोर्मध्ये रामस्य चरितान्वितमयनं शास्त्रं रामायणम् । अत्र सर्वेषां कथाभागानां राममनुप्रवृत्तत्वात् स एवैकः प्रधानो नायकः । अतः परक्रियास्वरूपम् । भरता भरतवंशीया व्याख्यायन्तेऽस्मिन् । "तस्य व्याख्यान" इत्यधिकारेऽणृगयनादिभ्य इत्यण् । तद् भारतम् । अत्रत्याः कथाभागास्त तद्भीष्मादिनायकाननुप्रवृत्तास्ततो भीष्मद्रोणकर्णप्रभृतयो बहवो नायका अत एवेदं पुराकल्पस्वरूपम् । निगमो वेदः । तस्य वाक्यानां पदोच्चयानां सहस्रेण (एकवचनं विंशत्याद्या इतिवचनात्) सहस्रमित्यनेकोपलक्षणम् तेन अनेकैरिति यावत् । नीयन्ते प्राप्यन्ते विवक्षितार्था येनासौ न्यायो युक्तिस्तैः विवेक्त्री परस्परविरोधव्यावृत्या वस्तुस्वरूपनिर्णेत्री मीमांसा । सा मीमांसा द्विप्रकारा । एका विधेरहरहः संध्यामुपासीतेति वाक्यसमुदायस्य विवेचनी विचारयित्री । द्वितीया ब्रह्मणो निदर्शिनी प्रतिपादिकेति यावत् । श्रुत्यर्थस्मरणात् स्मृतयो मन्वादिप्रणीतधर्मशास्त्राणि अष्टादशैव । एवशब्दः सादृश्ये तेन मन्वाद्यष्टादशप्रणीतस्मृतिसदृशा अन्या अपि स्मृतयो गृह्यन्ते । तानीमानि निर्दिश्यमानानि चतुर्दश विद्यानां स्थानानि अधिकरणानि । कृत्स्नां सर्वाम् । भूरिति भूरादिलोकत्रयीं व्यासज्य व्याप्य वर्त्तन्ते । तदाहुराचार्या इति शेषः ।

*विद्येति* । यः कश्चित् साग्रंप्र धानं ।

अग्रं पुरस्तादुपरि परिमाणे पलस्य च

"सकलविद्यास्थानैकायतनं पञ्चदशं काव्यं विद्यास्थानम्" इति यायावरीयः। गद्यपद्यमयत्वात् कविधर्मत्वात् हितोपदेशकत्वाच्च । तद्धि शास्त्राण्यनुधावति। वार्त्ता कामसूत्रं शिल्पशास्त्रं दण्डनीतिरिति पूर्वैः सहाष्टादश विद्या-

---

आलम्बने समूहे च प्रान्ते च स्यान्नपुंसकम्

अधिके च प्रधाने च प्रथमे चाभिधेयवत्। इति मेदिनी।

वर्षाणामब्दानां "पुन्नपुंसकयोर्वर्षं जम्बूद्विपाब्दवृष्टिषु" इति रुद्रः। सहस्रमपि दिव्यं वर्षसहस्रमिति यावत् जीवेत् प्राणान्धारयेत्। तथापि विद्यास्थानानां शास्त्राधिकरणानामन्तं पारं गन्तुं यातुं न शक्तः समर्थः। तस्मात् शास्त्रपाराप्रापणात् संक्षेपात् समासेन अर्थानां सन्दोहः समूहः। "समूहनिवहव्यूहसन्दोहविसरव्रजाः" इत्यमरः। उक्तः कथितः ग्रन्थाच्छास्त्रात्, अर्थात् शास्त्रपठनाद् भीरवः सभयाः तज्जन्यायासेनेत्यर्थः। प्रियाः सुकुमारा वालाः। वालानामतिशयप्रीणनकारित्वात्प्रियेत्युक्तिः। तेभ्य इदम्। अर्थेन नित्यसमासो विशेष्यलिंगता चेत्यस्वपदविग्रहो नित्यसमासः। व्यासो विस्तरः संत्यक्तः। वालानां सुखबोधाय व्यासमुत्सृज्य संक्षेपेण सर्वे काव्योपयिकाः पदार्था निर्दिष्टा इति भावः। अथवा ग्रन्थात् ग्रन्थाध्ययनाद्, विषयवाचकपदेन विषयी लक्ष्यते। भीरुर्या प्रियावन्तिसुन्दरी तदर्थम्। इति।

काव्यमपि विद्यास्थानेष्वन्यतममिति व्यवस्थापयति। *सकलेति* सकलानां सांगानां विद्यास्थानानां वेदादीनां वर्णनाकोटिनिविष्टत्वात् एकायतनं काव्यं पञ्चदशं विद्यास्थानं शास्त्राधिकरणम्। कथं काव्यस्य विद्यास्थानत्वमित्यत आह-*गद्येति*। गद्यं च पद्यं चेति गद्यपद्ये त एव स्वरूपमस्येति स्वरूपार्थे मयट्। तस्य तस्यभावस्तत्वं तस्मात्। कवेर्धर्मो रचनात्मा। तस्य भावस्तत्वं तस्मात्। हितमुपदिशतीति कर्तरि ण्वुल्। तस्य भावस्तत्वं तस्मात्। तद्धि काव्यं हि शास्त्राणि विद्या अनुधावति अनुसरति। शास्त्रपूर्वकत्वात्काव्यानामित्युक्तेः। अनुधावन्तीति बहुवचनान्तोऽपपाठः। एतादृशपाठे शास्त्राणि काव्यमनुसरन्तीत्यनेन काव्यपूर्वकत्वं शास्त्राणामायाति तत्र युक्त्यागमविरोधः स्वोक्तिविरोधश्च। केचिदष्टादश प्राहुः विद्यास्थानानि तन्निर्दिशति· *वार्त्तेति*। वृत्तिर्जीविका यस्यामस्तीति ( प्रज्ञाश्रद्धार्चावृत्तिभ्यो णः इति णस्ततष्टाप् ) वार्ता कृषिगोरक्षवाणिज्याकुसीदरूपा। काम्यतेऽसौ ( कर्मणि घञ् ) कामस्तस्य सूत्रणात् सूत्रम्। शिल्पं कलादिकं कर्म। तस्य शास्त्रम्। इकारमध्यपाठे शिल्पिनां शास्त्रं शिल्पमेव। दण्डः आन्वीक्षिकीत्रयीवार्त्तानां योगक्षमेसाधनः। तस्यनीतिः नयः, अर्थात् तदुपदेशकं शास्त्रम्। इत्यादीनि चत्वारि विद्यास्थानानि। वेदतदंगादिभिः सह सम्भूयेत्यर्थः। विद्यास्थानान्यष्टादश इत्यपरे जगदुरिति शेषः।

स्थानानि" इत्यपरे। आन्वीक्षिकी त्रयी वार्त्ता दण्डनीतिश्चेति विद्याः। "दण्डनीतिरेवैका विद्या" इत्यौशनसाः। दण्डभयाद्धि कृत्स्नो लोकः स्वेषु स्वेषु कर्मस्ववतिष्ठते। "वार्त्ता दण्डनीतिर्द्वे विद्ये" इति वार्हस्पत्याः। वृत्तिविनयग्रहणं च स्थितिहेतुर्लोकयात्रायाः। "त्रयीवार्त्तादण्डनीतयस्तिस्रो विद्याः" इति मानवाः। त्रयी हि वार्त्तादण्डनीत्योरुपदेष्ट्री। "आन्वीक्षिकीत्रयीवार्त्तादण्डनीतयश्चतस्रो विद्याः" इति कौटल्यः। आन्वीक्षिक्या हि विवेचिता त्रयी वार्त्तादण्डनीत्योः प्रभवति। "पञ्चमी साहित्यविद्या" इति यायावरीयः। सा हि चतसृणामपि विद्यानां निस्यन्दः। आभिर्धर्मार्थौ यद्विद्यात्तद्विद्यानां विद्यात्वम्। तत्र त्रयी व्याख्याता। द्विधा चान्वीक्षिकी पूर्वोत्तरपक्षाभ्याम्। अर्हद्भदन्त-

---

*आन्वीति*—एषां स्वरूपं पूर्वमुक्तम्। परेषां विद्याविकल्पान्दर्शयति—*दण्डेति।* केवलं दण्डनीतिरेका विद्येति औशनसाः शुक्रशिष्याः। कुतः। हिरेवार्थः। तद्भयादेव सर्वा त्रिलोकी निजकर्मसु सावहिता प्रवर्तते। नत्वितरथा। अत एवाहुः। दण्डः सुप्तेषु जागर्ति।

सर्वो दण्डजितो लोको दुर्लभो हि शुचिः क्वचित्।
दण्डस्य हि भयात्कृत्स्नं जगद् भोगाय कल्पते। इति।

बृहस्पतिशिष्याणां मतमाह—वार्तादण्डेत्यादि। कुतः विनयमूलो दण्डः लोकानां-योगक्षेमावहः। इति भावः। मनुशिष्याणां मतं व्याकरोति—त्रयीति। त्रय्या उपयोग माह * त्रयीति * कौटल्यमतमवतारयति * आन्वीति * कुटलो नाम कश्चिदृषिस्तस्य गोत्रापत्यं यञ् कौटल्य इति। इकारघटितस्तु कुञ्चितत्त्वार्थकः। यथाचोक्तं नानार्थार्णवे।

अथ स्यात् कुटलो गोत्रकृदृषौ पुंसि नप् पुनः।
विद्यादाभरणेऽथ त्रिः कुटिलं कुञ्चिते भवेत्। इति।

आन्वीक्षिक्येति। वार्तादण्डनीत्योरुपदेशे प्रभवति। एवं प्रसंगात् साहित्यस्यापि चतुर्विद्यातिरिक्तत्वमुपदिशति। * पंचेति * साहित्यविद्या हि आन्वीक्षिक्यादिचतसृणामपि विद्यानां निस्यन्दः सारः। कथमिमा विद्या इति शंकामपनुदन् निर्वचनभङ्ग्या तत्वमास्थापयति—*आभिरिति*। विद्यात्वं धर्माद्यर्थवेदनकरणत्वम्। तत्पंचस्वपि समानम्। त्रयीव्याख्यानमुपसंहरति। *तत्रेति*—व्याख्याताः स्वरूपेण निर्दिष्टाः। एवं त्रयीं व्याख्यायान्वीक्षिकीं निरूपयति—*द्विधेति* पूर्वोत्तरयोर्द्वन्द्वः। ततः कर्मधारयः। एवं द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकमभिसम्बध्यते। इत्यनुसारात्। पूर्वपक्षेण, उत्तरपक्षेणेत्यर्थः। तत्र पूर्वं पूर्वपक्षं दर्शयति—*अर्हेति*। अर्हद्भदन्ताभ्यां निर्मिते दर्शने। मध्यमपदलोपी समासः। लोकेष्वायतं विस्तीर्णमिवेति। चार्वा-

दर्शने लोकायतं च पूर्वः पक्षः। साङ्ख्यं न्यायवैशेषिकौ चोत्तरः। त इमे षट् तर्काः। तत्र च तिस्रः कथा भवन्ति वादो, जल्पो, वितण्डा च। मध्यस्थयोस्तत्त्वावबोधाय वस्तुतत्त्वपरामर्शो वादः। विजिगीषोः स्वपक्षसिद्धये छलजातिनिग्रहादिपरिग्रहो जल्पः। स्वपक्षस्यापरिग्रहित्री परपक्षस्य दूषयित्री वितण्डा। कृषिपाशुपाल्ये वणिज्या च वार्त्ता। आन्वीक्षिकीत्रयीवार्त्तानां योगक्षेमसाधनो दण्डस्तस्य नीतिर्दण्डनीतिः। तस्यामायत्ता लोकयात्रेति शास्त्राणि। सामान्यलक्षणं चैषाम्—

---

कादिसम्मतं तर्कशास्त्रम्। चः समुच्चये। उत्तरपक्षमाह--*सांख्येति*। सम्यक् ख्यायते प्रकाश्यते वस्तुतत्वमनयेति संख्या सम्यक्ज्ञानम्। तस्यां प्रकाशमानमात्मतत्वं सांख्यं प्रकृतिपुरुषान्यताख्यातौ मोक्ष इति प्रतिपादकं कापिलं शास्त्रम्। नीयन्ते प्राप्यन्ते पदार्था अनेनासौ न्यायः। गौतममुनिप्रणीतं शास्त्रम्। विशेषमधिकृत्यकृतो ग्रन्थो वैशेषिकः कणभुक्प्रणीतं शास्त्रम्। न्यायश्च वैशेषिकश्च न्यायवैशेषिकौ। संगृह्णोते--*त इम इति* पूर्वोक्तषट्तर्कविषयं दर्शयति। *तत्रेति*। तत्र षट्तर्काणां मध्ये तिस्रः कथा नानावक्तृकपूर्वपक्षसिद्धान्तवद्वाक्यसंदर्भा भवन्ति। ताश्च वादेत्यादिकाः। वादादीनां स्वरूपं कथयति—मध्यस्थेति। मध्यस्थयोर्वादिप्रतिवादिशास्त्रार्थनिर्णेतृत्वेन मध्यगतयोः। परामर्शो निश्चयः। विजिगिषो र्जयैषिणोः स्वमतस्थापनाय छलस्य, जातेः, निग्रहस्य, आदिशब्दात्स्थानस्य परिग्रहः। स्वीकरणं यत्रासौ जल्पः। अपरिग्रहित्री अस्थापयित्री छलादिभिरन्यमतविदूषिका वितण्ड्यते विहन्यते परपक्षोऽनयासौ वितण्डा स्वपक्षास्थापना परपक्षव्युदास इतियावत्। इदमासां तत्वम् जल्पवितण्डे तु विजगिषोः शक्तिपरीक्षामात्रफले। वादस्तुवीतरागयोरपि गुरुशिष्ययोर्वा तत्वनिरूपणफलः इति। वार्तादीनां स्वरूपं निर्दिशति *कृषीति*। कृषिः क्षेत्रवीजवापपरिकर्मोपदेशकं शास्त्रं पाराशरम्। तथा चोक्तम्।

फलत्यवेक्षिता स्वर्णं दैन्यं सैषानवेक्षिता।
कृषिः कृषिपुराणज्ञ इत्युवाच पराशरः। इति।

पशुपाल्यं गवाश्वादिरक्षाप्रकारोपदेशकं शास्त्रम्। गौतमशालिहोत्रादिप्रणीतम्। अनयोरितरेतरयोगद्वन्द्वः। वणिज्या क्रयविक्रयव्यवहारः। तत्तन्त्रं विदेहराजप्रणीतमिति बोध्यम्। *योगेति*। अलभ्यलाभो योगः। लब्धसंरक्षणं क्षेमः। तयोः साधनः सिद्धिकर्ता। तस्यां दण्डनीत्यामायत्ता अधीना लोकयात्रा लोकव्यवहारः। इत्येवंरूपाणि शास्त्राणि वर्त्तन्ते इति भावः। एषां शास्त्राणां सान्यलक्षणं साधारणलक्षणमपि यथा--

"सरितामिव प्रवाहास्तुच्छाः प्रथमं यथोत्तरं विपुलाः ।
ये शास्त्रसमारम्भा भवन्ति लोकस्य ते वन्द्याः ॥"

सूत्रादिभिश्चैषां प्रणयनम् । तत्र सूत्रणात् सूत्रम् । यदाहुः—

"अल्पाक्षरमसन्दिग्धं सारवद्विश्वतो मुखम् ।
अस्तोभमनवद्यञ्च सूत्रं सूत्रकृतो विदुः ॥"

सूत्राणां सकलसारविवरणं वृत्तिः । सूत्रवृत्तिविवेचनं पद्धतिः । आक्षिप्य भाषणाद्भाष्यम् । अन्तर्भाष्यं समीक्षा । अवान्तरार्थविच्छेदश्च सा । यथास-

---

*सरितामिति* । सरितां नदीनां प्रवाहा जलस्रोतांसीव पूर्वं प्रथमं निर्झरनिर्गमनावसरे । पश्चान्तर आरम्भे तुच्छा ह्रस्वाः सूत्ररूपेण स्थितत्वात्संक्षिप्ताः यथोत्तरमुत्तरोत्तरं विपुला दीर्घा व्याख्याभाष्योदाहरणैर्विस्तृता ये शास्त्राणां समारम्भा उपक्रमा भवन्ति वर्त्तन्ते, ते लोकस्य जनस्य वन्द्या वन्दनीयाः । यथा सरितां प्रवाहा निर्झरनिर्गमनावसरेऽल्पाः स्थलविशेषं प्राप्य महान्तश्च भवन्ति, तथैव शास्त्रसमारम्भा अपि संक्षिप्ता विस्तृताश्च भवन्तीति भावः ।

पूर्वमुक्तं शास्त्रसमारम्भाः प्रथमं लघवस्ततो विपुलाः, तत्कथं लघुत्वविपुलत्व इत्यभिप्रायवानाह--सूत्रादिभिरिति । एषां शास्त्राणां प्रणयनं रचना सूत्रादिभिरादिशब्दाद्भाष्यवार्तिकवृत्तिप्रभृतिभिः भवतीतिशेषः । अयं भावः । सूत्रादिभिः सूक्ष्मता व्याख्याभाष्यादिभिः वैपुल्यं शास्त्राणां प्रणयने भवतीति ।

किंतत्सूत्रादिकमिति प्रसंगाच्छिष्यजिज्ञासायामुत्तरयति--तत्रेति । तत्र सूत्रादीनां मध्ये सूत्रणात्पदार्थस्यवेष्टनात् सूत्रम् ( सूत्र वेष्टने इति अच् ) यथावेष्टने स्थितं वस्तु अविश्रृखलं सत् संकुचितं सुरक्षितं तथा कीटादिकृतविकृतिशंकारहितं च भवति तथैतदपि सूत्रं अस्तोभमल्पाक्षरमसंदिग्धमनवद्यं वर्त्तते । यदाहुरग्निपुराणे व्यासपादाः ।

*अल्पेति* । अल्पाक्षरम्, असन्दिग्धम्, बहूनामपि लक्ष्याणां साधुत्वबोधनात् सारवत्, क्वचिदनुवृत्त्या क्वचिच्चापकर्षणात्पूर्वत्र परत्र चानुग्राहकत्वाद्विश्वतोमुखम् । अस्तोभं निरर्थकशब्दशून्यम्, अत एवानवद्यम्, एवंभ्भूतं सूत्रं सूत्रकृतो विदुः ।

*आक्षिप्येति* । लक्ष्यानुरोधान्नवनियमनिर्माणमन्यथा स्थितस्य खण्डनं व्याख्यानान्तरं चाक्षेपः । तं कृत्वा । समीक्षा भाष्यमध्ये भवति । किंतस्याः स्वरूपमित्याकांक्षायामाह--*अवान्तरेति । सा च समीक्षा च अवान्तरस्य प्रधानान्तःपातिनोऽर्थस्य विशेषेण ( छेदनं छेदः ) छेदनं कल्पनम्, "छेदनं कर्त्तने भेदे कल्पने वर्द्धनेऽपिच" इति हेमचन्द्रः । भाष्यमध्येऽवान्तरार्थविशिष्टकल्पनं समीक्षा, इति निष्कर्षः । यथास्थितपाठेयमर्थः । परन्त्वत्रत्यः पाठो विच्छिन्न इव प्रतिभाति ।

ग्भवमर्थस्य टीकनं टीका । विषमपदभञ्जिका पञ्जिका । अर्थप्रदर्शनकारिका कारिका । उक्तानुक्तदुरुक्तचिन्ता वार्त्तिकमिति शास्त्रभेदाः ।

"भवति प्रथयन्नर्थं लीनं समभिप्लुतं स्फुटीकुर्वन् ।
अल्पमनल्पं रचयन्ननल्पमल्पं च शास्त्रकविः ॥"

शास्त्रैकदेशस्य प्रक्रिया प्रकरणम् । अध्यायादयस्त्ववान्तरविच्छेदाः कृति-

---

नाश्चर्य्यम् । बहुकालात्यये दृढानामपि जीर्णता सम्पद्यते का कथा तालपत्राणां कर-स्पर्शेऽपि मर्मरितानाम् । एवमत्र पाठो भवेत । यथा अवान्तरार्थविच्छेदश्चूर्णिः । तथाच चूर्णिः महाभाष्यम् । चूर्णयति खण्डयति निखिलपण्डितानां तर्कमिति "घृणि-पृश्निपार्ष्णिचूर्णिभूर्णि" । इत्युणादिसूत्रेण निपात्यते । चूर्णिः पातञ्जलं व्याकरणं महाभाष्यम्, इतिलिंगादिसंग्रहटीकायां भरतः । चूर्णि भाष्यं करोतीति चूर्णिकृत् भाष्यकारः गोनर्दीयः पतञ्जलिः इति त्रिकाण्डशेषः । इत्थं च सामान्यविशेषाभ्यां भाष्यलक्षणं निरुक्तमिति पूर्वापरमविरुद्धम् । टीकनमिति । टीकेर्गत्यर्थत्वा ट्टीकनं बोध-नम् । *विषमेति* । विषमाणि दुरुहाणि पदानि भनक्ति, इति पंजिका । पच्यन्ते व्यक्तीक्रियन्तेऽर्था अनयेति । पृषोदरादित्वात्साधु । *उक्तेति* । उक्ताश्चानुक्ताश्च दुरुक्ताश्चेति, उक्तानुक्तदुरुक्तास्तेषां चिन्तनं चिन्ता वार्तिकम् ।

एवमुपदर्शितस्वरूपाणि शास्त्राणि कवनविषयभूततयाश्रित्य काव्यमार्गे विहरति स शास्त्रकविर्भवतीत्यभिप्रायेणाह । *भवतीति* । लीनं प्रच्छन्नमर्थं प्रथयन् विशदयन् समभिप्लुतमाकीर्णं सङ्गतिरहितमिव ज्ञायमानमस्फुटमिति यावत् स्फुटीकुर्वन् स्पष्टं कुर्वन् अनल्पं सविस्तरं वस्तु ( यथाप्रयोजनम् ) अल्पं रचयन् निर्मिमाणः, अल्पं च संक्षिप्तं च वस्तु ( यथाप्रयोजनम् ) अनल्पं सविस्तरं रचयन् निर्मिमाणः शास्त्रकविर्भ-वति । तमुपाधिं लभत इति भावः ।

अथ शास्त्राणि प्रदर्श्य शास्त्रैकदेशान् निरूपयति—*शास्त्रेति* । शास्त्रस्यैकदेशः शास्त्रैकदेशः । तस्य प्रक्रिया प्रस्तावोऽधिकारो वा । अध्यायेति—अवान्तरे मध्ये विच्छेदा विरामाः । एतत्स्वरूपा अध्याया इत्यर्थः । त आदिभूता येषां ते अध्याया-दयो ग्रन्थसन्धिप्रभृतयः । आदिशब्दात् सर्गादयोपि ग्राह्याः, तथाच संग्रहश्लोकः ।

सर्गो वर्गपरिच्छेदोद्घाताध्यायाङ्कसंग्रहाः ।
उच्छ्वासः परिवर्त्तश्च पटलः काण्डमेव च
स्थानं प्रकरणं चैव पर्वोल्लासाह्निकानि च
स्कन्धश्च स्तवकोद्योतौ पादोऽमी ग्रन्थ संधयः । इति ।

स्वतन्त्रतया यदृच्छया प्रणीता निर्मिता इत्यतोऽपरिसंख्यातुं योग्या गणयितु-मशक्याः, अनाख्येया आख्यातुं दुःशकाः ।

भिः स्वतन्त्रतया प्रणीता इत्यपरिसङ्ख्येया अनाख्येयाश्च । शब्दार्थयोर्यथावत्सहभावेन विद्या साहित्यविद्या । उपविद्यास्तु चतुःषष्टिः । ताश्च कला इति विद-

---

ननु पञ्चमी साहित्यविद्येति प्रोक्तं किन्तु स्वरूपं न निर्दिष्टं तत्किं तस्याः स्वरूपमिति जिज्ञासायामुत्तरयति—*शब्दार्थयोरिति*। यथावत् सहभावेन सहृदयाह्लादकारिपरस्परसुभगसाम्येन स्थितयोः शब्दार्थयोर्विद्या शास्त्रं साहित्यविद्या अलङ्कारादिप्रतिपादकशास्त्रम् । ताश्चेति । ताश्चतुःषष्टिरुपविद्याः कलाः सन्तीतित्येवं विदग्धानां वादः । चतुःषष्ट्युपविद्यानामेव कलात्वेन विद्वत्समाजे प्रसिद्धिरिति भावः ।

स विदग्धवादः काव्यस्य भक्त्या काव्यकर्त्तुराजीव उपजीवनम् । कलानां बहुशो वर्णनीयत्वाम् । अयं भावः । यथा विद्या अवश्यमुपादेया एवमधीतिबोधाचरणप्रचारणैरुपयोज्यास्तथैव कला अप्युपादेया उपयोज्याश्चेति विद्वत्समाजे प्रसिद्धिः । तथा प्रसिद्ध्यैव ता उपगृह्य अधीत्यादिभिरुपयुज्यन्ते स्थलविशेषमनुवर्ण्यन्ते च । अन्यथाऽज्ञाने कलानां तत्तत्स्थलेषूपनिबन्धनमशक्यमसम्भवि च । इति । इदं तु बोध्यम् यथा कलास्तथा उपकला अपि वर्त्तन्ते । तत्र कलाश्चतुःषष्टिः । उपकलास्तु चतुःशतम् । तत्र प्राधान्यत्केवलं कलानां निर्देशोऽस्माभि' क्रियते । अन्यास्तु आकरेभ्यो ज्ञातव्याः । विस्तरभीतैस्तु विरम्यते । यथा ।

नृत्तं गीतं तथा वाद्यमालेख्यं मणिभूमिका ।
दशनाद्यङ्गरागश्च माल्यगुम्फविचित्रता ॥
वेणुवीणादिकालापपाटवं शेखरक्रिया ।
नेपथ्यं गन्धयुक्तिश्च कर्णपत्रक्रियाभिधाः ॥
विशेषभेद्यक्लृप्तिश्च नानाभूषणयोजनम् ।
इन्द्रजालं कौचिमारं सामुद्रं हस्तलाघवम् ॥
सूचीवानक्रिया सूत्रक्रिया सलिलवाद्यकम् ।
सूदशास्त्रपरिज्ञानं शारिकाशुकवादनम् ॥
रसवादो वास्तुविद्या तक्षणं मेचिकोत्करः ।
सजीवनिर्जीवद्यूतशास्त्रसम्पाद्यपाटवम् ॥
धोरणो मातृकायंत्रं मातृकाकाव्यलक्षणम् ।
आकर्षकक्रीडितं च निमित्तागमवेदनम् ॥
अग्न्यम्बुसेनादिस्तम्भो विषप्रतिविषागमः ।
पांचालीनृत्तकरणं तण्डुलादिबलिक्रिया ॥
प्रहेलिका दुर्वचकप्रतिमायादियोजनम् ।
मन्त्रवादपरिज्ञानं विशीर्णाक्षरमुष्टिका ॥

ग्धवादः । स आजीवः काव्यस्य । तमौपनिषदिके वक्ष्यामः ।

इत्यनन्तोऽभियुक्तानामत्र संरम्भविस्तरः ।
त्यक्तो निपुणधीगम्यो ग्रन्थगौरवकारणात् ॥

॥ इति राजशेखरकृतौ काव्यमीमांसायां कविरहस्ये प्रथमेऽधिकरणे द्वितीयोऽध्यायः शास्त्रनिर्देशः ॥

---

सर्वाभिधानकोशोक्तिः परकायप्रवेशनम् ।
जयव्यायामचित्राप्तिः पत्रिकाचित्रकर्तनम् ॥
रत्नोत्पत्तिस्थानशास्त्रं दर्पणादिलिपिक्रिया ।
तिरस्करिण्याद्यावाप्तिः पुष्पशाटकिकागमः ॥
हस्त्यश्वलक्षणज्ञानं तिर्यग्घृदयवेदनम् ।
परेंगितपरिज्ञानं जलयानागमज्ञता ॥
परचेतःप्रवेशश्च चतुःषष्टिरिमाः कलाः ।
अन्या उपकलाः प्रोक्तास्तासां संख्या चतुःशतम् ॥
आभिरेव प्रपंचोयं वर्त्तते विजयी स्फुटम् ॥ इति ।

उपसंहरन्नाह--*इतीति* । इत्येवमत्र लोकेऽभियुक्तानां पण्डितानाम् । संरम्भः कृतिः । तस्य विस्तरः । अनन्तो वर्त्तते । निपुणा कुशला धी येषां ते निपुणधियस्तेषां गम्यः, सूक्ष्ममतिसंवेद्यः कृतिविस्तरः, वैशद्येन निरूपणे ग्रन्थविस्ताराद्धेतो स्त्यक्तः । "व्यासः सत्यक्तो ग्रन्थभीरुप्रियार्थमिति" पूर्वं प्रतिज्ञातत्वादुपेक्षितः । अयं भावः । ये कुशाग्रबुद्धयस्तैस्तु यत्र यस्योल्लेखस्तत एव तद्विषयो ज्ञास्यते । ये पुनर्दुर्बुद्धयस्तेषां कृते कैमर्थक एवोल्लखोपि, केवलं परतो ग्रन्थगौरवं पर्यवस्यति अतो यथाप्रयोजनं संक्षिप्य पूर्वं वर्णितो वर्णयिष्यते चेति ।

इति आहिताग्नि श्रीमधुसूदनशास्त्रिणः कृतौ मधुसूदनीविवृत्तौ द्वितीयोऽध्यायः ।

## तृतीयोऽध्यायः

# काव्यपुरुषोत्पत्तिः ३

एवं गुरुभ्यो गिरः पुण्याः पुराणीः शृणुमः स्म, यत्किल धिषणं शिष्याः कथाप्रसङ्गे पप्रच्छुः, कीदृशः पुनरसौ सारस्वतेयः काव्यपुरुषो वो गुरुः? इति। स तान् बृहताम्पतिरूचे।

पुरा पुत्रीयन्ती सरस्वती तुषारगिरौ तपस्यामास। प्रीतेन मनसा तां विरिञ्चः प्रोवाच पुत्रं ते सृजामि। अथैषा काव्यपुरुषं सुषुवे। सोऽभ्युत्थाय सपादोपग्रहं छन्दस्वतीं वाचमुदचीचरत्।

---

॥ श्रीः ॥

चिरानुशीलनाद्यस्य मन्दाश्च गुरुतां गताः।
साहित्यविद्यानुगतं वन्दे तं काव्यपूरुषम्।

अथ पूर्वाध्याये शास्त्रकाव्यभेदेन वाङ्मयस्य द्वैविध्यमुपवर्ण्य शास्त्रं तद्भेदाश्चोपदर्शिताः। इदानीं काव्यनिरूपणं परिशेषात्प्राप्तम्। तत्र काव्यनिरूपणप्रसङ्गे सिंहावलोकनवत् "सारस्वतेयः काव्यपुरुष आसीत्" इत्युक्तं संस्मर्य तस्य सरस्वत्या उत्पत्तिप्रकारमाख्यातुमुपक्रमते। *काव्येति।* इयं प्रकरणसंगतिरपि दर्शिता। काव्यपुरुषोत्पत्तिः, काव्यपुरुषस्य काव्यप्रवर्त्तकस्य काव्यरूपस्य वा पुरुषस्य उत्पत्तिर्जन्म, उपवर्ण्यतेऽस्मिन्नध्याये। इति सूत्रार्थः।

काव्यपुरुषस्योत्पत्तिविषयककथाप्रसङ्गं दर्शयति *एवमिति।* एवमित्थं कदाचित्कथाप्रसङ्गे पुण्याः पवित्राः। महापुरुषस्यावतारविशेषस्य जन्मप्रसङ्गिका इति पुण्यात्वनिर्देशो वाचाम्। पुराणीः प्राचीनाः। गिरो वाचः शृणुमः स्माश्रौष्म। यत् यथा। किलेति ऐतिह्ये। धिषणं बृहस्पतिं शिष्याः कथाप्रसङ्गे वार्त्तालापे यदा कदाचित्सादरं भवद्भिरुपवर्ण्यमानः सरस्वतीवरतनयो वो युष्माकमाचार्यो गुरुः काव्यपुरुषः कीदृशोऽस्ति। इति एवं पप्रच्छुः पृष्टवन्तः। एवंपृष्टः स बृहतां पतिं र्वाचां पतिः, "बृहती वाक् तस्या एष पतिः"। इति छान्दोग्योपनिषत्। ऊचे जगाद।

किमूच इत्याह-पुरेति। पुरा पूर्वस्मिन्काले पुत्रीयन्ती आत्मनः पुत्रमिच्छन्ती सरस्वती ( सरतीति सरो ज्ञानम्। तदऽस्यास्तीति सरस्वती ) ज्ञानाधिष्ठात्री देवी तुषारस्य गिरिस्तस्मिन् हिमाद्रौ तपस्यामास तपश्चकार। प्रीतेन तपसा प्रसन्नेन मनसा तां सरस्वतीं विरिञ्चो ब्रह्मा। ( विरञ्च विरिञ्च विरञ्चि विरिञ्चि—इति चत्वारोऽपि ब्रह्मपर्याया इति शब्दानुशासने हेमचन्द्रः ) हेसरस्वति ? ते त्वयि पुत्रं

"यदेतद्वाङ्मयं विश्वमर्थमूर्त्या विवर्त्तते।
सोऽस्मि काव्यपुमानम्ब पादौ वन्देय तावकौ॥"

तामाम्नायदृष्टचरीमुपलभ्य भाषाविषये छन्दोमुद्रां देवी ससम्मदमङ्कपर्यङ्के-नादाय तमुदलापयत्। "वत्स! सच्छन्दस्काया गिरः प्रणेतः! वाङ्मयमातरमपि मातरं मां विजयसे। प्रशस्यतमं चेदमुदाहरन्ति यदुत 'पुत्रात्पराजयो द्वितीयं पुत्रजन्म' इति। त्वत्तः पूर्वं हि विद्वांसो गद्यं ददृशुर्न पद्यम्। त्वदुपज्ञमथातः छन्दस्वद्वचः प्रवर्त्स्यति। अहो श्लाघनीयोऽसि। शब्दार्थौ ते शरीरं,

---

सृजामि, ते भक्त्या तुष्टोहं पुत्रकारणं बीजं निषिञ्चामि, गर्भमादधामीति भावः। अथ निषेकानन्तरमेषा पुत्रकामा सरस्वती काव्यपुरुषमेतन्नाम पुत्ररत्नं सुषुवे जनयामास। स जातमात्र एव, अभ्युत्थायाभ्युत्थानं कृत्वा। पादयोरुपग्रहेण सहितं चरणवन्दनपुरःसरम्। छन्दस्वतीं पद्यवद्धां वाचमुदचीचरत् अजीगदत्।

उच्चारिताया वाचः स्वरूपं निर्दिशति—*यदेतदिति। * हे अम्ब? मातः? यदेतत्पुरो दृश्यमानं विश्वमखिलं वाङ्मयं वाण्यास्ते स्वरूपं कर्तृ, अर्थमूर्त्या पदार्थस्वरूपेण विवर्त्तते समवायिकारणविलक्षणं कार्यमुत्पद्यते। सोस्मि विलक्षणकार्यरूपोहम्। अस्मीति अहमर्थकं विभक्तिप्रतिरूपकमव्ययम्। काव्यपुमान् काव्यपुरुषः तावकौ (तवेमौ तवकममकावेकवचन इति तवकादेशस्तस्येदमित्यण्) त्वदीयौ पादौ चरणौ वन्देय नमस्येय प्रणत्यै तव पादयोः पतामीति भावः।

आम्नायेषु वेदेषु पूर्वं दृष्टाम् इदानीं भाषाविषयेऽपि छन्दोवद्धां तां वाणीमुपलभ्य परिज्ञाय, देवी दिव्यस्वरूपा सरस्वती, सम्मदेन सहितं सानन्दम्। अङ्क उत्संग एव पर्यंकस्तेन आदाय गृहीत्वोदलापयत् उपाललत्। "वत्स! सच्छन्दस्काया पद्यरूपाया गिरः प्रणेतः? वाङ्मयमातरपि वाङ्मयजननीमपि। मातरं स्वजननीं मां पराभवसि मदपेक्षया उत्कर्षं लभस इति भावः। अत्यन्तप्रशस्तमिदं आभाणकमुदाहरन्ति यदुत पुत्रात् "पुन्नाम्नोनरकात्त्रायते ऽतौ पुत्रः" तस्मात् सूनोरपेक्षया अपकर्षः पराभवः द्वितीयं पुत्रस्य जन्म। पुत्रस्योत्कर्षे द्वितीयपुत्रोपलब्धिरिति भावः। इत्युदलापयदिति पूर्वेण सम्बन्धः।

एवमुल्लाप्य तस्मा आशीर्वदति—त्वत्त इति। त्वत्तो युष्मत् पूर्वं प्रथमे विद्वांसो विचक्षणाः गद्यं अनिबद्धं काव्यं ददृशुः। न पद्यं श्लोकं ददृशुरिति योगः। त्वदुपज्ञं त्वया प्रथमं ज्ञातम्। 'उपज्ञा ज्ञानमाद्यं स्यात्, इत्यमरः। उपज्ञोपक्रमं तदाद्याचिख्यासायामिति समासः। इदं छन्दस्वद्वचः। अथातः त्वदुत्तरं लोके, प्रवर्त्स्यति अहो इति सम्बोधने। अहो पुत्र? श्लाघनीयोऽसि शब्दार्थौ ते शरीरमस्तीति शेषः।

संस्कृतं मुखं, प्राकृतं बाहुः, जघनमपभ्रंशः, पैशाचं पादौ, उरो मिश्रम्। समः प्रसन्नो मधुर उदार ओजस्वी चासि। उक्तिचणं ते वचो, रस आत्मा, रोमाणि छन्दांसि, प्रश्नोत्तरप्रवह्लिकादिकं च वाक्केलिः, अनुप्रासोपमादयश्च त्वामलङ्कुर्वन्ति। भविष्यतोऽर्थस्याभिधात्री श्रुतिरपि भवन्तमभिस्तौति ॥

---

गीर्वाणी ते मुखम्। प्राकृतं बाहुः। अपभ्रंशो जघनं सक्थि। पैशाचं पादौ। मिश्रमुरः। संस्कृतादिमिश्रान्ता इमाः सर्वा भाषाः काव्यपुरुषस्यांगप्रत्यङ्गानि। तदुक्तं।

संस्कृतं प्राकृतं मिश्रं विकृतं भूतभाषितम्।
काव्यस्याङ्गत्वमायान्ति भाषाश्चैताः पृथक् पृथक्। इति।

त्वं यथावसरं सम उदासीनेषु, प्रसन्नो मित्रेषु, मधुरः कथाप्रसङ्गेषु, उदारोऽर्थिषु ओजस्वी शत्रुषु चासि भविष्यसि। उक्तिचणं वक्रोक्तिरूपमिति यावत् ते वचः, ते वाक्यं वक्रोक्तिरलंकार इति भावः। रस आत्मा अर्थात् आत्मस्थानीयः। छन्दांसि वृत्तानि रोमाणि रोमस्थानीयानि। प्रश्नोत्तरेति। प्रश्नोत्तरं च प्रवह्लिकाचेति प्रश्नोत्तरप्रवह्लिके। प्रवह्लिका प्रहेलिका इत्यमरः। इमे शब्दालंकृती। तदुक्तम्।

चित्रवक्रोक्त्यनुप्रासगूढश्लेषप्रहेलिकाः।
प्रश्नोत्तरं च यमकमष्टालंकृतयो ध्वनौ। इति।

ध्वनतीति व्युत्पत्त्या ध्वनौ शब्दे। तत्र प्रश्नोत्तरं वहिरन्तर्भेदेन द्विविधम्। इदमेव वहिर्लापिकान्तर्लापिकाभ्यां व्यवह्रियते। उदाहरणं सुभाषितेषु विततं तत्रैव द्रष्टाव्यम्। प्रहेलिका सकृत्प्रश्नः। सा च षोढा। तदुक्तम्।

प्रहेलिका सकृत्प्रश्नः सा च षोढा च्युताक्षरा।
दत्ताक्षरोभयं मुष्टिर्विन्दुमत्यर्थवत्यपि॥ इति।

कैश्चित्तु प्रहेलिकानां षोडश भिदा दर्शिताः। दुष्टप्रहेलिकाश्च चतुर्दश। तदुक्तम्।

एताः षोडश निर्दिष्टाः पूर्वाचार्यैः प्रहेलिकाः।
दुष्टप्रहेलिकाश्चान्यास्तैरधीताश्चतुर्दश॥ इति।

उदाहरणं सुभाषितेषु विततं द्रष्टव्यम्। ते आदौ यस्येति तत्। प्रश्नोत्तरप्रवह्लिकादिकं वाचां केलिः वाक्केलिः। अनुप्रासश्चोपमाचेति, अनुप्रासोपमे। ते आदि येषां तेऽनुप्रासोपमादयोऽलंकारास्त्वामलङ्कुर्वन्ति, अलङ्करिष्यन्ति। अलङ्कारा स्ते कंटककुण्डलस्थानीया भविष्यन्ति इति भावः। अत्र वर्त्तमानसामीप्ये वर्त्तमानवद्वेति भविष्यदर्थे वर्त्तमान प्रयोगः।

नायं वृत्तान्त इदानीमेव प्रतीयते किन्तु भगवत्या श्रुत्या पूर्वमेव वचनभंग्या प्रतिपादित इति प्रस्तौति—*भविष्येति। भाविनं पदार्थजातमभिदधती श्रुतिरपि

"चत्वारि श्रृङ्गास्त्रयोऽस्य पादा द्वे शीर्षे सप्तहस्तासोऽस्य।
त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्यानाविवेश॥"

"तथापि संवृणु प्रगल्भस्य पुंसः कर्म, बालोचितं चेष्टस्व" इति निगद्य निवेश्य चैनमनोकहाश्रयिणि गण्डशैलतलतल्पे स्नातुमभ्रगङ्गां जगाम। तावच्च कुशान् समिधश्च समाहर्त्तुं निःसृतो महामुनिरुशनाः परिवृत्ते पूषण्यु-

प्रस्तावमारचयति। श्रुतिस्वरूपं दर्शयति। *चत्वारीति* । अत्र गौणीलक्षणया उपमया चान्वयोपपत्तिः। तेनायमर्थः। चतुः संख्योपलक्षिता वृत्तयः प्रवृत्तयश्च क्रमश उभे श्रृंग इव। अयं भावः। शब्दार्थौ शरीरमित्युक्तम्। तत्र यथा वेषभाषाचारैरयं गौडो मैथिलो दाक्षिणात्य आङ्ग्ल इत्यापाततः श्रृङ्गग्राहितयानुसन्धीयते तथैव वृत्ति-प्रवृत्तिभ्यां काव्यगतः शब्दोर्थश्च। तथाहि । अर्द्धाद्र्रेत्यनेन गौडमहिलारूपोर्थः, ताट-ङ्केत्यत्र महोदयमहेलारूपोर्थः परिचीयते। तादृग्वेषस्तासामेवेति । एवं समासबा-हुल्ये गौडीयः, तद्धितबाहुल्ये दाक्षिणात्यः। पाठोनुमीयते। यतो वल्लभसमासवृत्तयो गौडाः, प्रियतद्धिता दाक्षिणत्याः, इति स्वभावपरिस्थिते वंक्ष्यमाणत्वात्। त्रयोऽस्य-पादाः। अभिधालक्षणाव्यञ्जनाशक्तयः पादा इव । यथा पादाः शरीरिणं सह कुर्वन्ति तथा शक्तयोऽपि पदजन्यपदार्थोपस्थितौ सहकारिण्यः। तदुक्तम् । "वृत्तिधीः सहका-रिणी"। इति। द्वे शीर्षे। द्वौ प्रकृतिप्रत्ययौ शिर इव । यथा अवयवेषु शिरः प्रधानं तथा काव्यस्यापि तौ शब्दार्थशरीरकाव्यस्य तावेव शीर्षे भवितुं शक्नुतः। सप्तहस्ता-सोऽस्य। आज्जसेरसुक् । नामाख्यातोपसर्गनिपातकर्मप्रवचनीयगत्यव्ययानि सप्त हस्ता इव। तादृशकार्यकारित्वात्। त्रिधा बद्धः। माधुर्यादिगुणत्रयविशिष्टपदरचना-त्मिकाभिस्तिसृभी रीतिभिः क्वचित्पद्यप्रकारेण कुत्र चिद्गद्यप्रकारेण कुहचिच्च उभयथा बद्धो रचितः ( काव्यपुमान् ) यशः प्रभृतिकामान् वर्षतीति वृषभः । महो देव। महादेवः काव्याधिष्ठाता। मर्त्यानाविवेश। मर्त्येषु प्रादुर्बभूव।

यद्यपि श्रुत्यादिभिरयमर्थो ज्ञातप्रायः, यदुत काव्यस्य तद्विद्यायाश्च प्रवर्त्तनाथ कश्चन देवांशभूतो महापुरुषोऽवतरिष्यति। एवं च त्वं महापुरुषोऽसि। तथापि प्रग-ल्भस्य धृष्टस्य पुंसः कर्म चेष्टां संवृणु अवरुन्धि। बालोचितं बालस्वभावसुलभं चेष्टस्व। येन चिरान्निरपत्यत्वेन निर्विण्णाया मम निरतिशयितानन्दधारा प्रवहतु, इत्येवमेन-मुपदिश्य, अनोकहमाश्रयते तस्मिन्। भूरुहसमाश्रयणशीतल इत्यर्थः। गण्डशैलस्य च्युतस्थूलोपलस्य तलमेव तल्पं तस्मिन्। गण्डशैलास्तु च्युताः स्थूलोपला गिरेः, तल्पं शय्याट्टदारेषु इति चामरः। निवेश्य शाययित्वा स्नातुं स्नानार्थं अभ्रगङ्गां आका-शगङ्गां जगाम। तावच्छब्दस्तदेत्यर्थकः इति शब्दार्थरत्नावली । यावत सा स्नातुं गता तावच्च तदैव तस्मिन्नेव क्षणे कुशान्दर्भान् समिधश्च समाहर्त्तुमाचिनोतुं बहिर्निः

ष्मोपप्लुतं तमद्राक्षीत् । कस्यायमनाथो बाल इति चिन्तयन्स्वमाश्रमपदमनैषीत् । क्षणादाश्वस्तश्च स सारस्वतेयस्तस्मै छन्दस्वतीं वाचं समचारयत् । अकस्माद्विस्मापयन्स चाभ्युवाच ।

"या दुग्धाऽपि न दुग्धेव कविदोग्धृभिरन्वहं ।
हृदि नः सन्निधत्तां सा सूक्तिधेनुः सरस्वती ॥" इति

तत्पूर्वकमध्येतृणां च सुमेधस्त्वमादिदेश । ततः प्रभृति तमुशनसं सन्तः कविरित्याचक्षते । तदुपचाराच्च कवय इति लोकयात्रा । कविशब्दश्च कवृ

---

सुतो महामुनिरुशना शुक्रः । पूषणि सूर्ये परिवृत्ते उदयाचलात्किञ्चिद्दूरङ्गते सति ऊष्मणा घर्मेण उपप्लुतमभितप्तं तमद्राक्षीत् अपश्यत् । दर्शनोत्तरं कस्यायमनाथोऽरक्षितो बालः शिशुरित्येवं चिन्तयन्ध्यायन् स्वस्याश्रमस्तस्य पदं स्थानं ( पदं व्यवसितत्राणस्थानलक्ष्मांघ्रिवस्तुषु, इत्यमरः ) अनैषीत् प्रापयत् । शैत्यादिप्राप्त्या क्षणात् मुहूर्त्तेनैवाश्वस्तः सुखितः स सारस्वतेयः ( स्त्रीभ्यो ढक् ) सरस्वतीपुत्रः । तस्मा उशनसे छन्दस्वतीं वाणीं समचारयत् समजिज्ञपत् । सर्वे गत्यर्था धातवो ज्ञानार्थाः । इति सिद्धान्तात् । तस्मा आशीर्वादमदात् त्वामपि छन्दस्वद्वाणी उपतिष्ठतादिति भावः । चोऽप्यर्थे । सोपि तथोपदिष्टोपि विस्मापयन्नाश्चर्यं प्रापयन्, अकस्मादित्युवाच ।

*येति* या सूक्तिधेनुः सूक्तिरूपिणी कामधेनुः कवय एव दोग्धार दोहदक्षाः तैरन्वहं प्रत्यहं दुग्धापि न दुग्धेव । ईषदर्थोत्र इव शब्दः । तेनेषदपि न दुग्धा इत्यर्थः । सा सूक्तिरूपिणी कामधेनुः नोऽस्माकं हृदि सन्निधत्ताम् । अस्माकं हृदयस्थले संचारं कृत्वा, सकलान्पदार्थान् प्रसूताम् प्रादुर्भावयतादिति भावः ।

तत् छन्दस्वद्वचोदर्शनं पूर्वं यस्य सुमेधस्त्वस्यादस्तत्पूर्वकं पूर्वोक्तैतच्छन्दस्वद्वचोदर्शनपूर्वकमित्यर्थः । एतच्छन्दस्वद्वचसः अध्येतॄणां पाठकानां सुमेधस्त्वं च धारणावद्धीत्वंच । धीर्धारणावती मेधा इत्यमरः । अथवा चोप्यर्थः । ततोऽध्येतृणामपि सुमेधस्त्वम्, आदिदेश अनुशशास । यः पूर्वमेतत्पद्यमध्येष्यते स सुमेधाः सम्पत्स्यत इति भावः ।

उशनसि कविशब्दप्रवृत्तिनिमित्तं दर्शयति *तत इति* । ततः प्रभृति श्लोकोच्चारणादारभ्य सन्तो विद्वांसस्तमुशनसं शुक्रं कविरित्याक्षते समाख्यान्ति । उपचारो लक्षणाः । लोकयात्रा लोकस्थितिः । तादृशच्छन्दस्वद्वचसो दर्शकेषु वर्णयितृषु च कविरिति व्यवहारात् लोकेऽपि कवयः कवय इति व्यवहरन्ति । इति भावः । तदुक्तम् ।

नानृषिः कविरित्युक्तमृषिश्च किल दर्शनात् ।
विचित्रभावधर्मांशतत्वप्रख्या च दर्शनम् ॥

वर्ण इत्यस्य धातोः काव्यकर्मणो रूपम्। काव्यैकरूपत्वाच्च सारस्वतेयेऽपि काव्यपुरुष इति भक्त्या प्रयुञ्जते। ततश्च विनिवृत्ता वाग्देवी तत्र पुत्रमपश्यन्ती मध्येहृदयं चक्रन्द। प्रसङ्गागतश्च वाल्मीकिर्मुनिवृषा सप्रश्रयं तमुदन्तमुदाहृत्य भगवत्यै भृगुसूतेराश्रमपदमदर्शयत्। सापि प्रस्नुतपयोधरा पुत्रायाङ्कपालीं ददाना शिरसि च चुम्बन्ती स्वस्तिमता चेतसा प्राचेतसायाऽपि महर्षये निभृतं सच्छन्दांसि वचांसि प्रायच्छत्। अनुप्रेषितश्च स तया निषादनिहतसहचरीकं क्रौञ्चयुवानं करुणकेङ्कारया गिरा, क्रन्दन्तमुदीक्ष्य शोकवान् श्लोकमुज्जगाद।

---

स तत्वदर्शनादेव शास्त्रेषु पठितः कविः।
दर्शनाद्वर्णनाच्चाथ रूढा लोके कविश्रुतिः॥ इति।

प्रसङ्गागतं कविशब्दे निर्वक्ति—*कवीति*। कवीतिशब्दः कवृ वर्णे, इति काव्यं कर्म क्रिया यस्य तस्य धातोः रूपम्। तेन हि कवते सर्वं जानाति सर्वं वर्णयति सर्वं (सर्वतो) गच्छति प्राप्नोति, इति कविः।

नन्वेवं कवेः कर्म काव्यमिति पर्यवसन्नम् तथाच काव्यपुरुष इत्यत्र कः समासोऽभ्युपेयताम् काव्यस्य पुरुष उत काव्याधिष्ठाता पुरुषः इति संदिहानमुत्तारयति—*काव्येति*--काव्यैकरूपत्वात् काव्याभिन्नत्वात् सरस्वतीपुत्रेपि काव्यपुरुष इति भक्त्या भज्यते सेव्यते मुख्यार्थोनयेति भक्तिर्लक्षणा। तया प्रयुञ्जते व्यपदिशन्ति।

एवं प्रसक्तानुप्रसक्तं प्रदर्श्य पूर्वानुस्यूतं व्याघुटय दर्शयति। *तत इति*। ततोऽभ्रगङ्गास्नानात् विनिवृत्ता प्रत्यावृत्ता। तत्र अनोकहाश्रयिणि गण्डे शैलतलतल्पे। *मध्येति*। हृदयस्यमध्ये। पारे मध्ये षष्ठ्या वेति समासः।

प्रसङ्गेति--किमितिकारणाद्धेतोः समागतः। मुनीति। मुनिवृषा मुनीन्द्रः इन्द्रो मरुत्वान्मघवा वासवो वृत्रहा वृषा इत्यमरः। वाल्मीकिरिति। वल्मीकप्रभवः। प्रश्रयेण सहितं सविनयम्। तमौशनसमुदन्तं वृत्तमुदाहृत्य कथयित्वा भगवत्यै सरस्वत्यै भृगुसुतेः भार्गवस्योशनसः, उशना भार्गवः कविः, इत्यमरः। आश्रमस्य वसतेः पदं स्थानमदर्शयत् दर्शयामास सापि श्रुतपुत्रवृत्तान्ताऽपि प्रस्नुतौ स्नेहात्प्रस्कन्नौ पयोधरौ स्तनौ यस्याः सा पुत्राय काव्यपुरुषाय। अङ्कस्य पाली इव अङ्कपाली ताम्। आलिंगनं ददाना कुर्वती शिरसि च मूर्ध्नि च चुम्बन्ती आघ्रान्ती। स्वस्तिमता कल्याणयुक्तेन चेतसा हृदयेन प्राचेतसायापि वाल्मीकये महर्षये निभृतमेकान्ते। छन्दांसि छन्दस्वन्ति वचांसि वाक्यानि प्रायच्छत् अदात्। दत्वा तया देव्यानुप्रेषितो विसर्जितश्च। स ऋषिः निषादेन व्याधेन निहिता सहचरी यस्यासौ निषादनिहितसचरीकः। शेषे विभाषेति कप्। तम्। क्रौंचयुवानं क्रौञ्चतरुणं करुणो

"मा निषाद ! प्रतिष्ठां त्वमगमः शाश्वतीः समाः ।
यत्क्रौञ्चमिथुनादेकमवधीः काममोहितम् ॥"

ततो दिव्यदृष्टिर्देवी तस्मा अपि श्लोकाय वरमदात्, यदुतान्यदनधीयानो यः प्रथममेनमध्येष्यते स सारस्वतः कविः संपत्स्यत इति । स तु महामुनिः

---

दीनः क्रेंकारः क्रोशनं यस्याः सा तया करुणक्रेंकारया वाण्या क्रन्दन्तं रुदन्तमुदीक्ष्य दयार्द्रहृदयतया शोकवान् श्लोकं पद्यम् । पद्ये यशसि च श्लोकः इत्यमरः । उज्जगाद प्रोच्चचार ।—मानिषादेति*—इदं रामाणायं पद्यम् ।

नारदात्स्वगुणश्रवणानन्तरं मुनेः स्ववर्णनेच्छां ज्ञात्वा स्वचरित्रस्य च करुणरसमयत्वेन तत्प्रधानकाव्येऽतिकरुणचित्तस्यैवाधिकारात् ऋषेः करुणचित्तत्वजिज्ञासयेव पूर्वं भृगुदत्तशापस्य पुनरुक्तत्वकरणेन दार्ढ्यसम्पादनाय मुनेरीक्षणाय च भगवान् राम एव निषादरूपेण पश्यतो मुनेः पुरस्तस्तमनादृत्य क्रौञ्चं रक्षो विशेषं जघान । ततस्तदिच्छावशादन्तर्यामितया तथा प्रेरणाच्च यदयं कामोपहितपक्षिणमवधीत तदेष महानधर्मोऽनेन कृत इति संजातकरुणत्वात परिपूर्णकुम्भोच्छलनवच्चित्तवृत्तेस्तस्य शोक एवाकृतकतया इव आवेशवशात् समुचितछन्दोवृत्तादिनियन्त्रितश्लोकरूपतां प्राप्तः । हे निषाद ? यद्यस्मात्त्वं कामेन मोहितं मुग्धं कौञ्चयोर्मिथुनं तस्मात् मिथुनीभूतान् कौञ्चयुगात् विभक्तमेकं पुरुषं कौञ्चमवधीर्हतवान् । तस्मात्त्वमपि शाश्वतीर्निरन्तराः समा वर्षाणि आयुःशेषभूतानि वर्षाणि यावत् । प्रतिष्ठां स्वस्त्रीसाहित्येन स्थितिम् । इह लोके मागमः माप्नुहि । अगम इत्यत्र माङ्योगेप्यडागमस्त्वार्षः । अयं भावः । सहचरविरहकौञ्च्याक्रन्दश्रवणशोकाप्लुतो मुनी रुषा यदेकमवधीरतो यथा त्वयायं स्त्रीविरहितः कृतः सा च नायकहीना कृता तथा त्वमपि प्रियया स्वभार्यया हीनो भव सा च त्वया हीना भवतु इति शशाप ।

ततःश्लोकोक्तेरुत्तरं दिव्या दृष्टिर्यस्याः सा देवी तस्मै वाल्मीकिमुखोद्गतश्लोकाय । यः कोपि द्विजः । यदुत यदि अन्यत् किमपि वर्णान्तरम् । अनधीयानोऽपठन् । एनं श्लोकं प्रथमं प्रागध्येष्यते तर्हि स सारस्वतः सरस्वतीप्राप्तवरप्रसादः कविः सम्पत्स्यते काव्यकर्त्ता भविष्यति, इत्येवं वरमाशिषमदात् ।

अथ श्लोकप्रभावं दर्शयति । *सत्विति* स तादृश श्लोकोद्गाता महामुनिर्वाल्मीकिः प्रवृत्तं वचनं यस्यासौ पद्यनिर्माणविषये प्रवृद्धभारतीकः सन् रामायणमितिहासमिवृत्तं समदृभत् अग्रन्थीत् । श्लोकं प्रथममधीतेऽसौ श्लोकप्रथमाध्यायी द्वैपायनो व्यासोपि । तुरप्यर्थे । तस्य श्लोकप्रथमाध्ययनस्य प्रभावेणानुभावेन शतं सहस्राणां यस्यां सा शतसाहस्री ताम्, एकलक्षसंख्यापरिच्छिन्नां संहितां भारतं समदृभत् इति पूर्वेण सम्बन्धः ।

प्रवृत्तवचनो रामायणमितिहासं समदृभत्; द्वैपायनस्तु श्लोकप्रथमाध्यायी तत्प्रभावेन शतसाहस्रीं संहितां भारतम्।

एकदा तु ब्रह्मर्षिवृन्दारकयोः श्रुतिविवादे दाक्षिण्यवान्देवः स्वयम्भूस्तामिमां निर्णेत्रीमुद्दिदेश । उपश्रुतवृत्तान्तश्च मातरं व्रजन्तीं सोऽनुवव्राज। वत्स!परमेष्ठिनाऽननुमतस्य ते न ब्रह्मलोकयात्रा निःश्रेयसायेत्यभिदधाना हठान्न्यवर्तयदेनमात्मना तु प्रवव्रृते । ततः स काव्यपुरुषो रुषा निश्चक्राम। प्रियं मित्रमस्य च कुमारः साक्रन्दं रुदन्नभ्यधीयत गौर्या तात! तूष्णीमास्स्व साऽहमेषा निषेधामीति निगदन्ती समचिन्तयत् । प्रायः प्राणभृतां प्रेमाणमन्तरेण नान्यद्बन्धनमस्ति, तदेतस्य वशीकरणं कामपि स्त्रियं सृजामीति विचिन्तयन्ती साहित्यविद्यावधूमुदपादयदादिशच्चैनामेष ते रुषा

---

अनन्तरितं वृत्तं व्याकुटय दर्शयिष्यमाणः साहित्यविद्यावधूकाव्यपुरुषयोरुद्वाहबीजं प्रस्तौति *एकदेति* । एकदा कदाचित्तु ब्रह्मर्षिश्च वृन्दारकश्चेति ब्रह्मर्षिवृन्दारकौ तयोः श्रुतौ वेदविषये विवादे कलहे प्रवृत्ते दाक्षिण्यवान् चतुरो देवः स्वयम्भूर्ब्रह्मा तामिमां सरस्वतीं निर्णेत्रीमुद्दिदेश माध्यस्थ्यं सम्पादयितुं सन्दिदेश। उपश्रुतो वृत्तान्तोऽनेनासौ श्रुतवार्त्तः सोपि। चोऽप्यर्थे। व्रजन्तीं ब्रह्मलोके गच्छन्तीं मातरं जननीमनुवव्राजानुजगाम। अनु गच्छन्तमेनं हे वत्स! ब्रह्मणाऽननुमोदितस्य ते ब्रह्मलोकयात्रा तल्लोकगमनं न निःश्रेयसाय कल्याणाय, इत्येवमभिवदन्ती हठान्न्यवर्त्तयन्न्यवारयत्। किन्तु स्वयं प्रवव्रृते जगाम। ततः निवर्तयमगमनात् स काव्यपुरुषो रुषा क्रोधेन निश्चक्राम निर्जगाम। एवं गते तस्मिन् अस्य काव्यपुरुषस्य प्रियं मित्रं सुहृद् कुमारः कार्त्तिकेयः साक्रन्दं सफूत्कारं रुदन् गौर्या पार्वत्याऽभ्यधायतागादि। तात! प्रियपुत्र! तूष्णीं जोषमास्व तिष्ठ साहमेषा इदानीमेवाहं निवारयामीत्येवं निगदन्ती ब्रुवन्ती समचिन्तयत्, अध्यासीत्। चिन्तितं प्रकाशयति--प्राय इति। प्रायः प्राणभृतां सजीवानां प्रेमाणमन्तरेण स्नेहं विना नान्यद्बन्धनमवरोधकमस्ति। अयमेवार्थो भङ्ग्यन्तरेणोक्तमन्यत्र--यथा

बन्धनानि खलु सन्ति बहूनि प्रेमरज्जुकृतबन्धनमन्यत्।
दारुभेदनिपुणोऽपि षडंह्रि र्निष्क्रियो भवति पंकजकोशे । इति ।

तदिति--तत्तस्मादेतस्य काव्यपुरुषस्य वशीकरणं कामपि विलक्षणसौन्दर्यशालिनीं स्त्रियं रमणीं सृजामित्येवं ध्यायन्ती। साहित्यविद्या शब्दार्थयोः सहभावेन विद्या सैव वधूरिति साहित्यविद्यावधूः। तामुदपादयत् असृजत्। एनां वधूमादिशदाज्ञपयच्च।

किमादिशदित्याह--एष त इति--एष गच्छन्नयं ते धर्मपतिः, रुषा पुरोऽग्रे प्रतिष्ठते तत्तस्मादेनमनुवर्त्तस्व, निवर्तय च। हन्त हे भवन्तो? मुनयः? यूयमपि एतयो

धर्मपतिः पुरः प्रतिष्ठते तदनुवर्त्तस्वैनं निवर्तय च। भवन्तोऽपि हन्त! मुनयः! काव्यविद्यास्नातकाश्चरितमेतयोः स्तुध्वमेतद्धि वः काव्यसर्वस्वं भविष्यतीत्यभिधाय भगवती भवानी जोषमासिष्ट। तेऽपि तथा कुर्त्तुमवतस्थिरे।

अथ सर्वे प्रथमं प्राचीं दिशं शिश्रियुर्यत्राङ्गवङ्गसुह्मब्रह्मपुण्ड्राद्या जनपदाः तत्राऽभियुञ्जाना तमौमेयी यं वेषं यथेष्टमसेविष्ट, स तत्रत्याभिः स्त्रीभिरन्वक्रियत। सा प्रवृत्तिरौड्रमागधी। तां ते मुनयोऽभितुष्टुवुः—

"आर्द्रार्द्रचन्दनकुचार्पितसूत्रहारः सीमन्तचुम्बिसिचयः स्फुटबाहुमूलः।
दूर्वाप्रकाण्डरुचिरास्वगुरूपभोगाद्गौडाङ्गनासु चिरमेष चकास्तु वेषः॥"

---

वधूवरयोश्चरितं स्तुध्वम् नुवथ। एतत्स्तवनं वो युष्माकं काव्यसर्वस्वं भविष्यति-इत्येवमभिधाय भवानी पार्वती जोषम् तूष्णीमासिष्ट तस्थौ। ते मुनयो वधूश्च सर्वे तथा कर्तुमनुगन्तुं निवर्त्तयितुं स्तोतुं च अवतस्थिरे व्यवसिष्यिरे।

भगवान् काव्यपुरुषो रुष्टः सन् चतुर्षु दिक्षु बभ्राम, तमनुप्रसादयितुं वधूर्मुनयश्च जग्मुः। तत्र वधूवराभ्यां ब्राह्मणवसिष्ठन्यायेन विभिन्नाभ्यां काव्यसाहित्याभ्याम् यत्र यत्र देशे यो यो वेषः सेव्यते स्म तत्रत्यानां स्त्रीपुरुषाणां स स वेषः समजनि। तदेव वेषप्रवर्त्तनं प्रवृत्तिशब्दभाग्। यच्च तया नृत्तवाद्यविलासादिकमनुनृत्यते सैव वृत्तिः। या तेन तदनुरक्तेनाननुरक्तेन च वाग्भंगी अनुशीलिता सैव रीतिः। एवं तयोश्चतुर्दिक्षु वेषभाषादीनां मध्ये चतुष्प्रकारत्वात् वृत्तिप्रवृत्तीनां चातुर्विध्यं रीतिनां पुनस्त्रैविध्यमेव। एषां लक्षणादिकमग्रे वक्ष्यते। तत्र कुत्र, कथं, का, प्रवृत्ति, वृत्तिः, रीतिः, समुत्पन्नेति तत्प्रकारो निर्दिश्यते दिगनुसारेण। तत्र पूर्वं प्राच्या दिशः *अथेति* अथ भवान्या आज्ञानन्तरं सर्वे ते प्रथमं प्राक् प्राचीं दिशं शिश्रियुः श्रितवन्तः। यत्र प्राच्यां अंगवंगसुह्मब्रह्मपुण्ड्रप्रभृतयो जनपदाः सन्तिः। तत्र तेषु जनपदेषु तं काव्यपुरुषमभियुञ्जाना अभियोक्तुमीहमाना औमेयी (उमाया अपत्यमौमेयी--स्त्रीभ्यो ढक्। ढस्य एय्। टिड्ढाणञिति ङीपि) साहित्यविद्यावधूः यथेष्टं यदृच्छया यं वेषं नेपथ्यमसेविष्ट। स वेषः तत्रत्याभिः तद्दिग्भवाभिः स्त्रीभिरन्वक्रियत। सा प्रवृत्तिः वेषानुकरणम्, औड्रमागधी। तदुक्तम्।

अङ्गवङ्गकलिङ्गाश्च वत्साश्चैवौड्रमागधाः इति।
अन्येपिदेशाः प्राच्यां ये पुराणे संप्रकीर्त्तिताः
तेषु प्रयुज्यते त्वेषा प्रवृत्तिश्चौड्रमागधी इति।
तां प्रवृत्तिं मुनयोऽभितुष्टवुः नतुवुः।

आर्द्रार्द्रेति। आर्द्रार्द्रमत्यार्द्रं चन्दनं ययोरेवंभूतयोः कुचयोरर्पितो धारितः। सूत्रणं

यदृच्छयाऽपि यादृङ्नेपथ्यः स सारस्वतेय आसीत् तद्वेषाश्च पुरुषा बभूवुः। साऽपि सैव प्रवृत्तिः। यदपरं नृत्तवाद्यादिकमेषा चक्रे सा भारती वृत्तिः। तां ते मुनय इति समानं पूर्वेण। तथाविधाकल्पयापि तया यदऽवशम्वदीकृतः समासवदनुप्रासवद्योगवृत्तिपरम्परातद्गर्भं ( वाक्यं ) जगाद सा गौडीया रीतिः। तां ते मुनय इति समानं पूर्वेण। वृत्तिरीतिस्वरूपं यथावसरं वक्ष्यामः।

---

सूत्रं ग्रथनम्। सूत्र ग्रथन इत्यस्मात् तदस्यास्तीति अर्शाद्यच्। सूत्रो ग्रथितो हारो यत्रासौ सान्द्रमलयजविलेपनधवलितस्तनमण्डलकलितललितपुष्पमाल्यः। सीमन्तं केशवेशं "सीमन्तः केशवेशे स्यात्" इत्यमरः। चुम्बतीति, एवंभूतः सिचयोऽशुकं यत्रासौ केशवेशस्थितांशुकः। स्फुटं बाह्वोर्मूलं यत्रासौ दृश्यमानभुजयुगलमूलस्तत्राच्छादनात्। स्वयं गौरीष्वपि। अगुरुणः उपभोगो राजार्हस्य निर्वेशः। अगुर्वगरुराजार्हम्, इति हैमः, निर्वेश उपभोगः स्यात, इत्यमरः। तस्मात् अगरूपलेपात्। प्रशस्ता दूर्वा दूर्वाप्रकाण्डा तद्वत् रुचिरासु मनोहरासु श्यामासु गौडानामंगनासु, एष आर्द्रार्द्रेत्यादिना वर्ण्यमानो वेशो नेपथ्यश्चिरं बहुकालं चकास्तु शोभताम्। कुचयोः सान्द्रमलयजानुलेपेन कामतापाधिक्यं प्रकाश्यते। यतस्तापापनुत्तये शैत्यवस्तूपभोगो लोके दृश्यते। पौष्पदाम्ना सौन्दर्योपासकत्वं व्यज्यते। बाहुमूलस्य स्फुटतया कुचभागावलोकनेनाकर्षकत्वं व्यज्यते। अगरूपलेपेन सर्वदा श्यामात्वमस्मासु प्रतीयतामित्याकांक्षा ध्वन्यते। श्यामा षोडशवार्षिकी इति।

वेषस्य भावानाञ्च स्वाभाविकत्वानाकलनादवशंवद इत्युच्यते--*यदृच्छयेति* काव्यपुरुषानुकूलवेषाः पुरुषा अभूवन्। सापि पुरुषाणां व्यवहृतिरपि सैवोड्रमागधी प्रवृत्तिः। तदनुरञ्जनाय औमेयीकृता नृत्तवाद्यादयो भारती वृत्तिः। भरतेन तु भिन्नरूपैवोक्ता--

> या वाक्प्रधाना पुरुषप्रयोज्या स्त्रीवर्जिता संस्कृतवाक्ययुक्ता।
> स्वनामधेयैर्भरतैः प्रयुक्ता सा भारती नाम भवेत्तु वृत्तिः। इति।

तादृशवेषयापि तया यत्तु स्ववशेऽकृतः सन् समस्तमनुप्रासयुतम्। वृत्तेः शक्तेः परम्परा अनादिप्रवाहो यस्यां सा वृत्तिपरम्परा रूढिः। स योगो गर्भे कुक्षौ यस्य स तद्गर्भः। योगश्च वृत्तिपरम्परा च तद्गर्भश्चेति योगवृत्तिपरम्परातद्गर्भाः। ते यस्मिन्वाक्ये वत्तथा। अभिधाप्रधानं वाक्यं जगाद सा गौडीया रीतिः। तां रीतिं मुनयोऽभितुष्टुवुरिति सर्वत्रानुसन्धेयम्। *यथावसर इति*-अस्मिन्नेवाध्याये काव्यपुरुषभ्रमणविश्रान्तौ।

ततश्च स पञ्चालान्प्रत्युच्चचाल। यत्र पाञ्चालशूरसेनहस्तिनापुरकाश्मीर-वाहीकबाह्लीकबाह्लवेयादयो जनपदाः। तत्राऽभियुञ्जाना तमौमेयीति समानं पूर्वेण। सा पाञ्चालमध्यमा प्रवृत्तिः। तां ते मुनयोऽभितुष्टुवुः—

"ताटङ्कवल्गनतरङ्गितगण्डलेखमानाभिलम्बिदरदोलिततारहारम्।
आश्रोणिगुल्फपरिमण्डलितान्तरीयं वेषं नमस्यत महोदयसुन्दरीणाम्॥"

किञ्चिदार्द्रमना यन्नेपथ्यः स सारस्वतेय आसीदिति समानं पूर्वेण। सा-

---

इत्थं प्राचीदिशो भ्रमणं निरूप्योत्तरदिग्गमनमुपक्रमते—*तत इति*। ततः प्राचीदिशो भ्रमणानन्तरं स काव्यपुरुषः पञ्चालान् उत्तरदिग्भवान् देशान् प्रति उच्चचाल। यत्रोत्तरदिशि पाञ्चालप्रभृतयो जनपदाः। 'तत्र तं काव्यपुरुषमभियुञ्जाना औमेयी साहित्यविद्यावधूः यं वेषमसेविष्ट स वेषस्तद्देशभवाभिः स्त्रीभिरन्वक्रियत इति सर्वत्रानुसन्धेयम्। सा प्रवृत्तिः पांचालमध्यमा। तदुक्तं भरतेन--

पाञ्चाला शौरसेनाश्च काश्मीरा हस्तिनापुराः। इति।
हिमवत्संश्रिता ये तु गङ्गायाश्चोत्तरां दिशम्
ये श्रिता वै जनपदास्तेषु पाञ्चालमध्यमा। इति।

तां ते इति पूर्ववत्।

*ताटङ्केति*। ताटङ्कस्य कर्णभूषणस्य, "ताटङ्कः कर्णभूषणम्" इत्यमरः। वल्गनेन संचलनेन तरंगिता संजातोर्मिकेव गण्डलेखा यस्मिन् तम्। आ नाभि अभिव्याप्येति आङ्मर्यादभिविध्योरिति समासः। नाभिपर्यन्तम् लम्बते इति ताच्छील्ये णिनिः आनाभिलम्बी। स च दरं यथा तथा दोलितः ईषद्दोलायमानः तारः शुद्धः "मुक्ताशुद्धौ च तारः स्यात्" इत्यमरः। हारो यत्र तम्। श्रोणिश्च गुल्फश्चेति श्रोणिगुल्फौ। तौ क्रमश आरभ्य अभिव्याप्येति आश्रोणिगुल्फम्। गुल्फो घुटिका। तद्ग्रन्थी घुटिके गुल्फौ, इत्यमरः। अत्राङ् उभयार्थकः। परिमण्डितमन्तरीयमधोवस्त्रं यस्मिन् तम्। अत्रोत्तरीयमित्यपपाठः। तस्योर्ध्ववस्त्रत्वात्। अत्र चाधोवस्त्रस्यैव वर्णनीयत्वात्।

नाभौ धृतं च यद्वस्त्रमाच्छादयति जानुनी।
अन्तरीय प्रशस्तं तदच्छिन्नमुभयोस्तयोः॥ इति।

इत्युक्तलक्षणमन्तरीयमेवात्रापेक्षितम्। एवंभूतम्। महोदयाः कान्यकुब्जाः। तेषां सुन्दरीणां रमणीनां वेषं नेपथ्यं नमस्यत। तरङ्गितेत्यनेन रोमाञ्चरूपसात्विकभावाविर्भावो व्यज्यते। तेन च कामासक्तिर्व्यज्यते। हारस्य दरदोलनेन चाञ्चल्यं व्यज्यते आश्रोणिगुल्फेति पदेन परिधानविन्यायसौन्दर्यं प्रतीयते।

किञ्चिदीषत् आर्द्रमना अनुरक्तः। यन्नेपथ्य इति समानं पूर्वेण। सापीति समानं

ऽपि सैवैति समानं पूर्वेण। यदीषन्नृत्तगीतवाद्यविलासादिकमेषा दर्शयांबभूव सा सात्त्वती वृत्तिः। आविद्धगतिमत्त्वात्सा चारभटी। तां ते मुनय इति समानं पूर्वेण। तथाविधाकल्पयापि तया यदीषद्वशम्वदीकृत ईषदसमासं ईषदनुप्रासमुपचारगर्भञ्च ( वाक्यं ) जगाद सा पाञ्चाली रीतिः। तां ते मुनय इति समानं पूर्वेण।

ततः सोऽवन्तीन्प्रत्युच्चाल। यत्रावन्तीवैदिशसुराष्ट्रमालवार्बुदभृगुकच्छादयोजनपदाः। तत्राऽभियुञ्जाना तमौमेयीति समानं पूर्वेण। सा प्रवृत्तिरावन्ती। पाञ्चालमध्यमादाक्षिणात्ययोरन्तरचारिणी हि सा। अत एव

---

पूर्वेण। यदीषदिति। यत् ईषद् किंचित् नृत्तं गीतं वाद्यं विलास आदिर्येषां तत्। किञ्चिदीषत्पदाभ्यामनुरक्तिः प्रकाश्यते। एषा साहित्यवधूः दर्शयामास सा सात्त्वती वृत्तिः। भरतेनास्याः स्वरूपमित्थमुक्तम्—

या सात्वतेनेह गुणेन युक्ता न्यायेन वृत्तेन समन्विता च।
हर्षोत्कटा संहृतशोकभावा सा सात्वती नाम भवेत्तु वृत्तिः॥ इति।

सैषा सात्वती एव आविद्धा कुटिला गतिर्विद्यते यस्यां सा। तस्या भावस्तस्मात्। आरभटी। आविद्धं कुटिलं भुग्नं वेल्लितं वक्रमित्यपि, इत्यमरः। तथाचोक्तं भरतेन।

पाञ्चालमध्यमायान्तु सात्वत्यारभटी श्रिता।
प्रयोगस्त्वल्पगीतार्थ आविद्धगतिविक्रमः॥ इति।

आरभटीलक्षणमुक्तं तेनैव—

प्रभावयातप्लुतलङ्घितानि चान्यानि मायाकृतमिन्द्रजालम्।
चित्राणि युक्तानि च यत्र नित्यं तां तादृशीमारभटीं वदन्ति॥ इति।

युक्तमिति वचनविपर्यासेन पद्यं योजनीयम्। तां ते इति समानं पूर्वेण। तादृशनेपथ्ययापि तयेषद्वशंवदीकृतः स काव्यपुरुषः किञ्चिदसमस्तम् अल्पानुप्रासिकं लाक्षणिकं वाक्यं जगाद सा पाञ्चाली रीतिः। इति समानं पूर्वेण।

ततः उत्तरदिगनुशीलनोत्तरं स काव्यपुरुषोऽवन्तीन् पाश्चात्यप्रदेशान् प्रत्युज्जगाम यत्र प्रदेश आवन्त्यादयो जनपदाः। तत्रेति समानं पूर्वेण। सा प्रवृत्तिः तद्देशीयानां प्रवर्त्तनमावन्ती। तथाचोक्तं भरतेन।

आवन्तिका वैदिशिका सौराष्ट्रा मालवास्तथा। इति।
कुर्वन्त्यावन्तिकीमेते प्रवृत्तिं नित्यमेव तु। इति॥

सा हि आवन्ती प्रवृत्तिः, उत्तरीयप्रवृत्तेः पाञ्चालमध्यमायाः, दक्षिण्यात्यप्रवृत्तेः

सात्त्वतीकैशिक्यौ तत्र वृत्ती। तां ते मुनयोऽभितुष्टुवुः—

"पाञ्चालनेपथ्यविधिर्नराणां स्त्रीणां पुनर्नन्दतु दाक्षिणात्यः।
यज्जल्पितं यच्चरितादिकं तदन्योन्यसंभिन्नमवन्तिदेशे॥"

ततश्च स दक्षिणां दिशमाससाद यत्र मलयमेकलपालमंजराः पर्वताः।

---

दाक्षिणात्याया अन्तरालवर्तिनी। अन्तरालवर्त्तित्वादेव सात्वतीकौशिक्यौ तत्र अवन्तीषु वृत्ती। उक्तञ्च।

सात्वती कौशिकी चैव वृत्तिमेषां समाश्रितः
भवेत्प्रयोगो नान्यत्र सर्वः कार्यः प्रयोक्तृभिः। इति

तां प्रवृत्तिं तेऽनुगता मुनयोऽभितुष्टुवुः॥

पाञ्चालेति। नराणां पुरुषाणां पाञ्चालनेपथ्यविधिः वर्त्तते। स्त्रीणां पुनर्दाक्षिणात्यो नेपथ्यविधिर्वर्त्तते। एवं स्वीयो नेपथ्यविधिः स्वं (स्त्रीपुंसौ) नन्दतु प्रीतिप्रदो भवतु। वेषरूपप्रवृत्तेः पाञ्चालमध्यमादाक्षिणात्ययोरन्तचारिणीत्वात्स्त्रीपुंसयोः संभिन्नो वेषः। यच्चात्रावन्तिदेशे चरितादिकं यच्च जल्पितं तत्सर्वमन्योन्यसंभिन्नम् परस्परसम्मिश्रम्। उत्तरदेशीयसात्वत्या दक्षिणदिग्भवाया कौशिक्याश्च वृत्तेः संमिश्रणात् चरितादिष्वपि सम्मिश्रत्वम्। एवं हि जल्पितस्य सम्मिश्रत्वोक्त्या रीतेरपि उत्तरदाक्षिणात्ययोः पाञ्चालीवैदर्भ्योरन्तरचारिणीत्वं ध्वनितम्। स्फुटत्वात्तु नोक्ता रीतिः। एषैवान्तरालिका रीतिराधुनिकैर्लाटीति व्यपदिश्यते। यदाह—

लाटी तु रीतिर्वैदर्भीपाञ्चाल्योरन्तरे स्थिता।

इति सर्वं निरवद्यम्। एवं नासंगतं नानुक्तप्रायं च किञ्चित्॥

ततः पश्चिमदिगनुप्रचरणोत्तरं स दक्षिणां दिशमाससाद। यत्र मलयमेकलपालमञ्जराः पर्वताः। कुन्तलकेरलमहाराष्ट्रगाङ्गादयो जनपदाः। अत्र मुद्रितपुस्तके मलय-मेकल-कुन्तल-केरल-पाल-मञ्जर-महाराष्ट्र-कलिंग-गङ्गादयो जनपदाः। इति महानपपाठः। तदित्थम्। मलयादयः पर्वता नतु जनपदाः। मलय-मेकलयोः पाल-मञ्जरयोः पर्वतयोर्मध्ये कुन्तल-केरलयो जनपदयोर्विन्यासः अशुद्धः। कलिङ्गः प्राच्यो देशः न तु दाक्षिणात्यः। एवमत्र गाङ्गो देशः नतु गङ्गः। ननु पूर्वं कुत्रापि पर्वतानां निर्देशो न कृतः, सर्वत्रापि जनपदानामेव निर्देशः कृतः तथैवात्रापि सर्वे जनपदा एवेति चेत् सत्यम्। अयं राजशेखरो भरतानुसारी। एवंहि भरतेन प्रवृत्तिवृत्तीनामुद्गमक्रमे यथा यल्लिखितं तथैवायं तदुल्लिलेख। यत्र केवलं जनपदा निर्दिष्टास्तत्रायमपि तथैव निर्दिदेश तथा यत्र पूर्वं पर्वता उत्तरं जनपदास्तथायमपीति। एवमत्रत्यो भरतीयः पाठः।

महेन्द्रो मलयः सह्यो मेकलः पालमञ्जरौ।
एतेषु ये श्रिता देशा स ज्ञेयो दक्षिणापथः॥ इति।

कुन्तलकेरलमहाराष्ट्रगाङ्गादयो जनपदाः । तत्राभियुञ्जाना तमौमेयीति समानं पूर्वेण । सा दाक्षिणात्या प्रवृत्तिः । तां ते मुनयोऽभितुष्टुवुः ।

"आमूलतो वलितकुन्तलचारुचूडश्चूर्णालकप्रचयलाञ्छितभालभागः ।
कक्षानिवेशनिबिडीकृतनीविरेष वेषश्चिरं जयति केरलकामिनीनाम् ॥"

तामनुरक्तमनाः स यन्नेपथ्यः सारस्वतेय आसीदिति समानं पूर्वेण । साऽपि सैवेति समानं पूर्वेण । यद्विचित्रनृत्तगीतवाद्यविलासादिकमेषाविर्भावयामास सा कैशिकी वृत्तिः । तां ते मुनय इति समानं पूर्वेण । यदत्यर्थं च स तया वशम्वदीकृतः स्थानानुप्रासवदसमासं योगवृत्तिगर्भं च ( वाक्यं ) जगाद सा वैदर्भी रीतिः । तां ते मुनय इति समानं पूर्वेण ।

---

एतेषु पर्वतेषु ये देशाः श्रिताः स दक्षिणापथः । देशाश्च तत्र ।

कुन्तला केरला गाङ्गाः कोङ्कणा पण्डयदण्डकाः ।
द्रमिडान्ध्रमहाराष्ट्रा वैष्णा वै वानवासिकाः ॥ इति ।

अन्यस्तु पाठः पूर्व दर्शितः । इति सर्वं निरवद्यम् ।

तत्रेति समानं पूर्वेण । सा प्रवृत्तिः दाक्षिणात्या । तां त इति समानम् ।

आमूलत इति । आमूलतो मूलादेव वलितैः भुग्नैः कुन्तलैः केशैः । वलितं भुग्नमित्यपि, चिकुरः कुन्तलो वालः कचः केशः शिरोरुहः—इत्यमरः । चारुर्मनोहरा चूड़ा धम्मिल्लो यस्मिन् । असौ वेषः । चूर्णं वासयोगः । तद्युक्तानामलकानां कुञ्चितकेशानां प्रचयेन ( किंचिच्छिथिलसंयोगवता तेन ) लांछितं सुशोभं भालं ललाटप्रदेशो यत्र वेषेऽसौ । कक्षाया अन्तरीयाञ्चलस्य निवेशो विन्यासः । तेन निविडीकृता नीविर्जघनवस्त्रग्रन्थिर्यस्मिन् वेषेऽसौ । नीविः संग्रथनं नार्या जघनस्थस्य वाससः, इति नाममाला । केरलकामिनीनां वेषो नेपथ्यं चिरं जयति सर्वोत्कर्षेण वर्त्तते । जयतीत्युक्त्या वेषस्योत्कृष्टत्वं तेन च काव्यपुरुषस्य पूर्वापेक्षयाऽनुरक्तत्वं द्योत्यते ।

तामनुरक्तेति पूर्ववत् । सापीति । सापि प्रवृत्तिः सैव । यद् विचित्रं नृत्तं गीतं वाद्यं विलासादिकमेषा दर्शयामास सा कैशिकी वृत्तिः । यथोक्तं भरतेन ।

या श्लक्ष्णनेपथ्यविशेषचित्रा स्त्रीसंयुता या बहुनृत्तगीता ।
कामोपभोगप्रभवोपचारा तां कैशिकीं वृत्तिमुदाहरन्ति ॥ इति ।

तां त इति पूर्ववत् । यच्च तया अत्यर्थं वशीकृतः स स्थानानुप्रासवत् युक्तानुप्रासवत्, असमस्तं योगवृत्तिरभिधा तद्गर्भं तन्मूलं ( विवक्षितान्यपरवाच्यो ध्वनिरभिधामूलो भवति ) एवं च व्यङ्ग्यमयं वाक्यं जगाद सा वैदर्भी रीतिः । तां त इति पूर्ववत् ।

तत्र वेषविन्यासक्रमः प्रवृत्तिः, विलासविन्यासक्रमो वृत्तिः, वचनविन्यासक्रमो रीतिः। "चतुष्टयी गतिर्वृत्तीनां प्रवृत्तीनां च देशानां पुनरानन्त्यं तत्कथमिव कात्स्न्र्येन परिग्रहः" इत्याचार्याः। अनन्तानपि हि देशांश्चतुर्धैवाकल्प्य कल्पयन्ति "चक्रवर्तिक्षेत्रं सामान्येन तदवान्तरविशेषैः पुनरनन्ता एव" इति यायावरीयः। दक्षिणात्समुद्रादुदीचीं दिशं प्रति योजनसहस्रं चक्रवर्तिक्षेत्रं, तत्रैष नेपथ्यविधिः। ततः परं दिव्याद्या अपि यं देशमधिवसेयुस्तद्देश्यं वेषमाश्रयन्तो निबन्धनीयाः। स्वभूमौ तु कामचारः। द्वीपान्तरभवानां तदनुसारेण वृत्तिप्रवृत्ती। रीतयस्तु तिस्रस्तास्तु पुरस्तात्।

---

पूर्वप्रतिज्ञातप्रवृत्त्यादिस्वरूपं दर्शयति—*तत्रेति*। अत्र सर्वत्र षष्ठीसमासोत्तरं बहुव्रीहिः। वेषस्य विन्यासो निवेशस्तस्य क्रमो यत्रासौ प्रवृत्तिः। विलासस्य विन्यासस्तस्य क्रमो यत्रासौ वृत्तिः। वचनस्य विन्यासस्तस्य क्रमो यत्र सा रीतिः। तदुक्तं विष्णुपुराणे।

वेषभाषानुकरणात् तथाचारप्रवर्तनात्।
संक्षेपेण व्याख्याता वृत्तिरीतिप्रवृत्तयः॥ इति।

वृत्यादीनां चतुष्टयीत्वे विप्रतिपत्तिं परमतेन दर्शयति। एवं प्रवृत्तीनां वृत्तीनां च चतुष्टयी चतुः प्रकारा गतिर्व्यवहारः देशास्तु अनन्तास्तथैव वेषभाषाचारप्रवर्त्तनान्यपि। तस्मात्तेषां साकल्येन परिग्रहः कर्त्तुमशक्यः इतिभावः। स्वमतेन व्यवस्थापयति। अनन्तानपि देशान् चतुर्धैव विभज्य वृत्यादीनां चतुष्टयीत्वं कल्पयन्ति। भवतां मते तु देशभूयस्त्वेन तासामपि भूयस्त्वादज्ञानं स्यात्। अत्रार्थे दृष्टान्तयति—*चक्रवर्त्तीति*। कुमारीपुरात्प्रभृति विन्दुसरोवधि योजनसहस्रं चक्रवर्तिक्षेत्रं सामान्येन एकयति। तदेवान्तःपातिदेशविशेषैरनन्तयति। विदर्भदेशस्थैः कविवरैरेवमासां रीतीनां स्वरूपं दृष्टमिति वैदर्भीपाञ्चालीगौडीरीतयः। नतु देशायत्तास्ताः, तेषामानन्त्यात। इति स्वाभिप्रायः।

कुतस्त्यो देशश्चक्रवर्त्तिक्षेत्रमित्याकांक्षायामाह-*दक्षिणादिति*। *तत्रेति*। तत्र चक्रवर्त्तिक्षेत्रे एष आमूलत इत्यादिनोक्तो नेपथ्यविधिर्जातः।

*तत इति*। ततः परं उक्तदेशेभ्य उत्तरं दिव्याद्या देवा अपि यं देशमधिवसेयुः तद्देश्यं वेषमाश्रयन्तो वर्णनीयाः, किन्तु स्वीये प्रदेशे यथेच्छम्।

*द्वीपेति*—अन्यद्वीपोत्पन्नानां तत्तद् द्वीपानुकूले वृत्तिप्रवृत्ती। रीतयस्तु वैदर्भीगौडीपाञ्चाल्याख्यास्तिस्रः तास्तु पुरस्तात्सप्तमाध्याये नामतो निर्देक्ष्यन्ते इति शेषः।

तत्रास्ति मनोजन्मनो देवस्य क्रीडावासो विदर्भेषु वत्सगुल्मं नाम नगरम् । तत्र सारस्वतेयस्तामौमेयीं गन्धर्ववत्परिणिनाय । ततस्तद्वधूवरं विनिवृत्त्य तेषु प्रदेशेषु विहरमाणं तुषारगिरिमेवाजगाम, यत्र गौरी सरस्वती च मिथः सम्बन्धिन्यौ तस्थतुः । तौ च कृतवन्दनौ दम्पती दत्त्वाशिषं प्रभावमयेन वपुषा कविमानसनिवासिनौ चक्रतुः । तयोश्च तं सर्गं कविभ्यः स्वर्गलोकमकल्पतां, यत्र काव्यमयेन शरीरेण मर्त्यमधिवसन्तो दिव्येन देहेन कवय आकल्पं मोदन्ते ।

इत्येष काव्यपुरुषः पुरा सृष्टः स्वयम्भुवा ।
एवं विभज्य जानानः प्रेत्य चेह च नन्दति ॥

॥ इति राजशेखरकृतौ काव्यमीमांसायां कविरहस्ये प्रथमेऽधिकरणे तृतीयोऽध्यायः काव्यपुरुषोत्पत्तिः ॥

---

वृत्तिप्रवृत्तिप्रसक्तानुप्रसक्तं प्रदर्श्य प्रकृतं दर्शयति । *तत्रेति* । तत्र विदर्भेषु कामस्य केलिभूमिः वत्सगुल्मं नाम नगरमस्ति । इदं नगरमधुना आकोलाजनपदे वासिमनाम्ना वर्त्तते । तत्र वत्सगुल्मे सरस्वतीपुत्रः तामुमापुत्रीं गन्धर्वविधिनोपयेमे । तत उपयमनानन्तरं तस्य वधूः, अथवा सा चासौ वधूश्चेति तद्वधूः साहित्यविद्यावधूः । तेषु प्रदेशेषु विहरमाणं क्रीडन्तं वरं काव्यपुरुषं विनिवृत्य तुषारगिरिं हिमस्याद्रिम् । तुषारस्तुहिनं हिममित्यमरः । हिमाद्रिमेवाजगाम । यत्र हिमाद्रौ मिथः परस्परं सम्बन्धिन्यौ पुत्रयोरुद्वाहस्य वृत्तत्वात् गौरी पार्वती सरस्वती च तस्थतुः । कृतप्रणामौ तौ दम्पती, आशिषं दत्वा प्रभावमयेन शरीरेण कवीनां मानसे वस्तुं शीलमेषां तौ कविमानसवासिनौ चक्रतुः ।

*तयोश्चेति* । तयो र्वधूवरयोस्तं सर्गं सृष्टिं कविभ्यः स्वर्गलोकमकल्पतां कल्पितवत्यौ ते देव्यौ । अत्रत्यः पाठो विश्रृंखलितः । एवमाभाति । तयोश्च तं सर्गं कविभ्यः स्वर्गलोकमकल्पतामिति । यत्र स्वर्गलोके कवयः काव्यरूपेण शरीरेण मर्त्यलोकमधिवसन्तोऽपि दिव्येन देहेन कल्पपर्यन्तं मोदन्ते नन्दन्ति ।

तदुक्तम् । आसेदुषामपि दिवं कविपुंगवानाम्
तिष्ठत्यखण्डमिह काव्यमयं शरीरम् । इति ।

उक्तमुपसंहरन्नाह—*इत्येषेति* । स्वयंभुवा ब्रह्मणा पुरा एवमेष काव्यपुरुषः सृष्टो निर्मितः । एवं विभज्य काव्यसाहित्ये पृथक्कृत्य जानानः प्रेत्यामुत्र इह लोके च नन्दति समृद्धो मोदते ।

इति आहिताग्नि श्रीमधुसूदनशर्मणः कृतौ मधुसूदनी-विवृतौ तृतीयोऽध्यायः ।

# चतुर्थोऽध्यायः
# शिष्यप्रतिभे ४

द्विविधं शिष्यमाचक्षते यदुत बुद्धिमानाहार्यबुद्धिश्च। यस्य निसर्गतः शास्त्रमनुधावति बुद्धिः स बुद्धिमान्। यस्य च शास्त्राभ्यासः संस्कुरुते बुद्धिमसावाहार्यबुद्धिः। त्रिधा च सा, स्मृतिर्मतिः प्रज्ञेति। अतिक्रान्तस्यार्थस्य स्मर्त्री स्मृतिः। वर्त्तमानस्य मन्त्री मतिः। अनागतस्य प्रज्ञात्री प्रज्ञेति। सा त्रिप्रकाराऽपि कवीनामुपकर्त्री। तयोर्बुद्धिमान् शुश्रूषते शृणोति गृह्णीते धारयति विजानात्यूहतेऽपोहति तत्त्वं चाभिनिविशते। आहार्यबुद्धेरप्येत एव

---

॥ श्रीः ॥

सदलंकारगुणाक्तां सद्वृत्तां वृत्तिरीतिललितान्ताम्
सरसां सुभावभरितां नौमि प्रतिभां शिवां शान्ताम्।

अथ ग्रन्थस्य विषयं काव्यमामूलं निर्दिश्य तदुपदेष्टव्यशिष्यनिरूपणपुरःसरं तत्कारणं च निरूपयितुमध्यायद्वयमेत्रोमासूत्रयति। *शिष्येति*। विषयनिरूपणानन्तरमधिकारिनिरूपणमुचितमिति प्रकरणसङ्गतिः। शिष्यप्रतिभे इति सूत्रम्। शिष्यश्च प्रतिभा चेति। शिष्यप्रतिभे व्याख्यातव्य इति। काव्यं कस्मा उपदेष्टव्यम्। तत्काव्यं कथमुत्पद्यते तस्य कारणं किमित्याकांक्षायामाह—*शिष्येति*। तदुक्तस्वरूपं काव्यं शिष्यायोपदेष्टव्यम्। स तदधिकारी। तत्कारणं प्रतिभा एवं शिष्याः कीदृशाः। काहि प्रतिभा इति व्याख्यातव्या अस्माभिः। इति सूत्रार्थः।

को नाम शिष्य इत्याकाङ्क्षायां विकल्प्य दर्शयति विद्वांसः शिष्यं द्विविधमाचक्षते कथयन्ति। एको बुद्धिमानपरो हि आहार्यबुद्धिः। यस्य शिष्यस्य बुद्धिः प्रज्ञा निःसर्गतः स्वभावादेव शास्त्रमनुधावति अनुसरति स बुद्धिमान्। यस्य शिष्यस्य बुद्धिं शास्त्रसम्बन्ध्यभ्यासः संस्कुरुते शोधयति उत्तेजयति असौ आहार्यबुद्धिः।

लक्षस्यैकदेशं विशिनष्टि—*त्रिधेति*। सा बुद्धिः त्रिधा। भूतभवद् भविष्यदर्थस्य पर्यालोचयितृत्वात्तस्यास्त्रैविध्यम्। स्मृत्यादिभेदेन त्रिप्रकारापि सा कवयितॄणामुपकारिणी। तयोः शिष्ययोर्मध्ये बुद्धिमान् शिष्यःशुश्रूषते उपासते,। शृणोति,। गृह्णीते स्वीकरोति, धारयति पदार्थे चित्तं स्थिरीकरोति। विजानाति बुद्ध्यते। ऊहते तर्कते। अपोहति समाधत्ते शङ्कारहितो भवतीत्यर्थः। तत्वं वस्तुस्थितिमभिनिविशते अध्यवस्यति। एतेऽष्टौ बुद्धेर्गुणा उक्तं च—

शुश्रूषा श्रवणं चैव ग्रहणं धारणं तथा।
ऊहापोहोऽर्थविज्ञानं तत्वज्ञानं च धीगुणाः। इति।

गुणाः किन्तु प्रशास्तारमपेक्षन्ते। अहरहः सुगुरूपासना तयोः प्रकृष्टो गुणः। सा हि बुद्धिविकाशकामधेनुः। तदाहुः—

"प्रथयति पुरः प्रज्ञाज्योतिर्यथार्थपरिग्रहे
तदनु जनयत्यूहापोहक्रियाविशदं मनः।
अभिनिविशते तस्मात्तत्त्वं तदेकमुखोदयं
सह परिचयो विद्यावृद्धैः क्रमादमृतायते॥"

ताभ्यामन्यथाबुद्धिर्दुर्बुद्धिः। तत्र बुद्धिमतः प्रतिपत्तिः। स खलु सकृदभिधानप्रतिपन्नार्थः कविमार्गं मगयितुं गुरुकुलमुपासीत। आहार्यबुद्धेस्तु द्वयमप्रतिपत्तिः सन्देहश्च। स खल्वप्रतिपन्नमर्थं प्रतिपत्तुं सन्देहं च निराक-

---

अन्यस्यापि एत एव गुणा धीगुणा भवन्ती। यद्युभयोरपि समाना एव गुणास्तर्हि कोनयोर्भेदः इत्यतआह—*किन्तु—इति*। यद्यपि तस्यापि एत एव गुणाः किन्तु प्रशास्तारं शिक्षकमपेक्षन्ते। शिक्षकमन्तरा स्वयं तानाधातुं न शक्नोति।

सर्वसामान्यगुणान्निर्दिश्य विशेषगुणं निर्दिशति—*अहरह इति*। अहरहः प्रत्यहं सद्गुरोः सेवा तयोर्बुद्धिमानाहार्यबुद्ध्योः प्रकृष्टो गुणः उत्तमो गुणः। सा हि सुगुरुपासना हि बुद्धेर्विकाशस्य स्फूर्त्तेः कामधेनुः। तदाहुः।

सद्गुरूपासनाया बुद्धिविकाशकामधेनुत्वे प्रावादुकपद्यमवतारयति—प्रथयतीति।

विद्यावृद्धैः विचक्षणैः साकं परिचयः प्रणयः क्रमादुत्तरोत्तरममृतायतेऽमृतमिवाचरति। विद्यावृद्धोपासनाऽमृतमिव जीवनस्य बुद्धेः संदीपनीतिभावः। क्रमं दर्शयति। पुरः प्रथमं यथार्थस्य यथावस्थितवस्तुनः परिग्रहे परिज्ञाने प्रज्ञैव बुद्धिरेव अज्ञानतमोनाशकत्वाज्ज्योतिस्तेजः प्रथयति विशदयति। तदनु प्रज्ञाज्योतिःप्रथनमनु मनः अन्तः करणम्, ऊहस्तर्कः, अपोहः समाधानम्, तयोः क्रियायां विशदं चतुरं जनयति विदधाति। सदसद्विवेचनसमर्थं करोति, इति भावः। तस्मात् विवेचनसामर्थ्यात्। तन्मनः, एकमुखोदयम् एकं केवलं मुखं प्रधानमुदयत उत्कृष्टं भवति यस्मिन्। तत् तत्वं सिद्धान्तमिति यावत् अभिनिविशतेऽध्यवस्यति निश्चिनोति। अभिनिविशश्चेति तत्वस्य कर्मत्वम्। वृद्धोपासनया धीगुणा वर्द्धन्ते वृद्धाश्च ते बुद्धिं स्फावयन्ति, इति भावः।

*ताभ्यामिति*। बुद्धिमदाहार्यबुद्धिभ्यां विपरीतो दुर्बुद्धिः। एवं त्रिविधानां तेषां क्रियाभेदं दर्शयति—*तत्रेति*। प्रतिपत्तिर्ज्ञानम्। *सकृदिति*—एकवारकथनेनैव ज्ञातार्थः। मृगयितुमन्वेषयितुम्। उपासीत सेवेत। अप्रतिपत्तिरज्ञानम्। सन्देहः शङ्का। अज्ञातं ज्ञातुम्। शङ्का निराकर्तुं दूरीकर्त्तुम्। उपतिष्ठेत सेवेत। सर्वत्र वस्तुनि

त्तुमाचार्यानुपतिष्ठेत। दुर्बुद्धेस्तु सर्वत्र मतिविपर्यास एव। स हि नीलीमेचकितसिचयकल्पोऽनाधेयगुणान्तरत्वात्तं यदि सारस्वतोऽनुभावः प्रसादयति तमौपनिषदिके वक्ष्यामः। "काव्यकर्मणि कवेः समाधिः परं व्याप्रियते" इति श्यामदेवः। मनस एकाग्रता समाधिः। समाहितं चित्तमर्थान्पश्यति उक्तञ्च—

"सारस्वतं किमपि तत्सुमहारहस्यं यद्गोचरं च विदुषां निपुणैकसेव्यम्।
तत्सिद्ध्ये परमयं परमोऽभ्युपायो यच्चेतसो विदितवेद्यविधेः समाधिः॥"

"अभ्यासः" इति मङ्गलः। अविच्छेदेन शीलनमभ्यासः। स हि सर्वगामी सर्वत्र निरतिशयं कौशलमाधत्ते। समाधिरान्तरः प्रयत्नो बाह्यस्त्व-

---

मतिविपर्यासः बुद्धेरन्यथाभावः। नीलीति। नीली च मेचकश्चेति नीलीमेचकौ। तौ सञ्जातौ यस्मिन् असौ नीलीमेचकितः एवम्भूतः यः सिचयस्तत्सदृशः। *अनुभाव इति*। सरस्वत्यास्तेजः। प्रसादयति अनुगृह्णाति। *काव्येति*—काव्यक्रियायां कवेः समाधेरेव व्यापारः। इति श्यामदेवः। एतन्नामा कश्चिदाचार्यः। तदुक्तम्, मनसि सदा सुसमाधिनि विस्फुरणमनेकधाभिधेयस्य। इति। समाधेः स्वरूपं कथयति—*मनस इति*—मनसः चित्तस्य एकाग्रता बाह्यार्थनिवृत्तिः समाधिरवधानम्। बहिरिन्द्रियव्यापारविरामान्मनसो बाह्यार्थानुपरक्तिर्भवति। सैव समाधिपदव्यपदेश्या।

समाधानस्य फलं कथयति—समाहितमवहितं चित्तमर्थान्पश्यति अभिनवपदार्थान् अप्रतिबन्धमुल्लिखतीत्यर्थः। प्राच्याचार्यमतं प्रमाणयति—उक्तंचेति।

सारस्वतमिति। यत्तत्वं विदुषां देवतुल्यानामित्यर्थः। विद्वांसो हि देवा इति स्मृतेः। गोचरं विषयम्। तेषामेव गम्यमितिभावः॥ च पुनः निपुणेन केवलं सेव्यमस्ति। तत्प्रसिद्धं सुमहारहस्यं किमप्यनिर्वचनीयं सारस्वतं सारं वर्त्तते इति शेषः। तस्य सारस्वतसारस्य सिद्धये प्राप्तये अयं परम्, अयमेव। परमितिमान्तमव्ययमेवकारार्थम्। परमः पराकाष्ठापन्नः अभ्युपायो हेतुः। यत् विदितो वेद्यस्य विधिर्येन तस्य चेतसो मनसः समाधिरवधानम्।

काव्यकर्मणि परमतं दर्शयति—*अभ्यास इति*। अभ्यासः काव्यकर्मणि व्यापारः। मङ्गलो वात्स्यायनसूत्रोपरि भाष्यकर्त्ता जयमंगलः। अभ्यासलक्षणं वक्ति *अविच्छेदेति। सततं प्रवृत्ति काव्यविच्छिक्षयाऽभ्यासः। अभ्यासप्रयोजनमभिधत्ते—*सहीति*। सहि अभ्यासः सर्वगामी सर्वत्र कर्मणि निरतिशयं कौशलं चातुर्यमाधत्ते।

समाधिर्वा अभ्यासो वा न काव्यस्य साक्षात्कारणम्। किन्तु शक्तिमुपकृत्यैव

भ्यासः । तावुभावपि शक्तिमुद्भासयतः । "सा केवलं काव्ये हेतुः" इति यायावरीयः । विप्रसृतिश्च सा प्रतिभाव्युत्पत्तिभ्याम् । शक्तिकर्तृके हि प्रतिभाव्युत्तिकर्मणी । शक्तस्य प्रतिभाति शक्तश्च व्युत्पद्यते । या शब्दग्राममर्थसार्थमलङ्कारतन्त्रमुक्तिमार्गमन्यदपि तथाविधमधिहृदयं प्रतिभासयति सा प्रतिभा । अप्रतिभस्य पदार्थसार्थः परोक्ष इव, प्रतिभावतः पुनरपश्यतोऽपि प्रत्यक्ष इव । यतो मेधाविरुद्रकुमारदासादयो जात्यन्धाः कवयः श्रूयन्ते । किञ्च महाकवयोऽपि देशद्वीपान्तरकथापुरुषादिदर्शनेन तत्रत्यां व्यवहृतिं निबध्नन्ति

---

साक्षात्तु शक्तिरेवेति अभिप्रायवानाह--*समाधिरिति* । समाधिरान्तरो मानसिकः, अभ्यासस्तु बाह्य प्रयत्नः । तावुभौ समाध्यभ्यासौ अपि शक्तिं कवित्वबीजभूतां कार्यकल्पनीयां कांचिद्वासनामुद्भासयतः उत्तेजयतः । काव्ये सैव शक्तिरेव हेतुः । इति स्वभावतो दर्शितः प्रतिभाव्युत्पत्तिभ्यां चास्याः शक्तेः विप्रसृतिः वृद्धिः । प्रवृद्धप्रसृते । इत्यमरः । पाठविकल्पो वर्त्तते । विप्रसृतिश्चास्याः प्रतिभाव्युत्पत्तिभ्यामिति । विप्रसृतिश्च,सा प्रतिभाव्युत्पत्तिभ्याम् ।

अथवा । आभ्यां भेदं प्रदर्श्य शक्तेरन्यतोऽपि भेदं दर्शयति । *विप्रसृतिरिति* सा शक्तिः, प्रतिभा च व्युत्पत्तिश्चेति ताभ्यामपि विप्रसृतिर्भिन्ना । चोप्यर्थे । दृष्टान्तेन विवेकेन वा भेदमुपपादयति-शक्तीति । प्रतिभाव्युत्पत्तीक्रिये शक्तिजन्ये । कथं तज्जन्यत्वं तस्या इत्यत आह *शक्तेति* । शक्तः शक्तिमान् व्युत्पद्यते लोकशास्त्रकाव्येषु निपुणो भवति । शक्तिमतः शक्तस्य प्रतिभातिं काव्यघटनाकूलशब्दार्थोपस्थिति जायते ।

प्रतिभां व्यनक्ति--या काचनानिर्दिष्टनाम्नी शब्दार्थसमूहमलङ्कारसिद्धान्तं तन्नियमं वान्यदपि तादृशमुक्तिमार्गं भणितिप्रकारं।अधिहृदयम् हृदये प्रतिभासयति समुद्भावयति सा प्रतिभा। अस्याः प्रयोजनमभिधत्ते--*अप्रतिभेति* । प्रतिभादरिद्रस्य पदार्थसमूहः प्रत्यक्षोऽपि अप्रत्यक्षः । तद्युक्तस्य तु अपश्यतोऽपि चर्मचक्षुषेति शेषः । ज्ञानदृष्ट्या तु पश्यत्येव । अन्यथा अक्ष्णोः प्रतीति प्रत्यक्षत्वव्याघातः स्यात् । प्रत्यक्ष इव परोक्षवर्त्तिविषयोऽपि साक्षादिवेत्यर्थः । अत्रार्थं दृष्टान्तयति—*यत इति* । यतो मेधाविप्रभृतयो जात्यन्धा अत एवापश्यन्तः कवयो लोकोत्तरवर्णनानिपुणाः श्रूयन्ते ।

*किञ्चेति* दर्शनेन ज्ञानेन । व्यवहृतिमाचरणपद्धतिम् । चर्मचक्षुषा दर्शनं न सापेक्षम् । तद्दर्शनस्य जात्यन्धेषु कविषु तथा महाकविकृतदेशद्वीपन्तरादिव्यवहारवर्णनेषु चाभावाद्व्यभिचारः । दिव्यदर्शनवतां तु तेषां सकलं जगत् प्रत्यक्षम् । एतदेवोदा-

स्म । तत्र देशान्तरव्यहारः—

"प्राणानामनिलेन वृत्तिरुचिता सत्कल्पवृक्षे वने
तोये काञ्चनपद्मरेणुकपिशे पुण्याभिषेकक्रिया ।
ध्यानं रत्नशिलागृहेषु विबुधस्त्रीसन्निधौ संयमो
यत्काङ्क्षन्ति तपोभिरन्यमुनयस्तस्मिंस्तपस्यन्त्यमी ॥"

द्वीपान्तरव्यवहारः—"अनेन सार्द्धं विहराम्बुराशेस्तीरेषु ताडीवनमर्मरेषु ।
द्वीपान्तरानीतलवङ्गपुष्पैरपाकृतस्वेदलवा मरुद्भिः ॥"

---

इत्य दर्शयति—तत्रेति । कविना निवद्ध इति ।

*प्राणानामिति*—शाकुन्तले सुरकार्यं निर्वर्त्य प्रत्यागच्छतो दुष्यन्तस्य मारीचाश्रमदर्शनेन जातविस्मयस्योक्तिः ।

सत्कल्पवृक्षेऽपि वने यत्र सङ्कल्पमात्रेण मनोरथानां सिद्धिर्भवति तस्मिन् । तेषामपि वने वृक्षसमूहे । एकस्यापि सद्भावे सकलेष्टसिद्धिर्भवति किम्पुनः समूहस्यास्तित्वे । तत्रापि उचिता शरीरमाद्यं खलुधर्मसाधनमिति कृत्वा शरीरधारणार्थमवश्य कर्त्तव्या न तु राजादिवद्यथेष्टम् । तत्रापि प्राणानां वृत्तिः न तूपभोगः । अनिलेन वायुना न तु कल्पवृक्षोत्थापितदिव्यवस्तुना । प्रार्थयित्वामृतादिद्वारा तु दूरापेता । काञ्चन पद्मानां रेणुभिः कपिशे पिङ्गवर्णे तोये धर्मार्थम् । न तु स्त्रीभिः साकं क्रीडार्थम्, अभिषेकक्रिया त्रैकालिकस्नानविधिः । रत्नशिलातलेषु ध्यानं न तु तत्वेन तत्र क्रीडादिकम् । आधारमात्रपर्यवसितत्वात् । विबुधानां स्त्रियस्तासां सन्निधौ संयमः इन्द्रियाणि विरम्य वाह्यार्थानुपरक्तिः । अन्यसन्निधावेव संयमो न सिध्यति विशेषतः स्त्रीसन्निधौ ततोऽपि विबुधस्त्रीसन्निधौ, आश्चर्यं महदाश्चर्यम् । अन्यमुनयो यत्स्थानं तपोभिः कांक्षन्ति तपःफलत्वेनेच्छन्ति तस्मिन्स्थानेऽमी मारीचप्रभृतयः तपस्यन्ति तपश्चरन्ति । 'कर्मणो रोमन्थतपोभ्यां वर्त्तिचरोः, इति क्यङ् । तपसः परस्मैपदं चेति परस्मैपदम् । अत्र सत्कल्पवृक्षादीनां कारणानां सद्भावेऽपि राजादिसमुचितोपभोगादिकार्याभावोक्तिरिति विशेषोक्तिः । सा च निमित्तस्य कल्पवृक्षादिविरुद्धानिलप्राणवृत्तित्वाद्युक्तेरुक्तनिमित्ता । मारीचाश्रमतपस्यारूपहेतुमतस्तपसो हेतोः स्पष्टमनभिधानात्निरतिशयतपःकरणोत्कर्षपर्यवसायी हेत्वलङ्कारो व्यग्यः । अत्र कविना स्वनेत्राभ्यामदृष्टोऽपिस्वर्गीयवहारः कल्पनयोपनिवद्धः ।

द्वीपान्तरव्यवहारो यथा—*अनेनेति* । रघुवंशीयं पद्यम् । अत्र सुनन्दाद्वारा कलिङ्गनाथमुपवर्णयता कविना स्वाननुभूतः । समुद्रतटीयद्वीपस्य व्यवहारः द्वीपान्तरे लवंगानां सद्भावः तत्सौरभाभावितेन मरुता सुरतकालीनश्रमजन्यस्वेदानामपा-

काव्यपुरुषव्यवहारः—"हरोऽपि तावत्परिवृत्तधैर्यश्चन्द्रोदयारम्भ इवाम्बुराशिः।
उमामुखे बिम्बफलाधरोष्ठे व्यापारयामास विलोचनानि ॥"
आदिग्रहणात्—"तथागतायां परिहासपूर्वं सख्यां सखी वेत्रभृदाबभाषे।
बाले व्रजामोऽन्यत इत्यथैनां वधूरसूयाकुटिलं ददर्श ॥"

सा च द्विधा कारयित्री भावयित्री च। कवेरुपकुर्वाणा कारयित्री। साऽपि त्रिविधा सहजाऽऽहार्यौपदेशिकी च। जन्मान्तरसंस्कारापेक्षिणी सहजा। इह जन्मसंस्कारयोनिराहार्या। मन्त्रतन्त्राद्युपदेशप्रभवा औपदेशिकी।

---

करणम् इत्यादिरूपो निबद्धः, तत्प्रतिभाया माहात्म्यम्।

अनेन सार्धं ताडीवनमर्मरेषु अम्बुराशेस्तीरेषु द्वीपान्तरानीतलवंगपुष्पैः मरुद्भिरपाकृतस्वेदलव सती विहर क्रीडेति योजना सुगमा।

काव्यपुरुषव्यवहारो यथा--हरोपीति। अत्र स्वप्नेपि त्रिलोचनमप्यनवलोकयता किमुत तच्चेष्टां तथापि कविना उमामुखे तदवलोकनजनितधैर्यस्खलनतया साभिलाषलोचनव्यापारो हरस्योपनिबद्धः, सोहि प्रतिभाप्रभावः।

हरोपि चन्द्रोदयारम्भेऽम्बुराशिरिव किंचित्परिवृत्तधैर्यः न तु प्राकृतवदत्यन्तलुप्तधैर्यः, बिम्बफलाधरोष्ठ उमामुखे विलोचनानि व्यापारयामास साभिलाषमद्राक्षीदित्यन्वयः सुगमः।

देशद्वीपादीत्यत्रादिग्रहणादाकारस्य प्रासङ्गिकस्योपनिबन्धनम्। तथागतायामिति—अत्रेन्दुमत्या अजविषयकाभिलाषदर्शनेन परिहसन्तीं सखीं प्रत्यसूयया कुटिलदर्शनं कल्पनयोपनिबद्धं, तत्समसमयाभूतेन कविना।

सख्या तथाभूतायां जातानुरागायां सत्यां सखी वेत्रभृत्सुनन्दा हे आर्ये! अन्यतो व्रजाम इत्याबभाषे। अथ वधूरेनामसूयया कुटिलं यथा तथा ददर्शेति सरलैव व्याख्या।

इत्थं प्रतिभां समर्थ्य तस्या विकल्पान्दर्शयति *साचेति* सा प्रतिभा द्विप्रकारा। एका कारयित्री अपरा भावयित्री। कवेः काव्यकर्मणि साहाय्यमादधती प्रथमा। तामपि विकल्पयति *सापीति*। एता अपि संक्षेपविस्तराभ्यां लक्षयति। *जन्मान्तरेति*। या जन्मान्तरस्य संस्कारमपेक्षते सा प्रथमा सहजा स्वाभाविकी। इह जन्मनः संस्कारो योनिः कारणं यस्याः साऽऽहार्या उत्पाद्या। मन्त्रतंत्रादीनामुपदेशेन उत्पन्ना औपदेशिकी। प्राच्यास्तु प्रतिभायाः सहजोत्पाद्येति द्वैविध्यं स्वीकुर्वन्त इत्थमूचुः।

प्रतिभेत्यपरैरुदिता सहजोत्पाद्या च सा द्विधा भवति।
पुंसा सहजातत्वादनयोस्तु ज्यायसी सहजा।

ऐहिकेन कियतापि संस्कारेण प्रथमां तां सहजेति व्यपदिशन्ति। महता पुनराहार्या। औपदेशिक्याः पुनरैहिक एव उपदेशकालः, ऐहिक एव संस्कारकालः। त इमे त्रयोऽपि कवयः सारस्वत, आभ्यासिक, औपदेशिकश्च। जन्मान्तरसंस्कारप्रवृत्तसरस्वतीको बुद्धिमान्सारस्वतः। इह जन्माभ्यासोद्भासितभारतीक आहार्यबुद्धिराभ्यासिकः। उपदेशितदर्शितवाग्विभवा दुर्बुद्धिरौपदेशिकः। तस्मान्नेतरौ तन्त्रशेषमनुतिष्ठताम्। "नहि प्रकृतिमधुरा द्राक्षा फाणितसंस्कारमपेक्षते" इत्याचार्याः। "न" इति यायावरीयः। एकार्थं हि

---

स्वस्यासौ संस्कारे परमपरं मृगयते यतो हेतुम्।
उत्पाद्या तु कथं चिद् व्युत्पत्या जन्यते परया।
एषां मते उत्पाद्यायामेव आहार्योपदेशिक्योरन्तर्भावः।

ननु एवं जन्मान्तरस्यादृष्टचरत्वादासां ज्ञानमेव दुर्लभमिति शंकमानमाह–*ऐहिकेनेति*। या जन्मान्तरसंस्कारापेक्षिणी अपि एतज्जन्मनोऽल्पेनापि संस्कारेणोद्बुद्धा तां प्रथमां सहजेति निर्दिशन्ति। या पुनः महता संस्कारेणोत्पद्यते सा आहार्येति व्यपदिश्यते।

सिंहावलोकनवत् पूर्वोक्तान् कविप्रभेदान् संगमयति। *त इम इति* एवमुपदर्शितप्रतिभाभेदात् त इमे पूर्वोक्ताः कवयोऽपि त्रयः सारस्वताभ्यासिकौपदेशिकभेदात्। व्याचष्ट–*जन्मेति*। जन्मान्तरसंस्कारेण प्रवृत्ता सरस्वती यस्यासौ बुद्धिमान् सारस्वतः। इह जन्मनोऽभ्यासेनोद्भासिता भारती यस्यासौ (उभयत्र शेषेविभाषेति कप्) आहार्यबुद्धिराभ्यासिकः। उपदेशितैर्मन्त्रतन्त्रादिभिः दर्शितो वाचां विभवो येन स दुर्बुद्धिरौपदेशिकः।

*तस्मादिति*। तस्मात् सारस्वताभ्यासिकौ यथायोग्यं बह्वल्पाभ्यासेन लब्धसारस्वतप्रभावौ तस्मात् दुर्बुद्धेरितरौ तौ न तन्त्रशेषमनुतिष्ठताम्। उक्तार्थं पूर्वाचार्यमतमुपस्थापयति *नहीति*। निसर्गेण मधुरा द्राक्षा फाणितसंस्कारमद्धावर्त्तितेक्षुरसप्रयोगम्। फाणितलक्षणमुक्तं भावप्रकाशे—

इक्षो रसस्तु यः पक्कः किंचिद्गाढो बहुद्रवः।
स एवेक्षुविकारेषु ख्यातः फाणितसंज्ञया॥ इति।

न अपेक्षते। इत्याचार्याः। स्वमतं दर्शयति—*नेति*। सारस्वताभ्यासिकौ तन्त्रादि नानुतिष्ठतामिति यदुक्तं तन्न समीचीनम्। यतो हि एकार्थमुद्दिश्य कृतं क्रियाद्वयं द्विगुणभावमाधातुं शक्नोति।

क्रियाद्वयं द्वैगुण्याय सम्पद्यते । "तेषां पूर्वः पूर्वः श्रेयान्" इति श्यामदेवः । यतः—

"सारस्वतः स्वतन्त्रः स्याद्भवेदाभ्यासिको मितः ।
औपदेशककविस्त्वत्र वल्गु फल्गु च जल्पति ॥"

"उत्कर्षः श्रेयान्" इति यायावरीयः । स चानेकगुणसन्निपाते भवति । किञ्च—

"बुद्धिमत्वं च काव्याङ्गविद्यास्वभ्यासकर्म च ।
कवेश्चोपनिषच्छक्तिस्त्रयमेकत्र दुर्लभम् ॥
काव्यकाव्याङ्गविद्यासु कृताभ्यासस्य धीमतः ।
मन्त्रानुष्ठाननिष्ठस्य नेदिष्ठा कविराजता ॥"

कवीनां तारतम्यतश्चैष प्रायोवादः । ( यथा )

"एकस्य तिष्ठति कवेर्गृह एव काव्य-
मन्यस्य गच्छति सुहृद्भवनानि यावत् ।

---

एतेषामुत्कर्षापकर्षौ परमतेन विचारयति । *तेषामिति* । तेषां मध्ये पूर्वः पूर्वः श्रेयान् औपदेशिकादाभ्यासिकस्तस्माच्च सारस्वतः श्रेयान् । इति श्यामदेवः ।

पूर्वपूर्वस्य श्रेयस्त्वे हेतुमुपन्यस्यति—*यतः इति* यतः सारस्वतः स्वतन्त्रः स्यात्, यथेच्छति तथाऽल्पं महत् सुन्दरं कर्तुं शक्तः । आभ्यासिको मितो, भवेत्, औपदेशिककविस्तु वल्गु सुन्दरं फल्गु निःसारं च जल्पति । कदाचिद् घुणाक्षरन्यायेन सुन्दरमितरथा तु निःसारमेव वल्गाति । अतः पूर्वः पूर्वः श्रेयान् अधिकः ।

स्वमतं दर्शयति । *उत्कर्ष इति* । उत्कर्षः अतिशयः श्रेयान् अतिप्रशस्यः । इतियायावरीयः । तस्य कारणं दर्शयति सचोत्कर्षश्च अनेकेषां गुणानां सन्निपाते संघाते भवति ।

किञ्चेति गुणान्दर्शयति—*बुद्धिमत्वमिति* । काव्यस्य अंगिनीषु विद्यासु बुद्धिमत्वं नैपुण्यम्, अभ्यासकर्म च काव्यक्रियायामितिशेषः, कवेः जातित्वादेकवचनम् । कवीनामुपनिषद्रहस्यं शक्तिश्च । एतत्त्रयमेकत्र पुरुषे दुर्लभम् दुष्प्राप्यम् ।

*काव्येति । काव्ये काव्यांगविद्यासु कृताभ्यासस्य मन्त्रानुष्ठाननिष्ठस्य धीमतो बुद्धिमतः कविराजता कविराजपदं नेदिष्ठा समीपे वर्त्तते ।

*कवीनामिति* । तरतमभावादियं प्रसिद्धिः । यथा

*एकस्येति* । एकस्य कवेरौपदेशिकस्य काव्यं गृह एव स्वगृहभित्तावेव तिष्ठति ।

न्यस्याविदग्धवदनेषु पदानि शश्व
त्कस्याऽपि सञ्चरति विश्वकुतूहलीव ॥"

सेयं कारयित्री । भावकस्योपकुर्वाणा भावयित्री । सा हि कवेः श्रममभिप्रायं च भावयति । तया खलु फलितः कवेर्व्यापारतरुः । अन्यथा सोऽवकेशी स्यात् । "कः पुनरनयोर्भेदो यत्कविर्भावयति भावकश्च कविः" इत्याचार्याः । तदाहुः—

"प्रतिभातारतम्येन प्रतिष्ठा भुवि भूरिधा ।
भावकस्तु कविः प्रायो न भजत्यधमां दशाम् ॥"

---

न कोपि तदादरबुद्ध्या पश्यति । अन्यस्याभ्यासिकस्य काव्यं सुहृद्भवनानि यावत् तद्भवनपर्यन्तं गच्छति तेषामेवानन्दजनकत्वात् । सर्वोपकारित्वजनसाधारणरमणीयत्वयोरभावाच्च । श्रुतिरमणीयतया मूर्खजनमारभ्याऽऽविदग्धानां भावुकानां वदनेषु पदानि न्यस्य तैः सादरं सेव्यमानं कस्य धन्यस्य काव्यं विश्वस्य दर्शने कुतुहलि इव शश्वन्निरन्तरं सञ्चरति । रसास्वादेन तेषां शिरोघूर्णयद् भ्रमति । एवं यस्य काव्यं जनसाधारणग्राह्यं विदग्धहृदायवर्जकं च भवति स एव कविः श्रेयान् नान्यः । तथाच त्रयाणां मध्ये कस्यापि भवेत् नात्र सम्बन्ध्यादिकं हेतुः ।

प्रतिपादितं दृष्टान्तेन स्पष्टयित्वा उपसंहरन्नाह--*सेयमिति* सेयमुपदर्शितप्रकारा प्रतिभा कारयित्री ।

अन्यां व्युत्पादयति । भावकस्य सहृदयस्योपकारिका भावयित्री । तस्याः प्रयोजनमभिधत्ते । *साहीति* । भावयित्री हि कवेः काव्यकर्त्तुः श्रमं शब्दयोजनाजन्यमायासम् । अभिप्रायं भावं च भावयति पर्यालोचयति । तया भावयित्र्या कवेर्व्यापारतरुः काव्यं फलितो भवति । अन्यथा भावयित्र्यभावे स कवेर्व्यापारतरुः काव्यरूपोऽवकेशी स्यात् वन्ध्यो भवेत् । अफलः । इति यावत् ।

कारयित्रीभावयित्र्यौ व्याख्याय प्रसंगात् तदाश्रयौ भेदपूर्वं व्यञ्जयितुं परमतं दर्शयति । *कःपुनरिति—अनयोः कविभावकयोः कः पुनर्भेदः । नास्ति कोपि भेदः इति भावः । यतः कविरपि भावयति । भावकोपि कविः । इत्याचार्याः प्राहुरिति शेषः । तदाहुरिति मतपोषकं पद्यमवतारयति ।

*प्रतिभेति,* भुवि प्रतिभायास्तरतमभावेन भूरिधा बहुप्रकारा प्रतिष्ठा आस्पदम्, (आस्पदं प्रतिष्ठायामिति पाणिनीयाः) भवति । भावुकस्तु विचारशीलस्तु कविः प्रायः अधमां निकृष्टां दशामवस्थां न भजति न प्राप्नोति ।

"न" इति कालिदासः । पृथगेव हि कवित्वाद्भावकत्वं, भावकत्वाच्च कवित्वम् । स्वरूपभेदाद्विषयभेदाच्च । यदाहुः—

"कश्चिद्वाचं रचयितुमलं श्रोतुमेवाऽपरस्तां
कल्याणी ते मतिरुभयथा विस्मयं नस्तनोति ।
नह्येकस्मिन्नतिशयवतां सन्निपातो गुणाना-
मेकः सूते कनकमुपलस्तत्परीक्षाक्षमोऽन्यः ॥"

"ते च द्विधाऽरोचकिनः, सतृणाभ्यवहारिणश्च" इति मङ्गलः । "कवयोऽपि भवन्ति" इति वामनीयाः । "चतुर्धा" इति यायावरीयः मत्सरिणस्तत्वा-

---

पूर्वविरुद्धमतं दर्शयति—*नेति* । कविभावकयोर्भेदोऽस्तीत्युक्तं तन्न इति कालिदासः कथयति । तदेव स्पष्टयति—*पृथगिति* कवित्वाद्भावकत्वं पृथगेव, भावकत्वाच्च कवित्वं पृथक् । हेतूपन्यासं करोति—*स्वरूपेति* । यः कवते काव्यं कुरुते स कविः । यस्तु काव्यानुशीलनाभ्यासवशाद्विशदीभूते मनोमुकुरे वर्णनीयतन्मयीभवनयोग्यहृदयसंवादभाक् स भावकः, इति स्वरूपभेदः । एकस्य शब्दार्थौ विषयः । अपरस्य रसास्वादो विषयः, इति विषयभेदः । तदुक्तम्, सरस्वत्यास्तत्त्वं कविसहृदयाख्यं विजयतात् । इति ।

यदाहुरिति प्रतिपादितेऽर्थे केषां पद्यं प्रमाणयति*कश्चिदिति* । कश्चित्कारयित्रीप्रतिभाविशिष्टः कविः वाचं शब्दरूपां वाणीं रचयितुमलम् योजयितुं समर्थः। अपरो भावयित्रीप्रतिभायुक्तः तां वाचं श्रुत्वा भावयितुमित्यर्थः समर्थः । किन्तु उभयथा कारयित्रीभावयित्र्युभयरूपेण स्थिता काव्यकर्तृतद्विवेक्तृशक्तिशालिनीति यावत् अत एव कल्याणी ते मतिर्बुद्धिः नोऽस्माकं विस्मयमाश्चर्यं तनोति । ईदृशीमलौकिकीं बुद्धिमनुभवन्तो वयं विस्मयामहे ।

विस्मयकारणमर्थान्तरन्यासेन दर्शयति—*न हीति* । हि यतः, एकस्मिन् वस्तुनि अतिशयवतां सोत्कर्षाणां गुणानां सन्निपातः संघातो न भवत्येवेति सामान्येन पूर्वोक्तविशेषसमर्थनम् । अत्रापि समर्थनाकांक्षायां विशेषरूपमर्थान्तरं न्यस्यति—*एक इति* । एक उपलः सौमेरवः पाषाणः कनकं सूते सुवर्णमुत्पादयति । अन्य उपलो निकषाद्भिन्नः सुवर्णपरीक्षासमर्थः । अत्र पूर्वं विशेषसमर्थनाय सामान्यस्योपादानं कृतं तस्यापि समर्थनापेक्षित्वे विशेषस्योपादानादत्र विकस्वरालङ्कारः । 'यस्मिन् विशेषसामान्यविशेषाः स विकस्वरः" इति तल्लक्षणम् ॥

*ते चेति* । ते भावकाः द्विविधाः, केचिदरोचिकिनः, केचित् सतृणाभ्यवहारिणो भवन्ति, इति मंगलः प्राह । एवंभूताः कवयोऽपि भवन्तीति वामनमतानुयायिनः । स्वमतं दर्शयति । *चतुर्धा इति* । केचिन्मत्सरिणः केचित्तत्वाभिनिवेशिनः

भिनिवेशिनश्च । "तत्र विवेकिनः पूर्वं तद्विपरीतास्तु ततोऽनन्तराः" इति वामनीयाः । "अरोचकिता हि तेषां नैसर्गिकी, ज्ञानयोनिर्वा । नैसर्गिकीं हि संस्कारशतेनाऽपि वङ्गमिव कालिका ते न जहति । ज्ञानयोनौ तु तस्यां विशिष्टज्ञेयवति वचसि रोचकितावृत्तिरेव" इति यायावरीयः । किञ्च सतृणाभ्यवहारिता सर्वसाधारिणी । तथाहि—व्युत्पित्सोः कौतुकिनः सर्वस्य सर्वत्र प्रथ-

---

समालोचकाः । पूर्वयोर्द्वयोरुत्तरयोर्द्वयोः सङ्कल्या चतुर्धा ।

तेषामुत्कर्षापकर्षौ दर्शयति स्वपरमताभ्याम्—*तत्रेति । तत्र तेषां मध्ये पूर्वेऽरोचिकिनो विवेकिनः, ततोऽनन्तराः सतृणाभ्यवहारिणोऽविवेकिनः, इति वामनीया वामनमतानुयायिनः

अयमभिप्रायः । इह द्वये कवयः संभवन्ति अरोचकिनः सतृणाभ्यवहारिणश्च । न रोचयति, न प्रीणयति, इति अरोचकः । ( रुच्—णिच्—ण्वुल्—नञ्समासः ) एतन्नामा कश्चिद्रोगः । यस्मिन् सति भोजने प्रीतिर्न जायते, यथाकथंचिदास्वादितममृतमयमपि अन्नं मिष्टं न लगति । स येषामस्तीति तेऽरोचकिनः, अरोचकव्याधिशालिनः । इति वस्तुस्थितिः । कविषु तु सादृश्याद् भक्त्यास्य पदस्य प्रयोगः । अरोचकितया तेषामपि स्वरचिते मनोहरेऽपि पद्ये तुच्छत्वप्रत्ययः, परैः प्रशंसितेऽपि यावन्मदीयं पद्यं न कालीदासीयति न वा भवभूतीयति तावन्न मनसस्तोषः । एवं पदविन्यासे रसः, एवं चालंकारो भवतीत्येव मतिरुदेति । इयं च मतिः विवेकाधीना । अत एवैते विवेकिनः । तृणमप्यपरित्यज्य सतृणम् । सतृणमभ्यवहरन्ति खादन्ति । ते सतृणामभ्यवहारिणः । एषां भोजने तात्पर्यं न तु मधुरामधुरविवेके । एवं हि ये च वा हेति पादपूरकाव्ययघटितपदयोजनेनैवात्मानमिन्द्रपदाधिष्ठितं मन्यमानाः रसादीन्न पर्यालोचयन्ति तस्य कारणमविवेकः । अत एवैतेऽविवेकिनः । इति ।

स्वमतं विवृणोति । *अरोचेति* । तेषां भावकानामरोचकिता नैसर्गिकी स्वाभाविकी, ज्ञानयोनिः ज्ञानकारणं वा । वाशब्दोत्र विकल्पार्थः । नैसर्गिक्यास्तु तस्याः संस्काराणां शतेनापि अपरित्यागः । यथा वंगाद्धातुविशेषात् शोधनमारणदिपुटपाकाद्यनेकेषां संस्काराणां कृतेऽपि कालिकाया कृष्णिम्नस्त्यागो न भवति । तथा स्वाभाविकारोचकिताशालिनामपि पुंसां विद्वद्‌धुरीणैः समादृतेऽपि स्वादृते विषये चेतसोऽप्रत्ययमेव ।

ज्ञानयोनौ ज्ञानकारणीभूतायां तस्यामरोचकितायां सत्यां तु विशिष्टप्रमेयवति वाक्ये रोचकितावृत्तिरेव प्रेमपूर्वकव्यवहार एव । तद्ग्रहणे मनसि प्रीतिरुत्पद्यत एवेतिभावः । इतिराजशेखरः ।

द्वितीयां दर्शयति । *सतृणेति* । सर्वजनसमानाधिकरणा । तथाहि दर्शयति । व्युत्पत्तुमिच्छोः सर्वस्याखिलस्य कौतुकिनः काव्यनिर्मिमित्सया चेष्टयतः सर्वत्र प्रथमं

मं सा । प्रतिभाविवेकविकलता हि न गुणागुणयोर्विभागसूत्रं पातयति । ततो बहु त्यजति बहु च गृह्णाति । विवेकानुसारेण हि बुद्धयो मधु निष्यंदन्ते । परिणामे तु यथार्थदर्शी स्यात् । विभ्रमभ्रंशश्च निःश्रेयसं सन्निधत्ते । मत्सरिणस्तु प्रतिभातमपि न प्रतिभातं, परगुणेषु वाचंयमत्वात् । स पुनरमत्सरी ज्ञाता च विरलः । तदुक्तम्--

"कस्त्वं भोः कविरस्मि काप्यभिनवा सूक्तिः सखे पठ्यतां
त्यक्ता काव्यकथैव सम्प्रति मया कस्मादिदं श्रूयतां ।
यः सम्यग्विविनक्ति दोषगुणयोः सारं, स्वयं सत्कविः
सोऽस्मिन्भावक एव नास्त्यथ भवेद्दैवान्न निर्म्मत्सरः ॥"

तत्त्वाभिनिवेशी तु मध्येसहस्रं यद्येकस्तदुक्तम्--

"शब्दानां विविनक्ति गुम्फनविधीनामोदते सूक्तिभिः

---

सा सतृणाभ्यवहारिता । प्रतिभायाः विवेकस्य विचारस्य च विकलता राहित्यं दोषगुणयोर्विभजनकारि सूत्रं न पातयति, सत्यां च तस्यां गुणागुणविवेकं कर्त्तुमसमर्थो भवतीति भावः । *तत इति* । ततस्तद्राहित्यादेव । निष्यन्दन्ते स्रावयन्ति । *विभ्रमेति* वैकल्यविध्वंसः कल्याणं समीपयति प्रापयति । *मत्सरिण इति* मत्सरोऽन्यशुभद्वेषः । सोऽस्यास्तीति तस्य । परगुणेषु परोत्कर्षेषु वाचंयमत्वात् । *सेति* । स भावकः पुनर्विरलो योऽमत्सरी सन् प्रतिभासंपन्नो भवेत् ।

तदुक्तमित्युक्तार्थं प्रावादुकपद्यं प्रमाणयति-*कस्त्वमिति* । भोः ? कस्त्वम्, कविरस्मि । प्रश्नः । हे सखे । कापि अनिर्वचनीया रसभावभरिता अभिनवा अनालोचितपूर्वा सूक्तिः मधुरार्थमयं काव्यं पठ्यतां निगद्यताम् । *उत्तरति* । मया सम्प्रति काव्यकथैव त्यक्ता । प्र० इदं काव्यकथापरित्यजनम् कस्मात् । उ० श्रूयताम् । यः स्वयं सत्कविः सन् । दोषश्च गुणश्चेति तयोः । यद्यप्यभ्यर्हितत्वाद्गुणानामेव प्राङ् निर्देशः कर्त्तुं समुचितः तथापि "इष्टानुवर्तनात्कुर्यात्प्रागनिष्टनिवर्त्तनम्" इति नीत्या गुणादानात्पूर्वं दोषसमीक्षैव कविना कर्त्तव्येति सूचयितुं प्रथमतो दोषस्य परतो गुणस्य उपादानं कृतम् । यत उक्तं च "स्याद्वपुः सुन्दरमपि श्वित्रेणैकेन दुर्भगम्" इति । दोषगुणयोः सारं सम्यक् विविनक्ति, निर्धारयति स एवंविधो भावकोऽस्मिन् जगति नास्त्येव । अभ्युपगम्योच्यते । अथ यदि कदाचित् भवेत् तदा निर्मत्सरः परगुणोत्कर्षसहिष्णुर्नास्ति । *तत्वेति* । तत्वाभिनिवेशी समालोचकस्तु यदि सहस्राणां मध्ये कश्चिद्भवेत् तर्हि एकः ।

तदुक्तमिति दर्शयति । शब्दानामिति । यः शब्दानां गुम्फनविधीन्, विवि-

सान्द्रं लेढि रसामृतं विचिनुते तात्पर्यमुद्रां च यः ।
पुण्यैः सङ्घटते विवेक्तृविरहादन्तर्मुखं ताम्यतां
केषामेव कदाचिदेव सुधियां काव्यश्रमज्ञो जनः ॥
स्वामी मित्रं च मन्त्री च शिष्यश्चाचार्य एव च ।
कवेर्भवति ही चित्रं किं हि तद्यन्न भावकः ॥
काव्येन किं कवेस्तस्य तन्मनोमात्रवृत्तिना ।
नीयन्ते भावकैर्यस्य न निबन्धा दिशो दश ॥
सन्ति पुस्तकविन्यस्ताः काव्यबन्धा गृहे गृहे ।
द्वित्रास्तु भावकमनःशिलापट्टनिकुट्टिताः ॥
सत्काव्ये विक्रियाः काश्चिद्भावकस्योल्लसन्ति ताः ॥

---

नक्ति, इदं पदं यदि तत्र न्यस्येत तर्हि सोऽत्रालंकारो रसो वा निपतेत्, अस्य निष्कासनेऽसौ दोषोऽपि निर्गच्छेत्। इत्यादि विचारयति। यः सूक्तिभिरामोदते। अहो अपूर्वा दृष्टिः। ( अनोखी सूझ ) इत्यादिप्रकारैर्हृष्यति। रसमेवामृतं सान्द्रं यथा स्यात्तथा लेढि आस्वादयति। तात्पर्यस्य मुद्रां किमर्थबोधनेच्छयेदं पदमत्र विन्यस्तं को वास्य भावः। इति विचिनुते मृगयते। विवेक्तुर्विरहस्तस्मात् विवेचकाभावात्परिज्ञातृदौर्लभ्यात् इति यावत्। मुखस्यान्तः अन्तर्मुखम् श्रोतुरभावे मुखादनिःसरणेन दुःखात्ताम्यतां ग्लायताम् केषामेव न तु सर्वेषां कदाचिदेव न तु सर्वदा पुण्यैर्न तु पुण्येन काव्यकरणे श्रमं जानातीति काव्यश्रमज्ञो जनः सङ्घटते संयुनक्ति।

*स्वामीति*। भावको निरन्तरकाव्यभावनापरिपक्वबुद्धिः, कवेः स्वामी दोषापवादरक्षणात्, मित्रं सभादिषु गुणप्रख्यापनैरुपकारित्वात्। मन्त्री धीसाचिव्यकरणात्। शिष्यः तल्लिखितेषु जिज्ञासुत्वात्। आचार्यः, गुणागुणेषूपदेशकरणात्। ही चित्रमाश्चर्यम्। किन्तत्, यत् कवेर्भावको न भवति।

*काव्येनेति*। तन्मनस्येव तिष्ठता काव्येन तस्य कवयितुः किम्फलं व्यर्थमेवेत्यर्थः। यस्य निबन्धाः ग्रन्थाः भावकैर्द्वारा दश दिशः : (नयतेर्द्विकर्मकत्वाद् द्वितीया।) दशसु दिक्ष्वित्यर्थः। न नीयन्ते न प्राप्यन्ते।

*सन्तीति*। पुस्तकविन्यस्ताः लिपिरूपेण स्थिताः काव्यबन्धाः प्रबन्धाः गृहे गृहे प्रतिगृहं सन्ति। भावकानां मन एव निकषाख्यं शिलापट्टं तस्मिन् निकुट्टिताः खचितास्तु द्वित्रा एव द्वौ वा त्रयो वा न तु बहवः। ये भावकैः समादर्त्तव्या भवेयुः तेऽल्पा एव इति भावः।

*सत्काव्य इति*। भावकस्य काव्यबन्धान् भावयतो हृदये सत्काव्यमध्येऽपि ताः

सर्वाभिनयनिर्णीतौ दृष्टा नाट्यसृजा न, याः ॥
वाग्भावको भवेत्कश्चित्कश्चिद्धृदयभावकः ।
सात्त्विकैराङ्गिकैः कश्चिदनुभावैश्च भावकः ॥
गुणादानपरः कश्चिद्दोषादानपरोऽपरः ।
गुणदोषाहृतित्यागपरः कश्चन भावकः ॥
अभियोगे समानेऽपि विचित्रो यदयं क्रमः ।
तेन विद्मः, प्रसादेऽत्र नृणां हेतुरमानुषः ॥
न निसर्गकविः शास्त्रे न क्षुण्णः कवते च यः ।
विडम्बयति सात्मानमाग्रहग्रहिलः किल ॥
कवित्वं न स्थितं यस्य काव्ये च कृतकौतुकः ।
तस्य सिद्धिः सरस्वत्यास्तन्त्रमन्त्रप्रयोगतः ॥
यदान्तरं वेत्ति सुधीः स्ववाक्यपरवाक्ययोः ।

---

काश्चित् अत्यन्तं निभृताः काश्चन विक्रियाः विकारा प्रादुर्भवन्ति लक्ष्यन्ति। याः नाट्य-सृजा ब्रह्मणापि आंगिकादिसर्वविधाभिनयनिर्णयकर्मण्यपि न दृष्टाः न पर्यालोचिताः ।

भावकानां विविधत्वं दर्शयति । *वागिति* । *गुणेति* । कश्चित् शब्दगुम्फनवि-धिपरामर्शकः । कश्चित् इदमस्य हृदयमिति विवेचकः । कश्चिदांगिकसात्त्विकानुभा-वान् प्रदर्शयन् विचारको भवति । अथवा धान्येन धनवानितिवदभेदे तृतीया । तेन सा-त्त्विकभावानामालोचकः। कश्चिद्गुणग्राही । कश्चिद् पुरोभागी। कश्चिद्गुणादानपुरः सर्वं दोषहानपरो भावको भवति ।

भावकानां विविधत्व औचित्यं संभावयति । *अभीति* । अभियोगे अभिनिवेशे समानेऽपि यतोयं विचित्रो अन्यप्रकारक्रमः । एकस्मिन्नेव काव्ये नानापुरुषाणां नाना-भावाः स्फुरन्ति । तेन हेतुना विद्मः । अत्र प्रसादे प्रसन्नतायां नृणाममानुषोऽलौकिको हेतुः । कस्यचिद्दोषे दृष्टिः, कस्यचिद्गुणे प[क्ष]पातः, कस्यचन रसे भावावेशः, कस्यच-नालंकारे धारणा भवति । अतः सहृदयानां प्रसन्नतायाः कारणमलौकिकमेव ।

कवित्वं न सुलभमिति निर्दिशति । *न निसर्गेति* । यस्य प्राक्तनवासनाख्यम् प्रतिभानं नास्ति, न च शास्त्रे क्षुण्णः अर्थात् श्रुतं निर्मलं नास्ति । स आग्रहे ग्रहिलो हठी आत्मानं विडम्बयति वञ्चयति ।

तर्हि कथं तस्य सिद्धिरित्याह । प्राक्तनवासना नास्ति, काव्यं कर्त्तुं ज्ञातुं चेहते । तस्य सारस्वतानुभावात् सिद्धिः । सोऽनुभावस्तंत्रमंत्राणामनुष्ठनात् भवति ।

तदा स सिद्धो मन्तव्यः, कुकविः कपिरेव वा ॥"
कारयित्रीभावयित्र्याविती मे प्रतिभाभिदे ।
अथातः कथयिष्यामो व्युत्पत्तिं काव्यमातरम् ॥

॥ इति राजशेखरकृतौ काव्यमीमांसायां कविरहस्ये प्रथमेऽधिकरणे
शिष्यप्रतिभाव्याख्यानः चतुर्थोऽध्यायः ।

## पञ्चमोऽध्यायः

# व्युत्पत्तिकविपाकाः ५

"बहुज्ञता व्युत्पत्तिः" इत्याचार्याः । सर्वतोदिक्का हि कविवाचः । तदुक्त-

---

यदेति । यदा सुधीर्विद्वान् स्वावाक्यपरवाक्येषु स्थितानां पदानामन्तरं विभेदं वेत्ति । तदा स सिद्धो मन्तव्योऽन्यथा कवयिता कुत्सित एव । अन्यथा स्वपरवाक्यघटकपदान्तरवेदनाभावे । इत्यर्थः । वा अथवा कपिरेव । कपिर्यथा चापल्येन जडतया च स्वपरकृत्यविचारमूढो भवति तथैवायमपि स्वपरवाक्यान्तःपातिपदान्तरवेदनानभिज्ञो भवति ।

इति प्रदर्शितमुपसंहरति । इत्थं पूर्वोक्तप्रकारेण इमे कारयित्रीभावयित्र्यौ प्रतिभाया भिदे भेदौ निरूपिते । अथानन्तरं यतो व्युत्पत्तिः काव्यकारणमतो मातृवदुपजीव्यां तां कथयिष्यामः निरूपयिष्यामः ।

इति आहिताग्निश्रीमधुसूदनशास्त्रिणः कृतौ मधुसूदनीविवृतौ चतुर्थोऽध्यायः ।

---

॥ श्रीः ॥

वैबुधपदमासीनो भवति कविर्यत्प्रसादतो भुवने ।
वाणीकलया कलितां व्युत्पत्तिं काव्यमातरं वन्दे ॥

पूर्वस्मिन्नध्याये "अथातः कथयिष्यामो व्युत्पत्तिं काव्यमातरम्" इति प्रतिज्ञया अध्यायद्वयमैत्रीमासूत्र्य अनन्तरवक्तव्यत्वरूपावसरसंगत्या व्युत्पत्तिं निर्दिदिक्षुर्ग्रन्थकारः प्रसङ्गसंगत्या कविपाकौ निर्देक्ष्यन् सूत्रमारचयति व्युत्पत्तीति । व्युत्पत्तिश्च कविश्च पाकश्च इति व्युत्पत्तिकविपाकाः भाष्योदाहरणैः क्रमशो व्याख्यास्यन्ते । इति सूत्रार्थः ।

पूर्वं विस्तीर्णां व्युत्पत्तिं दर्शयितुमाचार्याणां मतमाचिनोति । बहुज्ञतेति । बहु जानातीति बहुज्ञस्तस्य भावो बहुज्ञता सर्वज्ञता वर्णनीयवस्तुविषयोपयोगिसमस्तवस्तुपौर्वापर्यपरामर्शकौशलम् । इत्याचार्याः । समर्थयति । *सर्वेति* । हि यतः कवीनां वाचः सर्वदिशि गमनशीलाः । सर्वविषयवर्णनकारिण्य इत्यर्थः ॥

मू--"प्रसरति किमपि कथञ्चन नाभ्यस्ते गोचरे वचः कस्य ।
इदमेव तत्कवित्वं यद्वाचः सर्वतोदिका ॥"

"उचितानुचितविवेको व्युत्पत्तिः" इति यायवरीयः । "प्रतिभाव्युत्पत्त्योः प्रतिभा श्रेयसी" इत्यानन्दः । सा हि कवेरव्युत्पत्तिकृतं दोषमशेषमाच्छादयति । तदाह—

"अव्युत्पत्तिकृतो दोषः शक्त्या संव्रियते कवेः ।
यस्त्वशक्तिकृतस्तस्य झगित्येवावभासते ॥"

---

तदुक्तमिति प्रकृतोपपादकं पद्यमुपन्यस्यति । *प्रसरतीति* । अभ्यस्ते शीलिते गोचरे विषये कथञ्चन कृच्छ्रात् किमपि वक्तुं कस्य जनस्य वचो वाणीर्न प्रसरति प्रचलति । सर्वस्यापीति भावः । तत्प्रसिद्धं कवित्वमिदमेव, यद् वाचः सर्वविषयवर्णनकारिण्यः । सत्यामेव बहुज्ञतायां बहुविषयवर्णनसामर्थ्यं सम्पद्येत काव्ये च बहवो विषया दृश्यन्ते वर्णिताः । तामन्तरा कथं वर्ण्येरन् । अतो बहुज्ञतैव विस्तीर्णा व्युत्पत्तिरित्याचार्याणामाशयः ।

संक्षिप्तां तां दर्शयितुमिदानीं स्वमतं प्रस्तौति । *उचितेति* । युक्तायुक्तविचारो इदं छन्द इदं पदमयं रस अत्र उचितोऽनुचितो वेति विवेको व्युत्पत्तिः, इति यायावरकुलोत्पन्नो राजशेखरः । अत्र व्युत्पत्तिविषये आचार्यैः स्वग्रन्थे समासव्यासतया द्विविधः स्वाशयो लक्षितः । तत्र राजशेखरेण एकस्तदुक्त्या दर्शितः । अन्यः स्वोक्त्या । तथा चेमौ तेषां श्लोकौ—

छन्दोव्याकरणकलालोकस्थितिपदपदार्थविज्ञानम् ।
युक्तायुक्तविवेको व्युत्पत्तिरियं समासेन ॥
विस्तरतस्तु किमन्यत्तत इह वाच्यं न वाचकं लोके ।
न भवति यत्काव्याङ्गं सर्वज्ञत्वं ततोन्यैषा ॥

प्रतिभाव्युत्पत्त्योस्तरतमभावं परमतेन दर्शयति । प्रतीति । उभयोर्मध्ये प्रतिभा श्रेयसी । इत्यानन्दः । आनन्दवर्द्धनाचार्यः । नामैकदेशे नामग्रहणम् । श्रेयस्त्वे हेतुमुपन्यस्यति ।

प्रतिभा हि वर्णनीयवस्तुविषयनूतनोल्लेखशालिता हि कवेः कवयितुरव्युत्पत्तिकृतमनिपुणताजन्यं दोषं संवृणोति । तदाहेति प्रकृतसाधकं पद्यमुपन्यस्यति । तदाह आनन्दवर्द्धनाचार्य इति शेषः ।

*अव्युत्पत्तीति* । अव्युत्पत्तिकृतोऽव्युत्पत्तिजन्यः कवेर्दोषो दूषणम् शक्त्या प्रतिभया संव्रियते आच्छाद्यते । यस्तु दोषस्तस्य कवेः अशक्तिकृतः स झगित्येव झटित्येव अवभासते प्रतीयते । इति ।

शक्तिशब्दश्चायमुपचरितः प्रतिभाने वर्त्तते। ( प्रतिभा यथा )

"एतत्किं ? शिरसि स्थितं मम पितुः, खण्डं सुधाजन्मनो
लालाटं किमिदं ? विलोचनमिदं, हस्तेऽस्य किं ? पन्नगाः।
इत्थं क्रौञ्चरिपोः क्रमादुपगते दिग्वाससः शूलिनः
प्रश्ने वामकरोपरोधसुभगं देव्याः स्मितं पातु वः॥"

"व्युत्पत्तिः श्रेयसी" इति मङ्गलः॥ सा हि कवेरशक्तिकृतं दोषमशेषमाच्छादयति। तथा हि—

"कवेः संव्रियतेऽशक्तिर्व्युत्पत्त्या काव्यवर्त्मनि।
वैदग्धीचित्तचित्तानां हेया शब्दस्य गुम्फना॥"

---

ननु प्रतिभां प्रस्तूय किमिति शक्त्येति अप्रस्तुतमुच्यते, इति शंकमानमाह—*शक्तीति*। अयं श्लोकस्थः शक्तिशब्दः प्रतिभाने प्रतिभायामुपचरितः लक्षणया प्रयुक्तो वर्त्तते। शक्तिशब्दस्य सामर्थ्ये रूढेः।

उदाहृत्य दर्शयति—*एतदिति*। दिग्वाससः शिवस्याभूषणादिविषये पार्वतीगुहयोरुक्तिप्रत्युक्तिरूपं पद्यम्। मातरं पार्वतीं प्रति गुहस्य प्रश्नः। हे मातः। मम पितुः शिरसि स्थितं एतद्दृश्यमानं किमस्ति। उ०। सुधाजन्मनश्चन्द्रस्य खण्डम्। प्र० इदं लालाटं ( ललाटे स्थितम् ) किम्। उ०। इदं विलोचनम्। प्र०। अस्य हस्ते किम्। उ०। पन्नगाः सर्पाः। इत्थं क्रौञ्चरिपोर्गुहस्य प्रश्ने क्रमाद् क्रमश उपगते शिरस्तः कटिपर्यन्तं प्राप्ते सति दिग्वासस नग्नस्यः शूलिनः वामकरेणोपरोध आच्छादनम्। ( अग्रे पुंव्यञ्जनविषये माकदाचित्प्रश्नं कुर्यादिति बुद्ध्या क्रौञ्चरिपोर्मुखस्याच्छादनं शूलिना कृतम् ) तेन सुभगं सुन्दरं देव्या गौर्याः स्मितमनुपलक्षितदशनो हासः। "अदृश्यदशनो हासो मधुरः स्मितमुच्यते" इत्युक्तेः। वो युष्मान् पातु।

इदं व्युत्पत्तिजन्यदोषसंवारिकाया शक्तेरुदाहरणम्। इदं तत्वम्। अत्र कविना प्रतिभावशात् हास्यानुगुणोर्थः कल्पितः, किन्तु शब्दैर्यथावत्प्रकाशयितुं न समर्थः। तथाहि वामकरेणोपरोधः शूलिना किमर्थं कस्य च कृतः इत्याद्यर्थस्य स्पष्टप्रतिपत्तये आक्षेप एव शरणम्। एवमस्य कवेरव्युत्पत्तिः सहृदयचेतस्युद्गच्छन्त्यपि शक्त्युत्थापितार्थसौन्दर्यबलाच्चमकारान्तर्विलीना भवतीति।

व्युत्पत्तिर्दोषवारिकेति पूर्वविपरीतं मतं निर्दिशति। *व्युत्पत्तिरिति*। शक्त्यपेक्षया व्युत्पत्तिनिपुणता श्रेयसी सातिशया।

हेतुं वदति। यतः सैव कवयितुरशक्तिकृतं दूषणमावृणोति। तथाहीति तदुपष्टम्भकं पद्यमवतारयति—*कवेरिति*। काव्यमार्गे व्युत्पत्त्या कवयितुरशक्तिः अर्थानुकूल-

व्युत्पत्तिर्यथा—"कृतः कण्ठे निष्को नहि किमुत तन्वी मणिलता
कृशं लीलापत्रं श्रवसि निहितं कुण्डलमुचि ।
न कौशेयं चित्रं वसनमवदातं तु वसितं
समासन्नीभूते निधुवनविलासे वनितया ॥"

"प्रतिभाव्युत्पत्ती मिथः समवेते श्रेयस्यौ" इति यायावरीयः । न खलु

---

शब्दयोजनाऽसामर्थ्यं संव्रियते । तस्मात् । वैदग्धी चातुर्यम् । सा चित्ता सम्यग्ज्ञाता यैरेवंभूतानि चित्तानि अन्तःकरणानि येषां तेषां परिचितचातुरीकाणाम् ( कृत्यानां कर्त्तरि वेति षष्ठी ) तैरित्यर्थः । शब्दस्य गुम्फना । हेया । यमकानुप्रासयोर्न विशेषादरो विधेयः कविभिः, अर्थ एव विशिष्य प्रयतनीयम् । एतन्मतेऽर्थ एव चमत्कारस्तदग्रे शब्दगुम्फनमकिञ्चित्करम् । अत्र मुद्रितपुस्तकेषु शब्दार्थगुम्फनेति अर्थ घटितः पाठोऽपपाठ इतीषन्निमीलितलोचनैः सुधीभिर्विवेचनीयम् ।

अशक्तिकृतदोषनिवारिका व्युत्पत्तिर्यथा—*कृत इति । वासकसज्जाया वर्णनमिदम् निधुवनविलाशेऽनंगोत्सवविधौ समासन्नीभूते प्राप्ते सति । वनितया उत्पन्नरागया स्त्रिया । वनिता जातरागा स्त्री इति शब्दकल्पद्रुमः । कण्ठे निष्कोपि न हि कृतः तन्वी मणिलता कर्त्तव्येति किमुत किं वक्तव्यम् । आलिङ्गनव्यवधानकारित्वात्तन्वी मणि लता अपि हृदये न धार्यते । कुण्डलं मुंचतीति तस्मिन् कुण्डलमुचि कुण्डलरहिते । श्रवसि कर्णे । जातित्वादेकवचनम् । कर्णयोरिति । यावत् । एकस्मिन् कर्णे भूषणधारणं न परं प्रतिकर्मविधिविरुद्धं सौन्दर्यविघातकमपि । चित्रं नानावर्णं कर्बुरम् । 'चित्रं किर्मीरकल्माषशबलैताश्च कर्बुर इत्यमरः । कौशेयं कृमिकोशोत्थं वसनमंशुकं न वसितं नावधारितं तु किन्तु अवदातं सितं वसनं वसितम् । "अवदातः सितो गौरः" इत्यमरः । इदं पद्यमशक्तिजन्यदोषसंवारिकाया व्युत्पत्तेरुदाहरणम् । अयं भावः । वासकसज्जायाः संभोगश्रृंगारवर्णने तदुचितकोमलवर्णोपन्यासो योग्यः । तथैव तस्य पुष्टिरन्यथा तत्पुष्टिर्वार्यंत । तदेष दोषः कारणान्तरैस्तिरोधीयेत तर्हि नास्तिकल्पः स्यात् । तथाचात्र, "तः क," इत्यत्र जिह्वामूलीयस्य "ष्ठ," इति मूर्धन्यस्य "त तन्वी" इत्यत्र तकारस्य स्वानन्तर्यवर्गतयाऽश्रव्यत्वस्य "त्र" इति श्रुतिकटुत्वस्य श्रृंगारपरिपन्थ्योजोव्यञ्जकतया कवे रसानुकूलनिर्माणाशक्तिः परिस्फुरन्त्यपि व्युत्पत्त्या तिरोधीयते ।

स्वमतं परिष्करोति—*प्रतिभेति* । प्रतिभा च व्युत्पत्तिश्चेति ते प्रतिभाव्युत्पत्ती । मिथः परस्परं सङ्गते । आत्मनि समवायेन वर्त्तेते उभौ इति तात्पर्यार्थः । प्रतिभा व्युत्पत्ती सातिशये । इति यायावरकुलीनः । दृष्टान्तयति । *न खल्विति* । लावण्यलाभाद्विना रूपसम्पद् न महते सौन्दर्याय । रूपसम्पदो वा ऋते लावण्यलब्धिर्न महते सौन्दर्याय ।

लावण्यलाभाद्दते रूपसम्पद्दते रूपसम्पदो वा लावण्यलब्धिर्महते सौन्दर्याय। उभययोगो यथा—

"जङ्घाकाण्डोरुनालो नखकिरणलसत्केसरालीकरालः
प्रत्यग्रालक्तकाभाप्रसरकिसलयो मञ्जुमञ्जीरभृङ्गः।
भर्त्तुर्नृत्यानुकारे जयति निजतनुस्वच्छलावण्यवापी-
सम्भूताम्भोजशोभां विदधदभिनवो दण्डपादो भवान्याः॥"

---

अत्र लावण्यरूपसौन्दर्यशब्दाः यद्यपि लोके सामान्येन एकार्थ एव प्रयुज्यन्ते तथापि विशेषरूपेण भिन्नार्थका एव। तथाहि अवयवनां निर्दोषता वा भूषणयोगो वा न लावण्यपदार्थः। यतः काणादिदोषशून्यशरीरावयवयोगिन्यामप्यलंकृतायामपि लावण्यशून्येयमिति, अतथाभूतायामपि लावण्यामृतचन्द्रिकेयमिति सहृदायानां व्यवहारस्तस्मात्।

मुक्ताफलेषु च्छायायास्तरलत्वमिवान्तरा।
प्रतिभाति यदङ्गेषु तल्लावण्यमिहोच्यते॥

लावण्यातिरिक्तधर्मान्तरमेव रूपम्। यतः सत्यपि लावण्ये नात्र रूपसम्पदिति सहृदयानां व्यवहारः, तस्मात्।

अङ्गान्यभूषितान्येव केनचिद्भूषणादिना।
येन भूषितवद् भान्ति तद्रूपमिति कथ्यते॥

सतोरपि रूपलावण्ययोर्नेदृशः संस्थानमुग्धिमा इति सहृदयानां व्यवहारः परिस्फुटो दृश्यत तस्मात्।

अङ्गप्रत्यङ्गकानां यः सन्निवेशो यथोचितम्।
संश्लिष्टसन्धिबन्धः स्यात्तत्सौन्दर्यमुदाहृतम्॥ इति

एवं शोभाकान्तिलडहादीनां प्रातिस्विकवैशिष्टयेन भिन्नत्वं ज्ञेयम्।

उभयजन्यदोषनिवारिकयोरुभययोर्योगः। यथा—*जङ्घाकाण्डेति*। वाणभट्टकृते चण्डीशतके पद्यमिदम्। भर्त्तुर्महेश्वरस्य नृत्तानुकारे "पदार्थाभिनयो नृत्यं नृत्तं ताललयाश्रितम्, इतिलक्षणकनर्तनानुकरणे भवान्या अभिनव इदंप्रथमतया नृत्यप्रवृत्तः दण्डपादः "प्रसह्योर्ध्वीकृतः पादो दण्डपादोऽभिधीयते," इत्युक्तलक्षणश्चरणः जयति सर्वोत्कर्षेण वर्त्तते। इति योजना। किंभूतः। निजा भवनी सम्वन्धिनी तनुरेव स्वच्छा लावण्यस्य वापी। अत्र तनोर्वापीत्वे लावण्यं जलं तत एवाग्रेऽम्भोजेत्युक्तिः। तस्यां सम्भूतं यदम्भोजं तस्य शोभां विदधत् विशेषेण धारयत्। दण्डपादस्याम्भोजत्वमुपपादयति। *जङ्घेति*। जङ्घाकाण्डमेवोरुर्महान्नालो यत्र। नखकिरणा एव लसन्ति केसराणि तेषामाल्या पंक्तया करालो नतोन्नतः। प्रत्याग्रस्यालक्तकस्य तत्कालयोजितस्य जतुनो भानां कान्तीनां प्रसरा एव किसलयानि यस्य। मञ्जुमंजीरः सुन्द-

प्रतिभाव्युत्पत्तिमांश्च कविः कविरित्युच्यते। स च त्रिधा । शास्त्रकविः काव्यकविरुभयकविश्च । "तेषामुत्तरोत्तरीयो गरीयान्" इति श्यामदेवः। "न" इति यायावरीयः। यथा स्वविषये सर्वो गरीयान्। नहि राजहंसश्चन्द्रिकापानाय प्रभवति, नापि चकोरोऽद्भ्यः क्षीरोद्धरणाय। यच्छास्त्रकविः काव्ये रससम्पदं विच्छिनत्ति। यत्काव्यकविः शास्त्रे तर्ककर्कशमप्यर्थमुक्तिवैचि-

---

त्पादभूषणमेव भङ्गो यत्र सः । एवं सति उपमानधर्मस्याम्भोजशोभाया दण्डपादे समारोपः समर्थितो भवति। तथाचात्र रूपकनिदर्शनयोः सम्भवः। किन्तु यत्रारोपस्योपमानारोपस्वरूपत्वं तत्र रूपकम्। यत्र तु तदभावस्तत्र निदर्शना। यतः कविकल्पितोपमानेनापि बहुत्रोपमा दृश्यते। एवं चात्रनिदर्शना तदुपपादकं तु जङ्घेतिरूपकचतुष्टयम्। उभयदोषनिवारकोऽत्रयोगे दृष्टान्तः। इत्थमत्रावधेयम्। अत्र यद्यपि विपूर्वकस्य दधातेः करणे शक्त्या धारणे शक्त्यभावादवाचकत्वं दोषः। तनुपदार्थस्य भवान्या योगोऽभिमतः किन्तु ससम्बन्धिनां निजस्वात्मादिपदार्थानां प्रधानक्रियान्वयिकारकपदार्थ एवान्वयः, इति नियमबलाद्दण्डपाद एव निजपदार्थस्यान्वयः प्रतीयते न तु भवान्याम्। एवमत्राभवन्मतयोगो दोषः। तथापि कवयितुः शक्तिव्युत्पत्तिभ्यां रूपकनिदर्शनान्तर्लीनाविव प्रतिभातः।

प्रतिभेति। आभ्यां युक्त एव कवयिता कविरिति शब्दभाक्। तं विभजति। *स च त्रिधेति*। तेषामुत्तममध्यमाधमत्वं परमतेन वक्ति। *तेषामिति*। स्वमतं विशद्य दर्शयति। *नेति*। श्यामदेवेन यदुक्तं तन्न। कुत इत्यत आह—*स्वविषय इति*। स्वानुगुणे विषये सर्वः श्रेष्ठः। दृष्टान्तं प्रस्तौति। *यथेति**। राजहंसाः, "राजहंसास्तु ते चञ्चूचरण लोहितैःसिताः, इत्युक्तलक्षणाः कौमुदीं पातुं न समर्थाः। किन्तूदकात् क्षीरोद्धरण एव। तथैव प्रसिद्धिर्यथा।

हंसो यथा क्षीरमिवाम्बुमध्यात। इति

नीरक्षीरविवेके हंसालस्यं त्वमेव तनुषे चेत्

विश्वस्मिन्नधुनान्यः कुलव्रतं पालयिष्यति कः। इति।

चकोरोऽपि जलेभ्यः क्षीरोद्धरणाय न समर्थः। किन्तु चन्द्रिकामेव पातुं समर्थः। इत्येव प्रसिद्धिर्यथा

चकोर्य एव चतुरा श्चन्द्रिकाचामकर्मणि।

विनावन्तीर्न निपुणाः सुदृशो रतनर्मणि ॥ इति

उक्तत्रिविधकवीनां भेदं विवेचनापूर्वकं दर्शयति। *यदिति*। यद्यतः। शास्त्रकविः काव्ये रससम्पदो विच्छेदं जनयति। यद्यतः काव्यकविः (वक्ष्यमाणाष्टप्रकारस्वरूपः) शास्त्रे शास्त्रीयपदार्थप्रणयने कठिनमप्यर्थं कथनवैलक्षण्येन शिथिलीकरोति।

त्र्येण श्लथयति । उभयकविस्तूभयोरपि वरीयान्यद्युभयत्र परं प्रवीणः स्यात्। तस्मात्तुल्यप्रभावावेव शास्त्रकाव्यकवी । उपकार्योपकारकभावं तु मिथः शास्त्रकाव्यकव्योरनुमन्यामहे । यच्छास्त्रसंस्कारः काव्यमनुगृह्णाति शास्त्रैकप्रवणता तु निगृह्णाति । काव्यसंस्कारोऽपि शास्त्रवाक्यपाकमनुरुणद्धि काव्यैकप्रवणता तु विरुणद्धि । तत्र त्रिधा शास्त्रकविः । यः शास्त्रं विधत्ते, यश्च शास्त्रे काव्यं संविधत्ते, योऽपि काव्ये शास्त्रार्थं निधत्ते । काव्यकविः पुनरष्टधा। तद्यथा रचनाकविः, शब्दकविः, अर्थकविः, अलङ्कारकविः, उक्तिकविः, रसकविः, मार्गकविः, शास्त्रार्थकविरिति । तत्र रचनाकविः—

"लोलल्लाङ्गूलवल्लीवलयितबकुलानोकहस्कन्धगोलै-
र्गोलाङ्गूलैर्नदद्भिः प्रतिरसितजरत्कन्दरामन्दिरेषु ।

---

उभयकविस्तु शास्त्रकाव्यकव्योः श्रेष्ठः, यदि स काव्ये शास्त्रे च परं प्रवीणः स्यात् । एवं तौ तुल्यप्रभावावेव । किन्तु उपजीव्योपजीवकत्वं परस्परं तयोरनुमोदामहे । यतः शास्त्रस्य संस्कारः काव्यं चारु करोति । केवलशास्त्रानुसारित्वं तु काव्यचारुत्वस्य निग्रहं करोति । यदाह—

विद्वत्कवित्वमिव केकिरुतं न रेजे । इति

काव्यसंस्करोऽपि शास्त्रीयवाक्यस्य पाकं परिणतिसौष्ठवं अनुरुणद्धि अनुवर्तते। काव्यमात्रज्ञानाधीनत्वं तु विरुणद्धि विपरिवर्तते । यदाह—

शास्त्रेषु भ्रष्टाः कवयो भवन्ति । इति ।

उक्तभेदभिन्नानपि प्रतिस्वं विकल्प्य दर्शयति-*तत्रेति* । विधत्ते करोति । अपिशब्दस्य काव्ये अनुषंगः । काव्येऽपीत्यर्थः । शास्त्रार्थं तदीयप्रमाणप्रमेयविचारं निधत्ते स्थापयति ।

अष्टधा अष्टप्रकारः । सुप्तिङन्तपदमेव कवतेऽसौ शब्दकविः । मार्गो रीतिः । क्रमश एतान् उदाहरति-*तत्रेति* । रचनाकविः, उदाह्रियते, इति सर्वत्रात्र योज्यम् ।

*लोलदिति* । येन राज्ञा, वेलां समुद्रस्येत्यर्थः । आलंघ्य षण्डेषु पद्मादिसंघातेषु "षण्डं पद्मादिसंघाते न स्त्री स्यात् गौपतौ पुमान्" इति मेदिनी । गन्धवाहाः वायवः, (श्वसनः स्पर्शनो वायुः गन्धवाहानिलाशुगाः," इत्यमरः।) प्रापिरे प्राप्ताः । कीदृशेषु षण्डेषु । लोलत् चंचलं यत् लाङ्गूलं तदेव वल्ली लता (वल्ली तु व्रततिर्लता, इत्यमरः) तया वलयितं वेष्टितं वकुलानोकहानां वकुलवृक्षाणां स्कन्धगोलम् शाखामण्डलं यैस्तैः (अस्त्री प्रकाण्डः स्कन्धःस्यान्मूलाच्छाखावधिस्तरोः, इत्यमरः गोलं तु मण्डले प्रोक्तं गोलः स्यत्सर्ववर्त्तुले,। इतिशब्दकल्पद्रुमः।) नितद्भिः शब्दंकुर्वद्भि गोलाङ्गूल,

षण्डेषूद्दण्डपिण्डीतगरतरलनाः प्रापिरे येन वेला-
मालङ्घ्योत्तालतल्लस्फुटितपुटकिनीबन्धवो गन्धवाहाः ॥"

त्रिधा च शब्दकविर्नामाख्यातोभयभेदेन । तत्र नामकविः—

"विद्येव पुंसो महिमेव राज्ञः प्रज्ञेव वैद्यस्य दयेव साधोः ।
लज्जेव शूरस्य मृजेव यूनो विभूषणं तस्य नृपस्य सैव ॥"

आख्यातकविर्यथा—

उच्चैस्तरां जहसुराजहृषुर्जगर्जुराजघ्निरे भुजतटीनिकरैः स्फुरद्भिः ।
सन्तुष्टुवुर्मुमुदिरे बहु मेनिरे च वाचं गुरोरमृतसम्भवलाभगर्भाम् ॥"

नामाख्यातकविः—

"हतत्विषोऽन्धाः शिथिलांशबाहवः स्त्रियो विषादेन विचेतना इव ।
न चुक्रुशुर्नो रुरुदुर्न सस्वनुर्न चेलुरासुर्लिखिता इव क्षणम् ॥"

---

ल्लाङ्गूलं येषां तैः, कृष्णावानरैः, ( गोलाङ्गूलः कृष्णावानरः, इति राजनिर्घण्टः) अत एव प्रतिरसितेन जरन्त्यः कन्दरा एव मन्दिराणि येषु तेषु । कीदृशा वायवः । उद्दण्डेषून्नतेषु पिण्डीतगरेषु, (पिण्डीतगरः खर्जूरविशेषः, इति शल्पद्रुमः ।) तरलनाः चंचलाः । पुनश्च कीदृशाः । उत्तालाः ये तल्ला जलाशयाः, ( तल्लो जलाशये, इति मेदिनी । ) तेषु स्फुटिता विकसिता याः पुटकिन्यः पद्मिन्यस्तासां बन्धवस्ताभिः सुगन्धयः ( पुटकिनी पद्मिनी पद्मलता चेति हेमचन्द्रः । )

*त्रिधेति* । नाम + आख्यत + उभयभेदेन शब्दकविस्त्रिप्रकारः । अत्र नामाख्यातार्थेति अर्थघटितः पाठोऽपाठः । अर्थकवेः स्वतन्त्रं वक्ष्यमाणत्वात् । तत्र त्रिप्रकारकशब्दकविभेदानां मध्ये प्रथमो नामकविः । नाम केवलं संज्ञाशब्दं कवतेऽसौ नामकविः । यथा *विद्येति । स्पष्टम्* । अत्र विद्याप्रभृतीनां संज्ञाशब्दानामेव संघटना कृता । नान्येषाम् ।

आख्यातं तिङन्तं कवते रचयति यः स आख्यातकविःयथा । *उच्चैस्तरामिति* । अमृतस्य स्वनामप्रसिद्धस्य देवासुरैर्मथ्यमानसमुद्रादुत्थितद्रव्यविशेषस्य सम्भव उत्पत्तिः, तस्य लाभो गर्भे यस्यास्ताम् । समुद्रमथनाद्धबद्धयोऽमृतलाभो भविष्यतीति साभिप्रायां गुरोर्बृहस्पतेर्वाचं श्रुत्वेति शेषः । शिष्टं स्पष्टम् । भुजतटानि करैरित्येव पाठःसमीचीनः । मणिबन्धावधिपञ्चाङ्गुलीसमेतस्य हस्तस्याख्या कर इति, तदुपरितनस्यांसावधेराख्या भुज इति, एवं च हर्षादीनामुद्रेकेण भुजस्यास्फोटनं भवतीति लोकवृत्तम् । अत्र जहसुरित्याद्याख्यातानामेवाधिक्येन रचना ।

नामाख्याते उभौ कवते रचयति वर्णयति सो नामाख्यातोभयकविः । *हतेति* ।

अर्थकविः—

"देवी पुत्रमसूत नृत्यतगणाः किं तिष्ठतेत्युद्भुजे
हर्षाद्भृङ्गिरिटावुदाहृतगिरा चामुण्डयाऽलिङ्गिते ।
पायाद्वो जितदेवदुन्दुभिघनध्वानप्रवृत्तिस्तयो-
रन्योन्याङ्कनिपातजर्जरजरत्स्थूलास्थिजन्मा रवः ॥"

द्विधाऽलङ्कारकविः शब्दार्थभेदेन । तयोः शब्दाऽलङ्कारः—

"न प्राप्तं विषमरणं प्राप्तं पापेन कर्मणा विषमरणं च ।
न मृतो भागीरथ्यां मृतोऽहमुपगुह्य मन्दभागी रथ्याम् ॥"

---

स्त्रियः भर्तुर्मरणे निष्प्रभाः, अन्धाः दुःखात्कुत्रापि गन्तुमसमर्थाः किमपि कर्तुमशक्ताश्चेत्यन्धसादृश्यम् । शिथिलौ अंसौ वाहू यासां ताः । विषादेन गतचेतना इव। अन्यत्स्पष्टम् । पूर्वार्धे नाम्नामुत्तरार्धं आख्यातानां रचना । तत्तद्रचनाकारिषु तत्तन्नामनिर्देशः कृतः ।

अर्थमात्रमलङ्कारादिशून्यं कवते वर्णयति यः सोऽर्थकविर्यथा । *देवीति* । देवी गौरी पुत्रमसूत सूते स्म । ततो हे गणाः ! । नृत्यथ नृत्यं कुरुत । किं तिष्ठत ? । कथमुपविष्टा भवथ इति कृत्वा उद्भुजे ऊर्ध्ववाहौ भृंगिरिटौ, एतन्नामके गणे हर्षात्प्रेमतोः जातः भृगिरिटिचामुण्डयो रवः शब्दो वो युस्मान् पायाद्रक्षतु। किम्भूतो रवः । परस्पराङ्गनिपातेन जर्जरं स्फुटितं यज्जरज्जीर्णं स्थूलास्थि तस्माज्जन्मोत्पत्तिर्यस्य सः । जिता देवदुन्दुभेर्देवभेर्याः । भेर्यामानकदुन्दुभी इत्यरः । घनध्वानस्य निविडध्वनेः प्रवृत्तियेंन सः। अत्र देवीपुत्रमसूतेति परिष्कृतः चामुण्डाभृंगिरिटिपरिष्वंगसंघट्टितपरस्परहृदयास्थिजन्यरवोऽर्थ एव वर्णितः । यद्यप्यत्र "द व स त" "नृत्यत" इत्दादिषु सर्वत्र—

"उच्चार्यत्वाद्यदेकत्र स्थाने तालुरदादिके। सादृश्यं व्यञ्जनस्यैव श्रुत्यनुप्रास उच्यते।"

इत्युक्तलक्षणः श्रुत्यनुप्रासः, कविनिष्ठचामुण्डाभृंगिरिटिविषयकरतिरूपभावश्चस्तः तथापि कवेस्तात्पर्याभावादकिञ्चित्करः । अर्थ एव कवेः संरम्भान् ।

*द्विधेति* । शब्दालङ्कारार्थालंकारभेदेनालंकारकविर्द्विप्रकारः । तयोः शब्दालंकारार्थलंकारयोर्मध्ये शब्दालंकारो यथा ।

*न प्राप्तमिति* । विषमं च जयाजययोरनवस्थितत्वाद्, हेतिहतीनां दुःखदत्वाच्चासमानञ्च तद्रणं युद्धं न प्राप्तम् । किन्तु पापेन कर्मणा विषेण हालाहलेन मरणं प्राप्तम् । भागीरथ्यां गङ्गायां लक्षणया गंगायाः सविधे न मृतः । किन्तु मन्दभागी अहं रथ्यां प्रतोलीम् । रथ्या प्रतोली विशिखेत्यमरः । उपगुह्यालिंग्य । रथ्यायामेवेत्यर्थः । मृतः । प्रथमद्वितीययोः, तृतीयचतुर्थयोः पादयोर्मध्ये व्यपेतत्वात् मध्ययमकम् ।

अर्थोऽलङ्कारः—

"भ्रान्तजिह्वापताकस्य फणाच्छत्रस्य वासुकेः ।
दंष्ट्राशलाकादारिद्र्यं कर्त्तुं योग्योऽस्ति मे भुजः ॥"

उक्तिकविः—

"उदरमिदमनिन्द्यं मानिनीश्वासलाव्यं
स्तनतटपरिणाहो दोर्लता लेह्यसीमा ।
स्फुरति च वदनेन्दुर्दृक्प्रणालीनिपेय-
स्तदिह सुदृशि कस्याः केलयो यौवनस्य ॥"

---

अर्थालंकारः, उदाहियत, इति शेषः । *भ्रान्तेति* । भ्रान्ता निःसरणानिःसरणेनास्थिरा जिह्वैव पताका यस्य तस्य । फण एव छत्रं यस्य तस्य वासुकेः शेषनागस्य । दंष्ट्रैव शलाका छत्रपताकाधारणार्थं दण्डः तस्या दारिद्र्यमभावं कर्तुं सम्पादयितुं मे भुजो वाहुः एक एव (न तु द्वौ) योग्यः समर्थः । अत्र जिह्वायां पताकायाः फणे छत्रस्य, दंष्ट्रायां शलाकायाश्चारोपाद्रूपकालंकारः ।

"उक्तिर्नाम यदि स्वार्थो भङ्ग्या भव्योऽभिधीयते" ।

एवंरूपामुक्तिं षड्विधां वक्रोक्तिमेव कवते वर्णयति यः स उदाह्रियते यथा । किञ्चन वनितासर्वस्वं विलोक्य सखा सखायं वक्ति । *उदरमिति* । इदं मम सर्वस्वं, मानिन्याः न तु विरहिण्यास्तस्याः सन्तापाधिक्याज्ज्वलितिप्रसंगात् । स्वश्वासेनापि लाव्ययम् । अवश्यलवितुं योग्यम् अतिलघु इति भावः । अनिन्द्यं प्रशंसनीयं कृशमिति यावत्—स्त्रीणामल्पोदरस्यैव प्रशस्तिः । उदरम् । स्तनतटस्य परिणाहो विशालता । परिणाहो विशालता, इत्यमरः । दोरेव लता तस्या लेह्यस्य सीमा स्थितिः । तद्वेष्टनयोग्यस्थानम् विशालत्वात् । दृगेव प्रणाली तया निःशेषेण पातुं योग्यः । वदनमेवेन्दुः । स्फुरति प्रकाशते । अत्रोक्तावेव वैचित्र्ययोगितयाभिधान एव कवेस्तात्पर्यम् । तद्यथा । मद्दर्शनातिथित्वमस्मदीयदृष्टिगम्यत्वं वानुपनिबद्ध्य इदमा निर्देशः, कवेः संवृत्तिवक्रतायां तात्पर्यं गमयति । यदर्थं प्रयत्ययमाना अपि यं न अद्राक्ष्म । तदिदमनिर्वचनीयं कामिनां सर्वस्वं वस्तु गोचरीक्रियत इति प्रत्यक्षनिर्देशकेदंशब्देन प्रतीयते । मानिनीश्वासलाव्यमिति पदं लघुतरमित्यर्थे प्रयुक्तम् । यन्मानिन्या श्वासलाव्यत्वमुदरस्य तत् सहृदयहृदयाह्लादकारित्वं गमयति अहो लघुत्वमनितरसाधारणम् । कुचयोः सुपीनत्वकठिनत्वकृते दोर्लतालेह्यसीमेति भणितिः यथा लता द्रुमपरिवेष्टिता सुस्थमात्मानं मनुते द्रुमे च तद्भरमान्थर्यं नातिचकास्ति तथैव तद्भुजेऽपि तिष्ठेतां नाम कथंचिदपि तयोर्भुग्नतावकाशो न संभावनीयः । इति कवे-

यथा वा—

"प्रतीच्छत्याशोकीं किसलयपरावृत्तिमधरः
कपोलः पाण्डुत्वादवतरति ताडीपरिणतिं ।
परिम्लानप्रायामनुवदति दृष्टिः कमलिनी-
मितीयं माधुर्यं स्पृशति च तनुत्वं च भजते ॥"

---

वचनचातुर्याः परावधिं गमयति वदने चन्द्रत्वारोपार्थमिन्दुपदोपादानम् । सहजसौन्दर्यसम्पदुपेतस्य चन्द्रस्यानेकसंख्याकपर्यायेषु सत्स्वपि सहृदयहृदयामोदजनकं कमपि सातिशयं पुष्णाति यतो हि उनत्ति अमृतधारया भुवं क्लिन्नां करोत्यर्थकमिदं पदं सद्यो दर्शनेन विरहवाडवाग्निसमुद्यज्ज्वालावलीढांगान् युवजनान् समुल्लसद्विमललावण्यामृतवारिधिशीकरसम्भारेण निर्वाप्याप्लावयितुं सा समर्थेति स्फोरयति सचेतसां चेतसि । दृक्प्रणालीनिपेयः, यथा प्रणाल्या आवश्यकतानुगुणं शनैः शनैरातृप्तिक्षमं जलं प्रपायां पीयते तथैवास्या वदनेन्दुरपि आसेवनकतानुगुणं किमपि त्रिभुवनातिशायिसौन्दर्यशालीति प्रतीयते ।

तत्तस्मात् इहास्मिन् सुदृशि सुनयनायां यौवनस्य कल्या मादकाः केलयः स्फुरन्ति । स्फुरणं हि द्रवद्रव्यसधर्मवस्तु । ततः सकललोकविलक्षणं चांचल्यं तस्याः प्रतीयते । तत्रापि अचेतनेसु केलिषु चेतनत्वाध्यारोपेण कविना कर्तृत्वमुपनिबद्धम् तदपि तेषामनुभवैकगोचरत्वेन व्यपदेशदवीयसीपदवीप्रापणं ध्वनयति ।

यथावेति अतृप्यन् पुनस्तामेव दर्शयति । * प्रतीच्छतीति * । अधरः, आशोकीमशोकसम्बन्धिनीं किसलयपरावृत्तिं प्रतीच्छति प्रतिवाञ्छति । कपोलः, पाण्डुत्वात् ताडीपरिणतिमवतरति । दृष्टिः परिम्लानप्रायां कमलिनीमनुवदति, इतीत्थमियं नायिका माधुर्यं स्पृशति तनुत्वं च भजति । अत्र प्रतीच्छति-अवतरति-अनुवदति-स्पृशति इत्यादिचेतनक्रियाधर्माणामचेतनेष्वधरादिष्वध्यारोप उपचारवक्रत्वं प्रत्याययति । अधरोऽतीवारुणः कोमलोपि इति वक्तव्ये अधरः अशोके वर्त्तमानकालिककिसलयानां परावृत्तिमीहते । यद्येतानि जन्मान्तरत्वमितानि स्युः । तदा मया सहोपमीयेरन् । इति नूतनोल्लेखविलक्षणत्वेनाभिधानमतिरमणीयम् । तदितोऽधरतः किसलयच्छविरपकर्षवती इति ध्वन्यते । तत्राप्यचेतनेऽधरे दीयमानग्रहणरूपप्रत्येषणक्रियाकर्तृत्वोपनिबन्धोऽतितरां विच्छित्तिमाचिनोति । परिणतताडीसौन्दर्यसंवादसुभगा कापि कपोलयोः कान्तिरवतरतीति वर्त्तमाननिर्देशेन प्रतिदिवसं परं परिपोषमासादयति । अलसा दृष्टिरित्यनभिधाय म्लानीभूतां पद्मिनीमनुवदतीयं दृष्टिरित्युक्तिः सर्वानपि औपम्यपथभ्रमभाणानतिशेरते यतः पर्युषितकमलविच्छित्तिमात्मनो भावयति सचेतसां चेतसि । परप्रकर्षाभिमु-

रसकविः—

"एतां विलोकय तनूदरि ताम्रपर्णीमम्भोनिधौ विवृतशुक्तिपुटोद्धृतानि ।
यस्याः पयांसि परिणाहिषु हारमूर्त्या वामभ्रुवां परिणमन्ति पयोधरेषु ॥"

मार्गकविः—

"मूलं वालकवीरुधां सुरभयो जातीतरूणां त्वचः
सारश्चन्दनशाखिनां किसलयान्यार्द्राण्यशोकस्य च ।
शैरीषी कुसुमोद्गतिः परिणमन्मोचं च सोऽयं गणः
ग्रीष्मेणोष्महरः पुरा किल ददे दग्धाय पञ्चेषवे ॥"

---

खेऽपि विप्रलम्भे कदाचित्संकल्पोपस्थापितप्राणनाथायां दृष्टौ कान्तिर्भवतीति प्रायः पदेन सूचितम् ।

रसमेव कवतेऽसौ उदाह्रियते । एतामिति । नदीविहारकालिका नायकस्योक्तिः । हे तनूदरि ! अयि ! कृशोदरि ! एतां ताम्रपर्णीमेतन्नाम्नीं नदीं विलोकय पश्य । अम्भांसि निधीयन्तेऽस्मिन् समुद्रे विवृतेभ्यः शुक्तिपुटेभ्यः समयाद्विकासितेभ्यः शुक्तिकासमुद्रकेभ्यः उद्धृतानि उत्थापितानि, यस्यास्ताम्रपर्ण्याः पयांसि जलानि । समुद्रगतशुक्तिमध्यपतितत्वेन मौक्तिकतां गतानि हारार्थमुद्धृतानि इत्यर्थः । वामभ्रुवां सुन्दरभ्रुकुटीनां रमणीनां परिणाहिषु विशालेषु पयोधरेषु स्तनेषु हारमूर्त्या हाररूपेण परिणमन्ति परिणतिं प्राप्नुवन्ति । अत्र तनूदरीविषयकनायकनिष्ठा रतिः दुग्धदध्यादिन्यायेन संभोगश्रृंगाररसतां प्राप्ता प्रतीयते । हे तनूदरीत्यत्र तनूदरी आलम्बनविभावः । परिणाहिपयोधरा उद्दीपनविभावः । ताम्रपर्णीनदीवर्णनमनुभावः । तद्गम्यं विहरणौत्सुक्यं व्यभिचारिभावः इति ज्ञेयम् ।

मार्ग्यन्तेऽन्वेष्यन्ते गुणा अस्मिन्निति मार्गो रीतिः । तमेव कवते वर्णयति यः सः मार्गकविरुदाह्रियते । मूलमिति । बालकाश्च ता विरुधश्चेति तासां वालकवीरुधां कोमललतानाम् । लताप्रतानिनी वीरुद् इत्यमरः । मूलं वीजम् । जात्यास्तरवः, जातीतरवस्तेषां मालतीवृक्षाणाम् । सुमना मालती जाती इत्यमरः । सुरभयः सुगन्धयस्त्वचः, । चन्दनशाखिनां मलयजतरूणां सारः परिमलः । अशोकस्यार्द्राणि प्रत्यग्राणि किसलयानि नूतनदलानि च । शैरीषी शिरीषसम्बन्धिनी कुसुमोद्गतिः प्रसूनसमुद्भवः । शिरीषपुष्पाणि चेत्यर्थः । परिणमत् पाकं गच्छन्मोचं कदली च । सोयं पूर्वोक्त ऊष्महरो गणः ग्रीष्मेण ग्रीष्मर्तुना पुरा दग्धाय हरक्रोधाग्निज्वलिताय पंचेषवे ददे दत्तः ।

अत्र "कोमलवर्णासमासयोः" "वीरु" "सुर"सार" "गण" "नमन" इत्यत्र

शास्त्रार्थकविः--

"आत्मारामा विहितरतयो निर्विकल्पे समाधौ
ज्ञानोद्रेकाद्विघटिततमोग्रन्थयः सत्त्वनिष्ठाः।
यं वीक्षन्ते कमपि तमसां ज्योतिषां वा परस्ता-
त्तं मोहान्धः कथमयममु वेत्ति देवं पुराणम् ॥"

एषां द्वित्रैर्गुणैः कनीयान्, पञ्चषैर्मध्यमः, सर्वगुणयोगी महाकविः। दश च कवेरवस्था भवन्ति। तत्र च बुद्धिमदाहार्यबुद्ध्योः सप्त, तिस्रश्च औपदे-

---

ह्रस्वान्तरितयो रेफणकारयोः "लं""धां""न्दं""चञ्च""पञ्च"इत्यादिमूर्धस्थानुस्वारस्य च रचनया वैदर्भीरीतिघटितं पद्यम्।

शास्त्रीयं पदार्थं कवते वर्णयति यः सः उदाह्रियते। *आत्मारामा इति*। वेणसंहारनाटकीयं पद्यम्। श्रीकृष्णबन्धनोद्यतं दुर्योधनं श्रुत्वा, 'आर्य किमसौ दुरात्मा सुयोधनो वासुदेवमपि भगवन्तं स्वेन रूपेण न जानाति, इति पृच्छन्तं सहदेवं प्रति भीमस्योक्तिः। मोहेनाज्ञानेनान्धः वस्तुतत्वप्रतिपत्तिरहितः अयं दुर्योधनः पुराणं प्रकृतेरपि प्राग्वर्त्तिनं तममु देवं श्रीकृष्णं कथं वेत्ति केन प्रकारेण जानातीति सम्बन्धः। तं कम्। यं श्रीकृष्णमात्मनि आरमन्ति प्रत्याहृतेन्द्रियाः सन्तस्तदेकताना भवन्ति। यद्वा आत्मैवारामः क्रीडास्थानं येषां ते योगिनः निर्विकल्पे भेदावभासशून्ये समाधौ विहिता रतिर्यैस्तादृशाः। ज्ञानस्यात्मसाक्षात्कारस्य उद्रेकात् रजस्तमसी अभिभूय सत्वाविर्भावात् विघटितस्तमोग्रन्थिर्यैस्तादृशाः, नाशितमिथ्याज्ञानजन्यसंस्काराः सत्वनिष्ठाः सत्वद्रव्यमात्रनिष्ठाः सन्तः यं कमपि वाङ्मनोगोचरं वीक्षन्ते पश्यन्ति साक्षात्कुर्वन्तीत्यर्थः। कथं योगिभिरेव दर्शनीय स इति हेतुगर्भं यत्पदार्थविशेषणमाह—*तमसामिति*। तमसां तामसानां ज्योतिषां राजसानां वा परस्तात् वर्त्तमानमिति। रजस्तमोऽभिभूतैरलभ्यमित्यर्थः। अत्र आत्मारामनिर्विकल्पादिशब्दा योगशास्त्रीया एव निबद्धाः। एवमन्यत्रापि शास्त्रीयशब्दबन्धेषु ज्ञेयमस्यैवोदाहरणम्।

ननु पूर्वोक्तैकादशकविभेदेषु कश्चिदस्ति मिथस्तरतमभाव उत समाना एवेति जिज्ञासमानमाह—*एषामिति*। एषां पूर्वोक्तानामेकादशकवीनां मध्ये द्वाभ्यां त्रिभिर्वा गुणै शब्दार्थालंकाररचनामयैः विशिष्टः कनीयान् अधमः। पञ्च वा षड्वा परिमाणं येषां तैः पंचषैः गुणैर्युक्तः मध्यमः। सर्वैर्गुणैर्युज्यतेऽसौ महान्तं अर्थराशिं कवते वर्णयति यः सो महाकविः।

रचनायामपि मध्यमाधमभावं भवतीति दर्शयितुमाह—*दशेति* कवेः काव्यत्रिबद्धः दश अवस्था भवन्ति। तत्र दशावस्थानां मध्ये बुद्धिमाँश्चाहार्यबुद्धिश्चेति तयोः

शिकस्य । तद्यथा काव्यविद्यास्नातको, हृदयकविः, अन्यापदेशी, सेविता, घटमानः, महाकविः, कविराजः, आवेशिकः, अविच्छेदी, सङ्क्रामयिता च । यः कवित्वकामः काव्यविद्योपविद्याग्रहणाय गुरुकुलान्युपास्ते स विद्यास्नातकः । यो हृदय एव कवते निह्नुते च स हृदयकविः । यः स्वमपि काव्यं दोषभयादन्यस्येत्यपदिश्य पठति सोऽन्यापदेशी । यः प्रवृत्तवचनः पौरस्त्यानामन्यतमच्छायामभ्यस्यति स सेविता । योऽनवद्यं कवते न तु प्रबध्नाति स घटमानः । योऽन्यतरप्रबन्धे प्रवीणः स महाकविः । यस्तु तत्र तत्र भाषाविशेषे तेषु तेषु प्रबन्धेषु तस्मिंस्तस्मिंश्च रसे स्वतन्त्रः स कविराजः । ते यदि जगत्यपि कतिपये । यो मन्त्राद्युपदेशवशाल्लब्धसिद्धिरावेशसमकालं कवते स आवेशिकः । यो यदैवेच्छति तदैवाविच्छिन्नवचनः सोऽविच्छेदी। यः कन्याकुमारादिषु सिद्धमन्त्रः सरस्वतीं सङ्क्रामयति स सङ्क्रामयिता ।

---

सारस्वताभ्यासिकयोः सप्तावस्था भवंति। औपदेशिकस्य दुर्बुद्धेः तिस्रोऽवस्थाः सन्ति यद्यप्यत्र अवस्थानामेव निर्देशावसरस्तासामेव प्रसंगात् तथापि धर्मस्यान्यथानुपपत्या धर्मिणमेव ज्यायासं मत्वा तद्भेदानेव दर्शयति-*तद्यथेति। यः, कवित्वस्य कामो यस्यासौ काव्यस्योपयोगिनी विद्या आन्वीक्षिक्यादिचतस्रः, उपविद्याः चतुःषष्टिकलाः ग्रहीतुं गुरूणां कुलानि सेवते स काव्यविद्यायां स्नातक आप्लुतव्रती । काव्यविद्याः समाप्य स्नानकर्त्ता तत्पदव्यपदेश्यो भवति इत्यर्थः । यः स्वहृदय एव लज्जाविनयादितः इति भावः । कवते पदार्थं वर्णयति । निह्नुते गोपायति च स हृदयकविः । यः स्वकीयमपि कवित्वं दोषाशंकयान्यस्यैव कस्यचिदिति अपदेशं कृत्वा पठति जनानां समक्षं स कविरन्यापदेशी । प्रवृत्तं काव्यघटनानुकूलं वचनं वाक्यं यस्यैवंभूतो । यः प्राचीनानां कवीनां मध्ये अन्यतमस्यैकस्य भावं गृहीत्वा काव्यं कर्तुं पुनः पुनः प्रवर्त्ततेऽसौ सेविता। यः शुद्धान् पदार्थरसभावादीन् सुघटयितुं जानाति तान् वर्णयति वा, न तु ग्रन्थघटकीकरोति ग्रन्थरूपेण वा स्थापयति सो घटमानः । यो गद्यपद्यान्यतरग्रथने प्रवीणो दक्षः स महाकविः । यस्तु तत्र तत्र पिशाचीसौरसेनीमागध्यादिभाषाविशेषे गद्यपद्यचम्पूप्रभृतिषु ग्रन्थेषु तस्मिंस्तस्मिंश्च श्रृंगारादिरसे स्वतन्त्रः तत्तद्विषयकरचनायां स्वाधीनः स कविराजः। ते यदि जगति संभाव्येरन् तर्हि कतिपये द्वित्राः । अपिशब्दः संभावनायाम्। मन्त्रादीत्यादिशब्देन तंत्रगुरुप्रसादर्षिदेववरदानानि ग्राह्याणि। य आवेशसमकालं यदाभिनिवेशस्तस्मिन्काले कवते स आवेशिकः । यो यस्मिन्काले वाञ्छति तस्मिन्नेव काले प्रावाहिकं कवते असावविच्छेदी । यः कन्याकुमारादिषु आदिशब्दा-

सततमभ्यासवशतः सुकवेः वाक्यं पाकमायाति । "कः पुनरयं पाकः ?" इत्याचार्याः । "परिणामः" इति मङ्गलः । "कः पुनरयं परिणामः ?" इत्याचार्याः । "सुपां तिङां च श्रवः सैषा व्युत्पत्तिः" इति मङ्गलः। सौशब्द्यमेतत् । "पदनिवेशनिष्कम्पता पाकः" इत्याचार्याः । तदाहुः—

---

त्कामाख्याप्रभृतिसिद्धपीठेषु सिद्धमन्त्रः कृतजपः सन् वाग्देवीं संक्रामयति स्वस्मिन्स्थापयति स संक्रामयिता ।

इत्थं कवीनां स्थूलसूक्ष्मभेदान्प्रदर्श्य तत्कृतरचनायाः अर्थगाम्भीर्यस्वरूपं प्रौढिभावं व्याचिख्यासुराह-*सततमिति* । अयमत्र भावः । व्युत्पत्तिप्रतिभे काव्यकारणे काव्यबीज इति पूर्वमुक्तम् , । तयोर्बीजत्वेन काव्यस्यापि फलत्वमर्थात् सिद्धम् । तथाचाम्रादिफलेषु यादृशी परिणतिः सहृदयैरनुभूयते फलसाधारण्यात् किं तादृशी वान्यादृशी वेति स्वपरमतेन विवेक्तुमुत्तरं वाक्यमवतारयति । निरन्तरं पौनः पुन्येन प्रवृत्तिकारणात् पदानामावापोद्वापाभ्यां सन्निवेशेनाभ्यासकारणात् कवयितुर्वाक्यं पाकमाप्नोति । ननु विक्लित्यनुकूलव्यापारे पच्धात्वर्थे सिद्धावस्थां प्राप्ते सति यद्भवति स एवायं पाक उत अन्य इत्यभिप्रायेणाशंकन्ते। *क इति* । मंगलोक्त्या उत्तरयति *परिणाम इति* । पाकपरिणामयोः पर्यायबुद्ध्या पुनः प्रश्नः । *कः पुनरिति* । पुनः मंगलवाचा प्रतिवदति । *सुपामिति* सुपां सुबन्तानां तिङां तिङन्तानां च पदानां श्रवः श्रुतिः संस्कारः इति यावत्। सैषा व्युत्पत्तिः विशिष्टा उत्पत्तिः । चादिविना रचनासौन्दर्यसमर्पकतया चमत्कारकारित्वमित्यर्थः । अयमेव वृन्ताकपाकः प्राक्तनैरुच्यते । *यदुक्तम्* ।

सुप्तिङसंस्कारसारं यत् क्लिष्टवस्तुगुणं भवेत्।
काव्यं वृन्ताकपाकं स्याज्जुगुप्सन्ते जनास्ततः ॥ इति

ननु भवदुक्ता व्युत्पत्तिः, "व्युत्पत्तिः सुप्तिङां या तु प्रोच्यते सा सुशब्दता" इत्युक्तलक्षणः सुशब्दाख्यो गुण एव न तु पाक इत्याशयेनाह-*सौशब्द्यमिति* । कस्तर्हि पाक इति प्रतिवदन्त्याचार्याः । *पदेति* पदस्य सुप्तिङन्तरूपस्य निवेशने रचने निष्कम्पता स्थैर्यं पाकः पाकशब्दवाच्य इति ।

तदाहुरिति प्रतिपादितेर्थे प्रावादुकपद्यं प्रमाणयति । *आवापेति* । तावत्कालमेव, आवापः सन्दर्भानुकूलपदनिवेशनम् । स च । उद्धरणं चेति अवापोद्धरण आधानापसारणे, यावत् एतादृशं पदं, प्रयोगयोग्यं वा एतादृशमित्येवं मनसो दोलाचाञ्चल्यं जायते। पदानां स्थैर्ये निष्कम्पतायां स्थापिते कृते सति, स्थैर्ये सत्येव एवमन्यत्पदं नास्तीति सहृदयानां व्यवहारो जायते इति भावः। हन्त हर्षे सरस्वती वाग्देवी

"आवापोद्धरणे तावद्यावद्दोलायते मनः ।
पदानां स्थापिते स्थैर्ये हन्त सिद्धा सरस्वती ॥"

"आग्रहपरिग्रहादपि पदस्थैर्यपर्यवसायस्तस्मात्पदानां परिवृत्तिवैमुख्यं पाकः" इति वामनीयाः ॥ तदाहुः—

"यत्पदानि त्यजन्त्येव परिवृत्तिसहिष्णुतां ।
तं शब्दन्याय(स)निष्णाताः शब्दपाकं प्रचक्षते ॥"

"इयमशक्तिर्न पुनः पाकः" इत्यवन्तिसुन्दरी । यदेकस्मिन्वस्तुनि महाकवीनामनेकोऽपि पाठः परिपाकवान्भवति, तस्माद्रसोचितशब्दार्थसूक्तिनिबन्धनः पाकः । यदाह—

"गुणालङ्काररीत्युक्तिशब्दार्थग्रथनक्रमः ।
स्वदते सुधियां येन वाक्यपाकः स मां प्रति ॥"

---

सिद्धा । एवमस्मिन्मते पूर्वापेक्षया किञ्चिदुत्कृष्टो वदरपाक एव पाकाभिधेयः ।

वामनमतं निर्दिशति । *आग्रहो न्यासः ( परिगतो ग्रहो ग्रहणं यस्मादिति ) परिग्रहोऽपसारणम् । तस्मादपि पदानां स्थैर्यं भवति । अतः पदानां परिवृतेः वैमुख्यं पर्यायपरिवर्तनासहत्वं पाकः पाकाभिधेयः ।

तदाहुरिति उपष्टम्भकं शास्त्रवाक्यमवतारयति *यत्पदानीति* । यत् इति अव्ययम् यद् पाके पदानि । परिवृत्तिं पर्यायशब्दोपस्थितिं सहन्ते इति सहिष्णवस्तेषां भावस्तत्ता तां त्यजन्ति एव सर्वथा पर्यायशब्देनोपस्थापनवैमुख्यं कुर्वन्तीत्यर्थः । तं पाकं शब्दानां न्यासे निष्णाताः कुशलाः पण्डिताः शब्दपाकं प्रचक्षते कथयन्ति । एवमस्मिन्मते नालिकेरीपाकः पाकाभिधेयोर्थः ।

परमतेन खण्डयति *इत्यमिति* । यच्छब्दाः परिवृत्तिं न सहन्ते तदियं कवयितुरशक्तिरसामर्थ्यमेव किन्तु न पाकः । इति अवन्तिसुन्दरी । एतन्नाम्नी चौहाणवंशोद्भवा राजशेखरपत्नीत्यैतिह्यम् । हेतुं दर्शयति *यदिति*। यद् यतः एकस्मिन् वर्णनीये वस्तुनि पदार्थे महाकवीनामनेकोऽपि पाठः परिपाकवान् भवति । कस्तर्हि पाक इत्याकांक्षायां वक्ति *तस्मादिति* पूर्वोक्तहेतोः रसयोग्यस्य शब्दस्य अर्थस्य सुभाषितानां च निवन्धनं यत्र भवति स पाकः काव्यपाक इत्यर्थः ।

यदाहेति परोक्तं लक्षणं संवदति । येन पाकेन विदुषां; गुणानाम्, अलंकारणाम्, रीतीनाम्, उक्तीनाम्, शब्दानाम्, अर्थानाम्, रचनापरिपाटी स्वदते आनन्दयति स मां प्रति मन्मते वाक्यस्य पाकः काव्यस्य पाकः। एवमस्मिन् मते सहकारपाकः पाकाभिधेयः । तदुक्तम्

तदुक्तम्—"सति वक्तरि सत्यर्थे शब्दे सति रसे सति ।
अस्ति तन्न विना येन परिस्रवति वाङ्मधु ॥"

"कार्यानुमेयतया यत्तच्छब्दनिर्वेद्यः परं पाकोऽभिधाविषयस्तत्सहृदयप्रसिद्धिसिद्ध एव व्यवहाराङ्गमसौ" इति यायावरीयः । स च कविग्रामस्य काव्यमभ्यस्यतो नवधा भवति । तत्राद्यन्तयोरस्वादु पिचुमन्दपाकम्, आदावस्वादु परिणामे मध्यमं बदरपाकम्, आदावस्वादु परिणामे स्वादु मृद्वीकापाकम्, आदौ मध्यममन्ते चास्वादु वार्त्ताकपाकम्, आद्यन्तयोर्मध्यमं

---

गुणस्फुटत्वसाकल्ये काव्यपाकं प्रचक्षते ।
चूतस्य परिणामेन स चायमुपमीयते । इति ।

तदुक्तमिति अस्य सकललावण्यशालितया कविकुलशीलनीयतामालयति । *सतीति* । सच्छब्दोत्र साध्वर्थः । सत्ये साधौ विद्यमाने प्रशस्तेऽभ्यर्हिते च सत्' इत्यमरोक्तेः । वक्तरित्यादीनि सतिसप्तम्यन्तानि बोध्यानि । वक्तरि कवयतरि, अर्थे नूतनोल्लिखिते पदार्थे अनुशिष्टे शब्देरसे च सति साधौ सत्यपि येन विना वाचां मधु न परिस्रवति न स्यन्दते, तद्वाक्यपाकनामकं किमपि वस्तु अस्ति ।

इत्थं पाकविषये परमतान्यनूद्य स्वमतं दर्शयति—*कार्येति* । परं केवलं कार्येण काव्यरूपेण तेन अनुमेयः अनुमातुं योग्यः । तस्य भावस्तत्ता तया अत एव यत्तच्छब्दाभ्यां निर्वेद्यः प्रतिपाद्यः यादृग्घनापरिपाटीविशिष्टं काव्यं तादृशः पाकः पाकशब्देन अभिधातुं योग्यः । इदं तत्त्वम् । यत्र पदानां परिवृत्त्यसहिष्णुता वर्त्तते तत्काव्यं पदपाकयुक् । यत्र गुणालङ्कारदीनां सुन्दरो रचनाक्रमः तत्काव्यं वाक्यपाकयुक् भवति । तत्तस्मात् सहृदयानां भावकानां प्रसिद्ध्या सिद्धो निष्पन्नः अर्थात् यत्र सहृदयानां तत्तत्पाकपदवाच्यत्वप्रकारिकोपस्थितिर्जायतेऽसौ व्यवहाराङ्गं सहकारनालिकेरादिपाकपदव्यपदेशे बीजम् । इति ग्रन्थकृतः स्वोऽभिप्रायः ।

स च पाकः काव्यं पौनःपुन्येन शीलयतः कविसमुदायस्य नवप्रकारोऽस्ति । पाकस्य नवप्रकारान् सलक्षणान् व्याख्याति *तत्रेति* । तत्र तेषां नवप्रकारपाकानां मध्ये आद्यन्तयोः आद्यन्तावस्थायां अस्वादु अमधुरम् । पिचुमन्दस्य निम्बस्य । अरिष्टः सर्वतोभद्रहिंगुनिर्यासमालकाः, पिचुमन्दश्च निम्बे, इत्यमरः । पाक इव पाको यस्मिन् काव्ये तत् । आदौ चर्व्यमाणोऽस्वादु परिणतौ मध्यमं वदरस्य पाक इव पाको यस्मिन् यस्य वा तत् । आदौ प्रथमचर्वणायां परिणतौ च स्वादुं मधुरं मृद्वीकायाः, 'मृद्वीका गोस्तनी द्राक्षा, इत्यमरः । पाक इवेति पूर्ववत् । आदौ स्वाद्वस्वादु परिणतावस्वादु वार्ताकस्येव वृन्ताकस्येव पाको यस्य तत् । आद्यन्तयोर्मध्यमम् अर्थात् मध्येस्वादुतिन्ति-

तिन्तिडीकपाकम्, आदौ मध्यममन्ते स्वादु सहकारपाकम्, आदावुत्तममन्ते चास्वादु क्रमुकपाकम्, आदावुत्तममन्ते मध्यमं त्रपुसपाकम्, आद्यन्तयोः स्वादु नालिकेरपाकमिति। तेषां त्रिष्वपि त्रिकेषु पाकाः प्रथमे त्याज्याः। वरमकविर्न पुनः कुकविः स्यात्। कुकविता हि सोच्छ्वासं मरणम्। मध्यमाः संस्कार्याः। संस्कारो हि सर्वस्य गुणमुत्कर्षयति। द्वादशवर्णमपि सुवर्णं पावकपाकेन हेमीभवति। शेषा ग्राह्याः। स्वभावशुद्धं हि न संस्कारमपेक्षते। न मुक्तामणेः शाणस्तारतायै प्रभवति। अनवस्थितपाकं पुनः कपित्थपाकमा-

---

डीकस्येव चुक्रस्येव। तिन्तिडीकं च चुक्रं च वृक्षाम्लमित्यमरः। सहकारोऽतिसौरभाम्रः। सहकारोतिसौरभः। इत्यमरः। क्रमुकः पूगः। त्रपुसं कर्कटी। नलिकेरम् प्रसिद्धम्। एवमेतेषां पिचुमन्दवदरमृद्वीकापाकानामेकस्त्रिकः। वार्त्ताकतिन्तिडीकसहकारपाकानां द्वितीयस्त्रिकः। क्रमुकत्रपुसनालिकेरपाकानां तृतीयस्त्रिकः।

अथैतेषामुत्तमादिभावं विभजति--*तेषामिति*। तेषां नवपाकानां मध्ये त्रिष्वपि त्रिकेषु प्रथमे पिचुमन्दवार्त्ताकक्रमुकानां पाकास्त्याज्या अग्राह्या अधमा इति। एतत्पाकानामधमत्वादेतत्पाकविशिष्टानि काव्यान्यपि अधमानीत्यर्थात्प्राप्तम्। काव्यानामधमत्वात्तादृशकाव्यकर्त्तॄणामप्यधमत्वं व्यंग्यम्।

तादृशपाकविशिष्टकाव्यकर्तॄन्निन्दयति—*कुकविरिति*। अकविर्वरम्। किन्तु कुत्सितः कविर्न भूयात्। कवितां कर्त्तुं न जानातीति ज्ञानाभावो वरं परं कुकाव्यं न कुर्यात्, इति भावः। हेतुमुपन्यस्यति कुत्सितकवित्वं सोच्छ्वासं सजीवं मरणम्॥ तदुक्तम्।

नाकवित्वमधर्माय मृतये दण्डनाय वा।
कुकवित्वं पुनः साक्षान्मृतिमाहुर्मनीषिणः। इति।

मध्यमा वदरतिन्तिडीकत्रपुसानां पाकाः संस्कृत्य ग्राह्याः। संस्कारो हि प्रतियत्न हि। दृष्टान्तयति *द्वादशेति*। शेषाः मृद्वीकासहकारनालिकेराणां पाकाः स्वच्छन्दं ग्राह्याः। किमत्र संस्कारोऽपेक्ष्यो नवेत्यत आह—*स्वभावेति*। शाणः मण्यादिषु-समुत्कर्षाधायको यन्त्रविशेषः। तारतायै मुक्ताशुद्ध्यै। मुक्ताशुद्धौ च तारः स्यादित्यमरः। *अनवस्थितेति*। अनवस्थितः असुनिर्भेदः स्पष्टत्वेन प्रतिपत्तिरहितः इत्यर्थः। पाको यस्मिन् काव्ये तत्काव्यं कपित्थपाकं कथयन्ति। यथाह भामहः।

अहृद्यमसुनिर्भेदं रसवत्त्वेप्यपेशलम्।
काव्यं कपित्थपाकं तत् केषांचित्सदृशं यथा। इति।

मनन्ति। तत्र पलालधूननेन अन्नकणलाभवत् सुभाषितलाभः।

सम्यगभ्यस्यतः काव्यं नवधा परिपच्यते।
हानोपादानसूत्रेण विभजेत्तद्धि बुद्धिमान् ॥
अयमत्रैव शिष्याणां दर्शितस्त्रिविधो विधिः।
किन्तु विविधमप्येतत्त्रिजगत्यस्य वर्त्तते ॥

॥ इति राजशेखरकृतौ काव्यमीमांसायां कविरहस्ये प्रथमेऽधिकरणे व्युत्पत्तिकविपाकानां निरूपणं पञ्चमोऽध्यायः ॥

---

*तत्रेति*। तत्रानवस्थितपाके पलालस्य सस्यशून्यधान्यनालस्य धूननेन निष्पवनेन सुभाषितलाभः सूक्तिलाभः। यथा पलालधूननेन कदाचित् अन्नकणलाभस्तथैव तादृशकाव्यात्कदाचित् सूक्तिलाभः स्यात्।

उक्तमुपसंहरति-*सम्यगिति*। सततप्रवृत्त्या शीलयतः कवेः काव्यं नवधा परिपाकमायाति। किन्तु सर्वे पाका नानुशीलनीया इत्याह। *हानेति*। हानञ्चोपादानञ्च तयोः सूत्रम्। तेन दोषवद्वस्तु सर्वं हेयम् गुणवत्सर्वमुपादेयमितिसूत्रेण बुद्धिमान् तत् काव्यं विविच्य पृथक्कुर्यात।

*अयमिति*। अत्र काव्यमीमांसायां शिष्याणां कृते तेषामेव विनेयत्वात्। एतत्त्रिप्रकारमेव विधानं दर्शितम्।

स्वादुकाव्यरसोन्मिश्रं शास्त्रमप्युपयुञ्जते।
प्रथमालीढमधवः पिवन्ति कटुभेषजम्। इति

नीत्याल्पमेवोक्तम्। किं वह्वपि विधानं भवतीत्याह। *किन्त्विति*। किन्तु त्रिजगति अस्य काव्यस्यानेकप्रकारं विधानं वर्त्तते।

इति आहिताग्नि श्रीमधुसूदनशास्त्रिणःकृतौ मधुसूदनीविवृतौ पञ्चमोऽध्यायः ॥
समाप्तश्चायं मुद्र्यमाणः पञ्चाध्यायीरूपः प्रथमोभागः।
इति शम्।

सर्वविधपुस्तकप्राप्तिस्थानम्

जयकृष्णदास-हरिदास गुप्तः—
चौखम्बा संस्कृत सीरिज् आफिस, विद्याविलास प्रेस,
गोपालमन्दिर के उत्तर फाटक, बनारस सिटी।

* श्रीः *

# षष्ठोऽध्यायः

## पदवाक्यविवेकः ।

व्याकरणस्मृतिनिर्णीतः शब्दो निरुक्तनिघण्ट्वादिभिर्निर्दिष्टस्तदभिधेयोऽर्थस्तौ पदम् । तस्य पञ्च वृत्तयः सुब्वृत्तिः, समासवृत्तिः, तद्धितवृत्तिः,

---

* श्रीः *

पद वाक्य विवेकज्ञान्पाणिन्यादीन्मुनीन्नुमः
येषां विरचनामाप्य मूर्खाः पाण्डित्यमाश्रिताः ।

अथ पूर्वं काव्यस्य परिणामं ( पाकं ) व्याख्यातम् । तत्र क्रमप्राप्तं काव्यलक्षणं निर्दिदिक्षुर्ग्रन्थकारः प्राक् काव्यलक्षणगतवाक्यं तल्लक्षणघटकं पदं चोभयमपि व्याख्यातुं सूत्रमवतारयति—पदवाक्येति । पदं च वाक्यं चेति इतरेतरयोगद्वन्द्वः । तयोर्विवेको विशद व्याख्यानं करिष्यते । गुणवदलंकृतं च वाक्यमेव काव्यमिति काव्यलक्षणघटकवाक्यविषयकशिष्यजिज्ञासानिरासाय पदसन्दर्भो वाक्यमित्युत्तरेऽपि किं तावत्पदमित्याकांक्षाया वर्त्तमानत्वात्ततो मूलत एव तद् व्याख्यानमस्माभिः करिष्यते इति भावः ।

तत्र पदस्वरूपं निर्दिशति—व्याकरणेति । व्याकरणस्य स्मृतिः व्याकरणस्मृतिः शब्दान्वाख्यानबोधकोऽष्टाध्याय्यादिर्ग्रन्थः । तया निर्णीतः सिद्धान्तसिद्धप्रकृतिप्रत्ययविकरणत्वेनावधारितः शब्दः, निरुक्तं च निघण्टुश्च तौ निरुक्तनिघण्टू आदी येषां तै निर्दिष्टस्तद्वाच्योऽर्थः, तौ शब्दार्थौ । अर्थात् अर्थवच्छब्दस्वरूपं पदम् । तथाभूतस्यैव प्रातिपदिकसंज्ञया स्वाद्युत्पत्तौ सुप्तिङन्तं पदमिति पदत्वमुक्तम् । तस्येति । तस्य पदस्य पञ्च वृत्तय वर्त्ततेऽर्थो यासु ता वृत्तयः । प्रत्ययान्तर्भावेन परपदार्थान्तर्भावेन वा विशिष्टार्थाभिधानं वृत्तिशब्दार्थः । यथा विष्णोः पूः विष्णुपुरमित्यत्र ऋक्पूरब्धूरित्यच् । अत्र विष्णुपुरच्प्रत्ययानां प्रत्येकार्थो न विवक्षितः किन्तु विशिष्टार्थो वैकुण्ठरूपो विवक्षितः । ताश्च सुब्वृत्तिप्रभृतयः । सुब्वृत्तिपदेनात्र एकशेषरूपा वृत्तिर्गृह्यते । तद्धितवृत्तिरर्थात् तद्धितघटितसमुदायरूपावृत्तिः । कृद्वृत्तिः कृदन्तरूपावृत्तिः । तिङ्वृत्तिपदेन सन्नाद्यन्तधातुरूपा वृत्तिर्गृह्यते । यतस्तत्रैकार्थीभावानभ्युपगमतया तिङन्तरूपाया वृत्तेरभावात् । यदि तत्रापि एकार्थीभाव आश्रीयेत तर्हि पच्तिपोरेकार्थीभावेन फलरूपपच्धात्वर्थे मृदुत्वादीनामन्वयस्यासिद्धतया मृदु पचति प्रभृतीनां प्रयोगाणामनापत्तिः स्यात् । अतो यथोक्तमेव सत् । अत एव दीक्षितैः कृत्तद्धितसमासैकशेषसनाद्यन्तधातुरूपाः पञ्चवृत्तय इत्युक्तम् । आसु वृत्तिव्यवहारः प्राचीनानां समुदायस्य तदधीनतयौपचारिकः । एतच्च सर्वं समर्थः पदविधिरिति परि

कृद्वृत्तिः, तिङ्वृत्तिश्च । गौरश्वः पुरुषो हस्तीति जातिवाचिनः शब्दाः । हरो हरिर्हिरण्यगर्भः काल आकाशं दिगिति द्रव्यवाचिनः । श्वेतः कृष्णो रक्तः पीत इति च गुणवाचिनः । पाचकः पाठक इति क्रियावाचिनः प्रादयश्चादयश्चासत्त्ववचनाः । नगरमुप प्रस्थितः पन्थाः, 'वृक्षमनु द्योतते विद्युदिति कर्मप्रवचनीयाः । "सेयं सुब्वृत्तिः पञ्चतय्यपि वाङ्मयस्य माता" इति विद्वांसः । सुब्वृत्तिरेव समासवृत्तिः । व्याससमासावेवानयोर्भेदहेतू । सा च षोढा द्वन्द्वादिभेदेन । तत्र षट्समासीसमासमूक्तम्—

"द्वन्द्वोऽस्मि द्विगुरस्मि च गृहे च मे सततमव्ययीभावः ।
तत्पुरुष कर्म धारय येनाऽहं स्यां बहुव्रीहिः ॥"

---

भाषाबललभ्यम् । तत्र समासतद्धितयोः पदोद्देश्यकविधित्वस्य स्पष्टतया प्रमाणान्तरसिद्धैकार्थीभावस्य च सत्वेन परिभाषाप्रवृत्तिः स्पष्टा । कृतामप्युपपदनिमित्तकानां पदविधित्वं स्पष्टमेव । पदविधिशब्देन पदविधिसहचरितोपि गृह्यते । अत एकशेषे सनाद्यन्तधातुषु चैकार्थीभावः । यत एकशेषे द्वन्द्वानुवृत्या पदविधिविधानेनैकार्थीभाव आवश्यकः । सनादिषु क्यजादेः पदविधित्वं स्पष्टमेव ।

तत्र शब्दानां विधां दर्शयति—गौरश्व इति । गौरश्व इत्यादयो जातिवाचिनः शब्दाः । अर्थात् एषां शब्दानामर्थे प्रवृत्तिकारणं जातिः अत एते जातिं कथयन्तीति जातिवाचिनः शब्दाः । हरो हरिरित्यादयो द्रव्यवाचिनः शब्दाः । यदृच्छाशब्दः संज्ञाशब्द इति यावत् । श्वेतः कृष्ण इत्यादयो गुणवाचिनः शब्दाः । पाचकः पाठक इत्यादयः क्रियावाचिनः शब्दाः । प्रादयश्चादयस्तथा । नगरमुप नगराद्धीनः अर्थात् अधः पन्था मार्गः प्रस्थितः, उपोऽधिके चेति उपस्य कर्मप्रवचनीयसंज्ञा । वृक्षमनु विद्योतते विद्युत् वृक्षसंवन्धि द्योतनमित्यर्थः । लक्षणेत्थंभूतेति अनोः कर्मप्रवचनीयसंज्ञा । इति कर्मप्रवचनीयाश्च असत्ववचनाः अद्रव्यवाचिनः । सेयमिति । जातिगुणक्रियाद्रव्याद्रव्यभेदेन पंचप्रकारापि सुब्वृत्तिः वाङ्मयस्य माता मातृवदुपकारिका । इति विद्वांसः पण्डिताः कथयन्तीति शेषः । सुब्वृत्तिरेव । एवकारोप्यर्थः । सुब्वृत्तिरपि समासवृत्तिः । एकशेषस्य समासान्तर्भूतत्वात् । यदि ऐक्यं तर्हि कोनयो र्भेदस्तदाह—व्यासेति । समासव्यासौ विस्तारसंक्षेपौ अनयोरेकशेषसमासवृत्योर्भेदहेतू पार्थक्यकारणे । सा च समासवृत्तिश्च द्वन्द्वादिभेदेन षोढा षट्प्रकारा । तत्र षण्णां समासानां समाहारः षट्समासी । द्विगोरिति ङीप् । तस्याः समाससूक्तं संक्षेपवोधकपद्यम् ।

द्वन्द्वोऽस्मीति । कश्चिदर्थार्थी भक्तो भगवन्तं पुरुषं परमेश्वरं प्रार्थयति । अथवा वेतनार्थी कश्चिज्जनः समितेरधिकारिणं प्रार्थयति । अहं द्वन्द्वः स्त्रीपुरुषयोः युग्मरूपोऽस्मि, अथ द्विगुरस्मि द्वौ गावौ यस्यासौ द्विगुः । मे मम गृहे सततं निरन्तरम् । अव्ययी

तद्धितवृत्तिः पुनरनन्ता । तद्धि शास्त्रप्रायोवादो यदुत तद्धितमूढाः पाणिनीयाः । माञ्जिष्ठं रौचनिकं सौरं सैन्धवं वैयासीयमिति तद्धितान्ताः । प्रातिपदिकविषया चेयम् । कृद्वृत्तिश्च धातुविषया । कर्त्ता हर्त्ता कुम्भकारो नगरकार इति कृदन्ताः । तिङ्वृत्तिर्दशधा दशलकारीभेदेन । द्विधा च सा धातुसुब्धातुविषयत्वेन । अपाक्षीत् पचति पक्ष्यतीति धातवीयान्याख्यातानि । अपल्लवयत् पल्लवयति पल्लवयिष्यतीति सौब्धातवीयानि । तदिदमित्थङ्कारं पञ्चप्रकारमपि पदजातं मिथः समन्वीयमानमानन्त्याय कल्पते । तज्जन्मा चैष विदुषां वादो यत्किल दिव्यं समासहस्रं बृहस्पतिर्वक्ता शतक्रतुरध्येता तथापि नान्तः शब्दराशेरासीत् । तत्र दयितसुब्वृत्तयो विदर्भाः । वल्लभसमासवृत्तयो गौडाः । प्रियतद्धिता दाक्षिणात्याः । कृत्प्रयोगरुचय उदीच्याः । अभीष्टतिङ्वृत्तयः सर्वेऽपि सन्तः । तेषां च विशेषलक्ष-

---

भावः । न व्ययः, अव्ययः । अव्ययो व्ययः सम्पद्यमानः । अव्ययीभावः । पूर्वं मद्गृहे व्ययो नासीत्, इदानीं सततं व्ययो वर्त्तते इति च्विप्रत्ययस्य तत्वम् । अतः हे पुरुष ? परमपुरुष ? परमात्मन् ? अथवा समितेरधिकारिपुरुष ? तत्तादृशं कर्म धारय प्रापय अर्थात् कर्त्तव्यत्वेन मह्यं देहि । येन कर्मणाहं बहुब्रीहिः । बहवो ब्रीहयो यस्यासौ प्रचुरधान्यसंपन्नः स्याम् भूयासम् । परमार्थस्तु द्वन्द्वः, द्विगुः, अव्ययीभावः, तत्पुरुषः, कर्मधारयः, बहुब्रीहिरिति षट् समासाः ।

तद्धितवृत्तिस्तु अनन्ताः । यस्या अनन्तत्वाद्धि । शास्त्रप्रायोवादः । प्रायः बाहुल्येन वादः प्रसिद्धिः शास्त्रेषु प्रायोवादः बाहुल्येन प्रसिद्धिः । यदुत तद्धितविषये मूर्खाः पाणिनीयाः । उदाहरति—माञ्जिष्ठमिति । मञ्जिष्ठेन रक्तं माञ्जिष्ठम् । रोचनेन रक्तं रौचनिकम् । सूरस्येदं सौरम् । सिन्धौ भवं सैन्धवम् । व्यासेन प्रोक्तं वैयासीयम् । इयं तद्धितवृत्तिः प्रातिपादिकविषया प्रातिपदिकादेव परतो भाविनी न धातोः परतो भाविनीति भावः । कृद्वृत्तिस्तु धातुमुद्दिश्य प्रवर्त्तते । उदाहरणं कृधातोः परतस्तृच् प्रत्यये कर्ता । एवं हर्त्तृप्रभृतयः । तिङ्वृत्तिपदेन अस्मदुक्तमेव ग्राह्यम् । एवं तिङन्तरूपवृत्तिस्वीकारस्तु व्याकरणशास्त्ररहस्याज्ञानमूलकम् । पंचवृत्तिभेदेन पंचविधमपि । समन्वीयमानं संयोज्यमानम् । तज्जन्मा पदानन्त्यकल्पनाजन्यः । शतं क्रतवो यज्ञा यस्यासौ शतक्रतुरिन्द्रः । अथ देशभेदेन वृत्ती विविनक्ति—तत्रेति । दयिता सुब्वृत्तिर्येभ्यस्ते दयितसुब्वृत्तयः । वल्लभा समासवृत्तिर्येभ्यस्ते वल्लभसमासवृत्तयः । प्रियास्तद्धिता येभ्यस्ते प्रियतद्धिताः । कृदन्ता ये प्रयोगास्तेभ्यो रुचिर्येषां ते कृत्प्रयोगरुचयः । अभीष्टा तिङ्वृत्तिर्येभ्यस्तेऽभीतिङ्वृत्तयः । सन्तः सज्जनाः

णानुसन्धानेनावर्द्धताख्यातगणः। उक्तञ्च—

"विशेषलक्षणविदां प्रयोगाः प्रतिभान्ति ये।
आख्यातराशिस्तैरेष प्रत्यहं ह्युपचीयते॥"

पदानामभिधित्सितार्थग्रन्थनाकरः सन्दर्भो वाक्यम्। "तस्य च त्रिधाऽभिधाव्यापारः" इत्यौद्भटाः। वैभक्तः शाक्तः शक्तिविभक्तिमयश्च। प्रतिपदं श्रूयमाणासूपपदविभक्तिषु कारकविभक्तिषु वा वैभक्तः। लुप्तास्वपि विभक्तिषु समाससामर्थ्यात्तदर्थावगतौ शाक्तः। उभयात्मा च शक्तिविभक्तिमयः। तत्र वैभक्तः—

"नमस्तस्मै वराहाय लीलयोद्धरते महीम्।
खुरयोर्मध्यगो यस्य मेरुः खणखणायते॥"

शाक्तः—"वित्रस्तशत्रुः स्पृहयालुलोकः प्रपन्नसामन्त उदग्रसत्त्वः।
अधिष्ठितौदार्यगुणोऽसिपत्रजितावनिर्नास्ति नृपस्त्वदन्यः॥

---

सन्ति। तेषामभीष्टतिङ्वृत्तीनां विशेषाणां लक्षणानामनुसन्धानेन विचारेण आख्यातगण आख्यातसमुदायोऽवर्द्धतोपाचीयत।

उक्तमिति उक्तार्थे प्राचाम्पद्यमुपन्यस्यति विशेषेति विशेषलक्षणानि विदन्तीति तेषां विशेषलक्षणविदाम् ये प्रयोगा प्रतिभान्ति। तैः प्रयोगैः प्रत्यहमेष आख्यातराशिरुपचीयते वर्द्धते।

एवं पदविवेकं कृत्वा वाक्यविवेकं प्रस्तौति–पदेति। पदानाम्। अभिधातुमिष्टोऽर्थोऽभिधित्सितार्थः। तस्य ग्रन्थनां गुम्फनां करोतीति अभिधित्सितार्थग्रन्थनाकरः (सन्दृभ्नातीति) सन्दर्भः समूहो वाक्यम्। तस्य वाक्यस्य त्रिधाऽभिधाव्यापारः। वाक्ये त्रिप्रकारेणाभिधाशक्तिः प्रवर्त्तत इति भावः। प्रतिपदं श्रूयमाणासु अलुप्तासु अनुपहतासु वा विभक्तिषु सुप्तिङ्सु वा तथाभूतासु कारकविभक्तिषु सत्सु वैभक्तः। विभक्तिषु लुप्तास्वपि समाससामर्थ्यात् समासशक्त्या तदर्थावतौ विभक्त्यर्थावगतौ शाक्तः।

वैभक्तमभिधाव्यापारं दर्शयति–नम इति। लीलया कौतुकेन महीमुद्धरते तस्मै पुराणप्रसिद्धाय वराहाय नमः। यस्य खुरयोर्मध्यगो मध्यगतो मेरुः खणखणायते खणखण इवाचरति। अत्र तस्मै, वराहाय, उद्धरते, इत्यत्र न मोयोगे नमः स्वस्तिस्वाहास्वधेत्यादिना चतुर्थी। महीमिति उद्धरणक्रियाकर्मत्वम्। लीलयेति करणे तृतीया। इयान् विशेषः पूर्वपदत्रये उपपदविभक्तिः। उत्तरत्र कारकविभक्तिः। एवमुत्तरार्धे बोध्यम्।

शाक्तमभिधाव्यापारं दर्शयति–वित्रस्तेति। वित्रस्तः उद्वेजितः शत्रुर्येनासौ। स्पृहयालुः वाञ्छाकरः लोकोऽस्मिन्नसौ। प्रपन्नाः शरणागताः सामन्ताः यमसौ। उदग्रमुत्कटं सत्त्वं बलं यस्यासौ। अधिष्ठित औदार्यरूपो गुणो येनासौ। असिपत्रेण

यथा वा—

"कण्ठदोलायितोद्दामनीलेन्दीवरदामकाः ।
हरिभीत्याश्रिताशेषकालियाहिकुला इव ॥"

शक्तिविभक्तिमयः—

"अथागादेकदा स्पष्टचतुराशामुखद्युतिः ।
तं ब्रह्मेव शरत्कालः प्रोत्फुल्लकमलासनः ॥

तत्र वाक्यं दशधा । एकाख्यातम्, अनेकाख्यातम्, आवृत्ताख्यातम्, एकाभिधेयाख्यातं, परिणताख्यातम्, अनुवृत्ताख्यातं, समुचिताख्यातम्, अध्याहृताख्यातं, कृदभिहिताख्यातम्, अनपेक्षिताख्यातमिति ॥

---

जिताऽवनिर्येनासौ । एवंभूतो नृपो राजा त्वदन्यो भवद्व्यतिरिक्तो नास्ति । अत्र सर्वत्र पदेषु बहुव्रीहिसमासेन विभक्तिलोपे समाससामर्थ्यात् तदर्थाववोधः ।

यथा वेति पुनरुदाहरति—कण्ठेति । कण्ठेषु दोलायितं नीलेन्दीवरस्य दाम येषां ते तथाभूताः । स्त्रियः पुरुषा वा राजन्ते । सादृश्यं दर्शयति—हरीति । हरेर्गरुडस्य या भीतिस्तया आश्रितमशेषं कालियस्याहेः कुलं यत्र ते हरिभीत्याश्रिताशेषकालियाहिकुलाः । त इव । अत्रोभयदलयोस्तत्पुरुषबहुव्रीहिसमासवलाद् विभक्तीनां लुप्तावपि वाक्यार्थावगतिः ।

उभयात्मानं दर्शयति—अथेति । अथ एकदा कदाचित् । स्पष्टा स्वच्छा चतुराशानां मुखद्युतिः एकस्मिन् पक्षे प्रारम्भकान्तिः, ब्रह्मपक्षे वक्त्रच्छविः यत्र । प्रोत्फुल्लानि कमलानि असनवृक्षाश्च यत्रेति शरत्पक्षे । ब्रह्मपक्षे प्रोत्फुल्लं कमलासनं यस्यासौ । शरत्कालः शरत्समयः ब्रह्मा वेधा इव तं पुरुषमगात् प्रापत् । अत्र स्पष्टचतुराशामुखद्युतिरिति । प्रोत्फुल्लकमलासन इत्यत्र च शाक्तोऽभिधाव्यापारः । तं ब्रह्मादिषु वैभक्तोऽभिधाव्यापारः ।

वाक्यविधां स्पष्टयति—तत्रेति । वाक्यं दशप्रकारम् । एकमाख्यातं तिङन्तस्मिन्निति एकाख्यातं एकतिङ् वाक्यम् । अनेकानि वहूनि (द्वे वा त्रीणि) आख्यातानि यत्र । आवृत्तं पुनः पुनरभ्यस्तं पुनः कृतमिति यावत् । आख्यातं यत्र । एकोऽभिधेयोऽर्थो यस्य तत् । एवंभूतमाख्यातं यत्र । परिणतम् । एकद्विवहुवचनान्तानां पदानां तथाभूतैः पदैः व्यस्तं समस्तं वा यः परिणामस्तं प्राप्तमाख्यातं यत्र । अनुवृत्तमनुगतम्, अर्थात् पूर्वस्थानादुत्तरस्थाने आकाङ्क्षापूरणार्थमन्वितमाख्यातं यत्र । समुचितं योग्यमाख्यातं यत्र । अध्याह्रियते ज्ञानायानुसन्धीयत इत्यध्याहृतमर्थादपूर्वोत्प्रेक्षितमाख्यातं यत्र । कृता कृदन्तेनाभिहितमाख्यातमत्र । अनपेक्षितमननुरुद्धम् । अपेक्षाशून्यमिति यावत् । इतिशब्दः भेदसमाप्तिसूचकः ।

तत्रैकाख्यातम्—

"जयत्येकपदाक्रान्तसमस्तभुवनत्रयः ।
द्वितीयपदविन्यासव्याकुलाभिनयः शिवः ॥

अनेकाख्यातम् । तच्च द्विधा सान्तरं निरन्तरम् ॥ तयोः प्रथमम्—

"देवासुरास्तमथ मन्थगिरां विरामे पद्मासनं जय जयेति बभाषिरे च ।
प्राग्भेजिरे च परितो बहु मेनिरे च स्वाग्रेसरं विदधिरे च ववन्दिरे च ॥"

द्वितीयम्—

"त्वं पासि हंसि तनुषे मनुषे बिभर्षि विभ्राजसे सजसि संहरसे विरौषि ।
आस्से निरस्यसि सरस्यसि रासि लासि सङ्क्रीडसे ब्रुडसि मेधसि मोदसे च ॥"

"आख्यातपरतन्त्रा वाक्यवृत्तिरतो यावदाख्यातमिह वाक्यानि" इत्याचार्याः । "एकाकारतया कारकग्रामस्यैकार्थतया च वचोवृत्तेरेकमेवेदं वा-

---

क्रमश एतान् भेदानुदाहरति—तत्रेति । जयतीति । एकेन पदेन आक्रान्तं स्वोपरिगत्या व्याप्तं समस्तं निखिलं भुवनत्रयं येन सः । द्वितीयस्य पदस्य विन्यासे व्याकुलोऽभिनयो हृद्गतभावव्यंजकशरीरचेष्टारूपानुकारो यस्यासौ शिवो जयति सर्वोत्कर्षेण वर्त्तते । अत्र जयतीत्येकमेवाख्यातं तिङ् वर्त्तते ।

अनेकाख्यातं च द्विधा । सान्तरं सुबन्तादिपदव्यवधानसहितम् । निन्तरं तद्रहितम् । तयोः सान्तरनिन्तरयोर्वाक्ययोर्मध्ये प्रथमं पूर्वमुदाहरतीति शेषः ।

देवा इति । अथ मन्थस्य गिरस्तासाम् । आलोडनजन्यशब्दानां विरामेऽवसाने सति देवासुराः सुरासुराः । तं पद्मासनं जय जयेति हे पद्मासन ? त्वं जय ? जय इतीत्थं बभाषिरे व्याजह्रुः । द्राक् झटिति तं परितो भेजिरे सिषेविरे । बहु बहुलं मेनिरे सम्मानं चक्रुस्तस्येति भावः । स्वाग्रेसरं निजाग्रगामिनं विदधिरे चक्रुः । ववन्दिरे प्रणेमुश्च ।

अत्र बभाषिरे+भेजिरे+इति क्रिययोर्मध्ये च+द्राक्+इति पदयोः स्थितिः । भेजिरे+मेनिरे+इतिक्रिययोर्मध्ये च+परितो+बहु+इति पदानां स्थितिः । विदधिरे+ववन्दिरे+इतिक्रिययोर्मध्ये चकारस्य स्थितिः । तस्मादिदं सान्तरमनेकाख्यातं ( अनेकृतिङ् ) वाक्यम् ।

निरन्तरं स्वभिन्नपदव्यवधानरहितमनेकतिङ् वाक्यं यथा-त्वं पासीति । हे प्रभो ? त्वं पासि । सुगमं सर्वम् । निरस्यसि क्षिपसि । ब्रुडसि मज्जसे । मेधसि संगच्छसे । सुगमा सङ्गतिः ।

एकतिङ् वाक्यमिति प्राचां वाक्यलक्षणानुसारेण तु त्वं पासीत्येकस्मिन्पद्येनेकानि

क्यम्" इति यायावरीयः ।

आवृत्ताख्यातम्—"जयत्यमलकौस्तुभस्तबकितांशपीठो हरि-
र्जयन्ति च मृगेक्षणाश्चलदपाङ्गदृष्टिक्रमाः ।
ततो जयति मल्लिका तदनु सर्वसंवेदना-
विनाशकरणक्षमो जयति पञ्चमस्य ध्वनिः ॥"

एकाभिधेयाख्यातम्—

"हृष्यति चूतेषु चिरं तुष्यति बकुलेषु मोदते मरुति ।
इह हि माधौ कलकूजिषु पिकेषु च प्रीयते रागी ॥"

परिणताख्यातम्—

"सोऽस्मिन्जयति जीवातुः पञ्चेषोः पञ्चमध्वनिः ।
ते च चैत्रे विचित्रैलाकक्कोलीकेलयोऽनिला: ॥"

अनुवृत्ताख्यातम्—

"चरन्ति चतुरम्भोधिवेलोद्यानेषु दन्तिनः ।

---

वाक्यानीत्यभिप्रायेणाशंकन्ते—आख्यातेति । आख्यातस्य परतन्त्रा वाक्यवृत्तिः वाक्यव्यवहारः तिङ्ङधीनः, अतो वाक्यवृत्तेस्तिङ्ङधीनत्वात् यावन्ति आख्यातानि तावन्ति वाक्यानि । इत्याचार्याः । स्वयमुत्तरति एकेति । कारकग्रामस्य त्वमिति कारकसमुदायस्य एकाकारतया त्वमिति एकस्वरूपतया वचोवृत्तेरेकार्थतया एकं पुरुषमुद्दिश्य उच्चारितत्वादिदं त्वं पासीति एकमेव वाक्यम् । इति यायावरीयः ।

आवृत्ताख्यातमुदाहरति–जयतीति । अमलो निर्मलो यः कौस्तुभो मणिः । तेन स्तबकितश्चित्रितोंसपीठः स्कन्धपीठो यस्यासौ हरिर्जयति । चलन्तश्चंचलाः अपाङ्गा यासु तासामेवं भूतानां दृष्टीनां क्रमा व्यवहारा यासां ता मृगेक्षणा मृगलोचनाजयन्ति ततो मल्लिका जयति । तदनु सर्वासां संवेदनानां यातनानां विनाशकरणे क्षमः समर्थः पञ्चमस्य पंचमस्वरस्य ध्वनि जंयति । अत्र प्रथमपाद उक्तस्य जयतिपदस्योत्तरवाक्येषु आवृत्तिः ।

एकार्थतिङमुदाहरति—हृष्यीति । अन्वयः सरलः । अत्र हृष्यति तुष्यति मोदते प्रीयते इत्याख्यातानां प्रसन्नो भवति इत्येकमेवार्थः ।

परिणताख्यातमुदाहरति–सोऽस्मिन्निति । अस्मिन् चैत्रे (वसन्ततौं) पंचेषोः कामस्य जीवातुः प्राणभूतः स पञ्चमो ध्वनिर्जयति । ते प्रसिद्धा विचित्रासु एलासु कक्कोलीषु केलयः क्रीडा येषां तेऽनिलाः वायवो जयन्ति । अत्र पूर्वदलोपात्तस्य जयतीत्येकवचनान्तस्य वहुवचनान्तेन विपरिणामः ।

अनुवृत्ताख्यातमुदाहरति—चरन्तीति । चतुर्णामम्भोधीनां वेलाः । तासु

चक्रवालाद्रिकुञ्जेषु कुन्दभासो गुणाश्च ते ॥"

समुचिताख्यातम्—

"परिग्रहभराक्रान्तं दौर्गत्यगतिचोदितं ।
मनो गन्त्रीव कुपथे चीत्करोति च याति च ॥"

यथाच—"स देवः सा दंष्ट्रा किटिकृतविलासस्मितसिता
द्वयं दिश्यात्तुभ्यं मुदमिदमुदारं जयति च ।
उदञ्चद्भिर्भूयस्तरलितनिवेशा वसुमती
यदग्रे यच्छ्वासैर्गिरिगुडकलीलामुदवहत् ॥"

अध्याहृताख्यातम्—

"दोर्दण्डताण्डवभ्रष्टमुडुखण्डं बिभर्ति यः ।
व्यस्तपुष्पाञ्जलिपदे चन्द्रचूडः श्रिये स वः ॥"

---

यान्युद्यानानि तेषु दन्तिनो गजाः चरन्ति । कुन्दवद्भासन्त इति कुन्दभासो माघ्यकुसुमवदुज्वला ते गुणाश्च चक्रवालाद्रेः कुञ्जेषु लताच्छन्नदेशेषु चरन्ति । अत्र पूर्वार्धोपात्तस्य चरन्तीत्याख्यातस्योत्तरार्धऽनुवृत्तिः ।

समुचितं तिङ ( आख्यात ) मुदाहरति+परिग्रहेति । परिग्रहस्य स्वीकृतद्रव्यस्य भरेण भारेणाक्रान्ता, पक्षे परिजनपत्न्यादीनां भरेणाक्रान्तम् । दौर्गत्येन दारिद्र्येण या गतिर्दशा तया चोदितं प्रेरितम् । पक्षे दुर्गतिरेव दौर्गत्यं दुःस्थानँस्तस्मिन्या गतिर्गमनम् । तस्यै चोदिता प्रेरिता । गन्त्रीव शटीव मनः कुपथे कुमार्गे गर्तं सच्चीत्करोति ( चीत् चीत् शब्दं करोति ) दुखमनुभवतीत्यर्थः तत्रैव याति च । अत्र यथा गन्त्री गमनसमये चीत्कारं कुर्वती गच्छति तथैव मनसोप्यवस्था इत्यतः मनोगन्त्र्योः साम्येन चीत्कारस्य गमनस्य च निर्देशो नितरां समुचितः ।

तत्रैव पुनरुदाहाति—स देव इति । स पुराणादिप्रसिद्धो देवो वराहः । तेनैव भगवता किटिना वराहेण कृतं यत् विलासस्मितं तेन सिता धवला सा दंष्ट्रा इदमेतद् देवदंष्ट्र्यो र्द्वयं तुभ्यं मुदमानन्दं दिश्यात् दद्यात् । तथा उदारमुत्कृष्टं यथा स्यात्तथा जयति च । यस्य वराहस्य श्वासाः यच्छ्वासास्तैः । उदञ्चद्भिरुद्गतै र्यच्छ्वासै वराहभगवतश्छ्वासैः । तरलितश्चञ्चलो निवेशः स्थितिर्यस्या सा वसुमती पृथ्वी । यस्या दंष्ट्राया अग्रे यदग्रे गिरिगुडकलीलामुदवहत् । अत्रापि लीलाया उद्वहनीयत्वेन "उदवहत्" इति समुचितैव क्रिया निर्दिष्टा ।

अध्याहृताख्यातमुदाहरति–दोर्दण्डेति। यः । दोर्दण्डाभ्यां भुजदण्डाभ्यां यत्ताण्डवं तस्मिन् भ्रष्टम् । उडुखण्डं चन्द्रखण्डम् । व्यस्तं विपरीतं यत्पुष्पाञ्जलिपदं पुष्पाञ्जलि·

कृदभिहिताख्यातम्—

"अभिमुखे मयि संहृतमीक्षितं हसितमन्यनिमित्तकथोदयं ।
विनयबाधितवृत्तिरतस्तया न विवृतो मदनो न च संवृतः ॥"

अनपेक्षिताख्यातम्—

"कियन्ममात्रं जलं विप्र ? जानुदघ्नं नराधिप ।
तथापीयमवस्था ते न सर्वत्र भवादृशाः ॥"

गुणवदलङ्कृतञ्च वाक्यमेव काव्यम् ॥ "असत्यार्थाभिधायित्वान्नोपदे-

---

स्थानम् तस्मिन् । बिभर्त्ति दधाति । स चन्द्रचूडः शिवः वो युष्माकं श्रियेऽस्तु । अत्र अस्तुक्रियामभ्याहृत्य समन्वयः कृतोऽतः इदं वाक्यमभ्याहृताख्यातं वर्त्तते ।

कृदभिहिताख्यातमुदाहरति—अभिमुख इति । मयि अभिमुखे सति ईक्षितं संहृतं परावर्तितम् । अन्यनिमित्तेन कारणान्तरेण कथाया उदयो यस्मिन् एवंभूतं हसितम् । अथ विनयेन बाधिता वृत्तिरस्ति । अतः कारणात्तया मदनः कामो न विवृतः प्रकाशीकृतः । न च संवृत्तः अप्रकटितः । अत्र भावार्थकेन कृतसंज्ञकप्रत्ययेन क्तेनैव क्रियाया निर्वाहः ।

अनपेक्षिताख्यातमुदाहरति । कियदिति । हे विप्र ! ब्राह्मण ! कियन्मात्रं कियत्परिमितं जलम् । उ० । हे नराधिप ! जानुदघ्नं जानुप्रमाणकम् । परिमाणे मात्रच् दघ्नच्प्रत्ययौ । प्र० तथापि ते इयमीदृशी अवस्था दशा । उ० सर्वत्र भवादृशा न सन्ति । अत्र वर्त्ततेऽस्ति सन्तिप्रभृतीनां क्रियाणामपेक्षा नास्ति' आभिर्विनापि समन्वयस्य सत्त्वात् ।

एवं वाक्यलक्षणं निर्दिश्य । तदुपयोगं दर्शयति । गुणवदिति । गुणाः सन्त्यस्मिन्निति गुणवत् गुणयुक्तं अलंकारेण युक्तमलंकृतम् । चकारान्निर्दोषं वाक्यमेव काव्यम् ।

बहूपकारकत्वात्काव्यलक्षणमालोच्यते । तत्र लक्ष्यते ज्ञायत इतरव्यावृत्ततया लक्ष्यपदार्थोऽनेनेति लक्षणम् । तच्च—

सामान्यं च विशेषश्च लक्षणस्य द्वयीगतिः ।
सामान्यं सर्वविषयं शेषः क्वापि प्रवर्त्तते ॥

किन्तु निर्विशेषं न सामान्यं भवेच्छशविषाणवत् । तथाचात्र केषांचिन्मते कविकौशलकल्पितकमनीयताशाली शब्द एव काव्यम्, केषाञ्चन तादृशौ उभौ तदिति सामान्यम् । विशेषलक्षणञ्च—

१ शरीरं तावदिष्टार्थ व्यवच्छिन्ना पदावलिः । इति काव्यादर्शे दण्डी
२ एवमेव काव्यदीपिकायां कान्तिचन्द्रश्च ।

३ काव्यं रसादिमद् वाक्यं श्रुतं सुखविशेषकृत्
इति अलंकारशेखर शौद्धोदनिः।

४ वृत्तिकृत केशवमिश्रश्च।

५ निर्दोषं गुणवत्काव्यमलंकारैरलंकृतम्।
रसात्मकं कविः कुर्वन् कीर्ति प्रीतिं च विन्दति
इति सरस्वती कण्ठाभरणे भोजः।

६ वाक्यं रसात्मकं काव्यम्—इति सा० द. विश्वनाथः।

७ निर्दोषालक्षणवती सरीतिर्गुणगुम्फिता।
सालंकाररसानेकवृत्तिर्वाक् काव्यनामभाक्।
इति चन्द्रालोके जयदेवः।

८ रमणीयार्थप्रतिपादकः शब्दः काव्यम्। इति रसग० जगन्नाथपण्डितराजः।

इत्येवं शब्दस्य काव्यत्वं वदतां मतानि प्रायः अष्टौ।

शब्दार्थौ सहितौ काव्यम्—इति चिरन्तना अलंकारप्रजापतयः
१ भामहः २ उद्भटः ३ रुद्रटः ४ आनन्दवर्द्धनः।
काव्यशब्दोयं गुणालंकारसंस्कृतयोः शब्दार्थयोर्वर्त्तते॥
इति काव्यालंकारे ५ वामनः।
शब्दार्थौ सहितौ वक्रकविव्यापारशालिनि।
बन्धे व्यवस्थितौ काव्यं तद्विदाह्लादकारिणि॥
इति वक्रोक्तिजीविते ६ कुन्तकः।

तददोषौ शब्दार्थौ सगुणावनलंकृती पुनः क्वापि
इति मम्मटः ७। एवमेव ८ हेमचन्द्रः काव्यानुशासने
साधुशब्दार्थसन्दर्भं गुणालंकारभूषितम्।
स्फुटरीतिरसोपेतं काव्यं कुर्वीत कीर्तये॥
इति ९ वाग्भटः। एवमेव १० वाभटः।
"शब्दार्थौ वपुरस्य, शब्दार्थवपुस्तावत्काव्यम्"।
इत्येकावल्यां विद्या(१)धरः ११

---

(१) शाणोत्कीर्णमिवोज्वलद्युति पदं वस्त्वोर्धनारीश्वर—
श्लाघालङ्घनजाङ्घिको दिवि लतोद्भिन्नेवचार्थोद्गतिः॥
किंचित्पीडितचन्द्रमण्डलगलत्पीयूषहृद्यो रसः।
तत् किंचित् कविकर्म मर्म न पुनर्वाग्डिण्डिमाडम्बरः॥

एतदस्य मुख्यत्वेन निर्दिष्टं लक्षणम्।

गुणालंकार सहितौ शब्दार्थौं दोषवर्जितौ ।
गद्यपद्योभयमयं काव्यं काव्यविदो विदुः ॥
इति प्रतापरुद्रीये विद्यानाथः १२

तत्र निर्दोषशब्दार्थगुणवत्त्वे सति स्फुटम् ।
गद्यादिबन्धरूपत्वं काव्यसामान्यलक्षणम् ॥
इति साहित्यसारे अच्युतरायः १३

सगुणालंकृती काव्यं पदार्थौ दोषवर्जितौ ।
इति साहित्यरत्नाकरे धर्मसूरिः १४

काव्यं विशिष्टशब्दार्थसाहित्यसदलंकृति ।
इति कविकण्ठाभरणे क्षेमेन्द्रः । १५

गुणालंकार संयुक्तौ शब्दार्थौ रसभावगौ
नित्यदोषविनिर्मुक्तौ काव्यमित्यभिधीयते ॥
इति अलंकारचन्द्रिकायां न्यायवागीशः १६

इत्येवं शब्दार्थयोः काव्यत्वं वदतां मतानि प्रायः षोडश ।

तत्र प्रथमेषामसौ सारः कवयते ( वर्णयति ) इति कविः तस्य कर्म काव्यम् । तच्च कर्म काव्यशब्दस्य वर्णनार्थकशब्दप्रकृतिकत्वरूपसामर्थ्यात् वर्णनात्मकमिति समाख्यावलात्, काव्यमुच्चैः पठयते, काव्यादर्थोवगम्यते, काव्यं श्रुतमर्थो न ज्ञातः इत्यादिविश्वजनीनव्यवहारतश्च योजनाश्रयस्य शब्दविशेषस्यैव काव्यत्वम् ।

उभयवादिनामयं भावः । काव्यं हि वक्तुः हार्दभावप्रतिबिम्बरूपम् । यतोहि हृद्गता एव भावा रमणीयतया काव्येषूपनिबध्यन्ते । दृश्यते चैतत्, इमे भावा अध्यक्षं सम्प्रतिपन्ना अपि नैवं वैचित्र्यमाधातुं प्रयतन्ते यथा त एव सुकविना वाग्विषयतां प्राप्ताः । उक्तञ्च ।

कविशक्त्यर्पिता भावास्तन्मयीभावयुक्तितः ।
यथा स्फुरन्त्यमी काव्यान्न तथाध्यक्षतः किल ॥ इति ।

अत एव तन्नास्ति काव्यम् यत्रान्ततो विभावादिकं न भवेत् । एवं च हार्दभावानां विभावादीनां वर्णना एव काव्यम् । यदुक्तम्

अनुभावविभावानां वर्णना काव्यमुच्यते ॥ इति ।

अतः समाख्यया लब्धस्य वर्णनात्मकस्य कविकर्मणः सङ्गतिरप्यत्रैवानुकूला शब्दस्तु तदुपायभूतः । इयं च वस्तुस्थितिः । यत् प्रश्नोर्थविषयः । उत्तरं च शब्देन । यद्विषया च स्मृतिः "प्रत्यर्थं हि शब्दाभिभनिवेशः" । दृढीकृता च "शब्दार्थयोर्नित्योऽभिसम्बन्धः" इति वदद्भिराचार्यैः । कविप्रौढोक्तितन्निबद्धप्रौढोक्तिभ्यां कल्पितत्वस्य चार्थ एव सद्भावात् । काव्यमुच्चैः पठयत इत्यादिव्यवहारस्तु अर्थस्यापि

ष्टव्यं काव्यम्" इत्येके ॥ यथा—

"स्तेमः स्तोकोऽपि नाङ्गे श्वसितमविकलं चक्षुषां सैव वृत्तिः
मध्येक्षीराब्धि मग्नाः स्फुटमथ च वयं कोऽयमीदृक्प्रकारः ।
इत्थं दिग्भित्तिरोधक्षतविसरतया मांसलैस्त्वद्यशोभिः
स्तोकावस्थानदुःस्थैस्त्रिजगति धवले विस्मयन्ते मृगाक्ष्यः ॥"

यथा च—

"भ्रश्यद्भूभुग्नभोगीश्वरफणपवनाध्मातपातालतालुः
त्रुट्यन्नानागिरीन्द्रावलिशिखरखरास्फाललोलाम्बुराशिः ।

---

शब्दद्वाराप्रतीतिविषयत्वान्नानुपपन्नः । काव्यं वुद्धमित्यादिव्यवहारश्च अर्थस्य काव्यत्वसाधकः । अर्थचित्रस्य अभ्यहितत्वं चास्ति । तस्मादुभौ काव्यम् । तत्र शब्दयोजनावैचित्र्ये शब्दः काव्यम् । अर्थवैचित्र्येऽर्थः । उभयवैचित्र्ये द्वयमपि । न तु काव्यत्वं व्यासज्यवृत्ति।योजनारूपस्य अलंकारादिवैशिष्टयरूपस्य वा व्यासज्यवृत्तित्वायोगात्। "एको न द्वौ" इति व्यवहारस्येव श्लोकवाक्यं न काव्यमिति व्यवहारस्याप्यापत्तेः । अर्थाऽज्ञानेऽपि शब्दावलीमात्रे काव्यत्वानुभवानुपपत्तेश्च । व्यासज्यवृत्तिधर्मप्रकारकनिश्चयस्य यावदाश्रयविषयकत्वनियमात् । उभयगतत्वे काव्यद्वयमिति चेन्न, विजातीयैकचमत्कृतिजनकत्वेन एकत्वस्यैव व्यवहारात् । सहकारित्वं तु उभयत्रापि उभयोः ।

अथ काव्यलक्षणकथनोत्तरं तस्योपदेश्यत्वानुपदेश्यत्वे चिन्तयति—असत्येति । एके प्रांच आचार्याः कथयन्ति यत् काव्यमसत्यार्थाभिधायि । तस्मात्तदुपदेशानर्हम् । यथोदाहरणमसत्यस्य ।

स्तेम इति । राजानं प्रति चाटुकारोक्तिः । दिश एव भित्तयस्ताभिर्योऽवरोधः । तेन या क्षतविसरता तया । स्तोकमल्पं यदवस्थानं स्थितिकरणं तेन दुस्थैः स्थातुमशक्तैः मांसलैः पीनैस्त्वद्यशोभिः। त्रिजगति त्रैलोक्ये धवले जाते सति मृगाक्ष्य इत्थं विस्मयन्ते

विस्मयप्रकारं दर्शयति । स्तेम इति । अङ्गेऽवयवे स्तोकोऽपि अल्पोपि स्तेम आर्द्रीभावो नास्ति । श्वसितं श्वासवायुरविकलं निरन्तरं प्रवहति । चक्षुषां वृत्तिः प्रेक्षणव्यापारोपि सैव तथैवेत्यर्थः । अथच वयं मध्येक्षीराब्धि मग्नाः इति स्फुटम् । किन्तु ईदृगयं कः प्रकारः । अर्थात् समुद्रमग्नानामंगेषु आर्द्रत्वम्, श्वासावरोधः, दृष्टिप्रतिघातश्च भवति किन्तु वैचित्र्यमेव यत्तव यशःसमुद्रे मग्नानां नैतत्सर्वं जायतेऽतो लोकोत्तरं ते यशः । अत्र यशसा त्रिलोकीधवलीकरणत्वनिबन्धनम्, ततश्च मृगाक्षीणां विस्मयकर्तृत्वनिबन्धनं सर्वमसत्यभूतम् ।

यथा च—भ्रश्यदिति । कल्यः सज्जः । "कल्यौ सज्जनिरामयौ" इत्यमरः । उद्योगो यस्य । उद्योगे सज्जत्वं बद्धसन्नाहादित्वम् । यस्य भगवतः । भ्रश्यन्ती नमन्ती या भू-

उद्यन्नीरन्ध्रधूलीविधुरसुरवधूमुच्यमानोपशल्यः
कल्योद्योगस्य यस्य त्रिभुवनदमनः सैन्यसम्मर्द आसीत् ॥"

आहुश्च—"दृष्टं किञ्चिददृष्टमन्यदपरं वाचालवार्त्तार्पितं
भूयस्तुण्डपुराणतः परिणतं किञ्चिच्च शास्त्रश्रुतं ।
सूक्त्या वस्तु यदत्र चित्ररचनं तत्काव्यमव्याहतं
रत्नस्येव न तस्य जन्म जलधेर्नो रोहणाद्वा गिरेः ॥"

"न" इति यायावरीयः—
"नासत्यं नाम किञ्चन काव्ये यस्तु स्तुत्येष्वर्थवादः ।
स न परं कविकर्मणि श्रुतौ च शास्त्रे च लोके च ॥"

तत्र श्रौतः—"पुष्पिण्यौ चरतो जङ्घे भूष्णुरात्मा फलेग्रहिः ।
शेरेऽस्य सर्वे पाप्मानः श्रमेण प्रपथे हताः ॥"

---

स्तया भुग्नो जीर्णो यो भोगीश्वरस्तस्य फणपवनेन आध्मातः पाताल एव तालुयंत्र स । त्रुटयन्ती विशीर्णा या नानागिरीन्द्राणामावलिः तस्याः शिखराणां खरः कठिनो य आस्फालः पातः । तेन लोलश्चञ्चलोऽम्बुराशिः समुद्रो यत्र स । उद्यन्ती उदीयमाना या नीरन्ध्रधूली तया विधुरा दुःखिता याः सुरवध्वः । ताभिर्मुच्यमानमुपशल्यं मुपकण्ठम् । उपशल्यमुपकण्ठं स्यादिति त्रिकाण्ड शेषः । यत्र स । त्रिभुवनं दमयतीति त्रिभुवनदमनः सैन्यस्य सम्मर्दः सेनासंघर्षं आसीत् । अत्र सैन्यसम्मर्देन आध्मातपातलितालुत्व-लोलाम्बुराशित्व-मुच्यमानोपशल्यत्वभवनकथनमसत्यम् ।

असत्यार्थकाव्यविषये आहुश्च । दृष्टमिति । अत्र काव्ये किंचिद् वस्तु दृष्टं स्वचक्षुषा प्रत्यक्षीकृतम् । अन्यद् अदृष्टं स्वकल्पनयोत्प्रेक्षितम् । अपरं वाचालवार्त्तार्पितम् कविनिबद्धवक्तृप्रौढोक्तिकल्पनाप्रसूतम् । भूयः पुनः तुण्डपुराणतः परिणतम् । किंचिद् शास्त्रश्रुतमागमदृष्टम् । इतरत सूक्त्या चित्ररचनं विचित्रकल्पनं जातम । तत्काव्यमव्याहतम् । तस्य काव्यस्यजन्म रत्नस्येव न जलधेः नो वा रोहणाद्रिेरस्ति ।

एवमसत्यार्थाभिधायित्वान्नोपदेष्टव्यमिति । उक्तं प्रतिक्षिपति-नेति । कैश्चिद्यदुक्तं पूर्वं तन्न । यतः-नासत्यमिति । काव्ये किञ्चन असत्यं नाम नास्ति । यस्तु स्तुत्येषु अर्थवादः । सोऽर्थवादः, न केवलं काव्य एव । अपि तु श्रुतौ वेदे । शास्त्रे न्यायवैशेषिकमीमांसादिषु, लोकेऽपि वर्त्तते ।

तत्र श्रौतोऽर्थवादः परिदर्श्यते । पूर्वप्रतिज्ञातहानेन वरुणकृतोदररोगवन्तं पितरं हरिश्चन्द्रं श्रुत्वा वनाद् द्रष्टुमागच्छन्तं रोहितमिन्द्रः पुरुषरूपेण पर्यत्यावोचत्, सर्वत्र पर्यटतो मनुष्यस्य श्रीर्भवति गृहेषु केवलं वसन् तुच्छो भवति । अतस्त्वं चरैवेति

शास्त्रीयः—"आपः पवित्रं प्रथमं पृथिव्यामपां पवित्रं परमं च मन्त्राः।
तेषां च सामर्ग्यजुषां पवित्रं महर्षयो व्याकरणं निराहुः॥"

किञ्च—"यस्तु प्रयुङ्क्ते कुशलो विशेषे शब्दान्यथावद्व्यवहारकाले।
सोऽनन्तमाप्नोति जयं परत्र वाग्योगविद्दुष्यति चापशब्दैः।

---

वाक्यं श्रुत्वा ब्राह्मणोयमरण्ये चरैवेत्येवं मामुक्तवानिति मनसि तद्वाक्ये महान्त मादरं कृत्वा पुनरप्येकमब्दमरण्ये चरित्वा पश्चात्पितरं द्रष्टुं ग्राममागच्छन्तं तं पुनरपीन्द्रो ब्राह्मणरूपेणाऽऽगत्यावोचत् पुष्पिण्याविति।

चरतः पर्यटनं कुर्वतो मनुष्यस्य जङ्घे पुष्पिण्यौ भवतः। यथा पुष्पयुक्ता वृक्षलतादिकाः सुगन्धोपेताः सेव्याश्च भवन्ति। एवं चरतो मनुष्यस्य जङ्घे श्रमजयेन सेव्ये ( दृढे) भवतः। तथैवात्मा मध्यदेहः भूष्णुर्वर्धिष्णुः फलेग्रहिरारोग्यरूपफलयुक्तो भवति। यथा वीजादिदीपनादि पाटवेनवर्धमानो वृक्षःकालेन फलानि गृह्णाति एवं चरतः पुरुषस्य आत्मा (मध्यदेहः) आरोग्यरूपं फलं गृह्णाति। चरतः पुरुषस्य सर्वे पाप्मानः सर्वपापानि प्रपथे प्रकृष्टतीर्थक्षेत्रादिमार्गश्रमेण तत्तद्देवतादिदर्शने तीर्थयात्रादिप्रयासेन हता विनाशिताः सन्तः शेरे शेरते शयाना इव भवन्ति। यथा शयानाः पुरुषाःस्वकार्यं कृषिवाणिज्यादिकं कर्तुमशक्ता एवं पुण्येन विनष्टाः पाप्मानो नरकं दातुमसमर्था इत्यर्थः। तस्मात्सर्वथाऽरण्ये चर, न पितुर्गृहेऽवतिष्ठस्व।

शास्त्रीयोर्थवादो यथा—आप इति। पृथिव्यां प्रथमं पवित्रं वस्तु आपो जलानि मताः। तासामुत्तरं च परमं पवित्रं वस्तु मन्त्राः। मन्त्राणां मध्येपि सामर्ग्यजुषां मन्त्राः पवित्रा मताः। ततोपि पवित्रं व्याकरणमिति महर्षयः निराहुः, तेषां वैदिकशब्दानामपि संस्कारकत्वात्। अत्र व्याकरणस्य वेदापेक्षया पवित्रत्वकथनं न भूतार्थवादः। किन्तु अत्र शास्त्रे जनानां रुचयः समुद्यन्तु इति तात्पर्यतया फलार्थवादः। तथा च फलश्रुतिः।

यद्यपि वहु नाधीषे तथापि पठ पुत्र? व्याकरणम्।
स्वजनः श्वजनो माभूत् सकलं शकलं सकृत् सकृत्।

अपरमपि शास्त्रीयं स्तुतिनिष्ठार्थवादं दर्शयति—यस्तु प्रयुंक्त इति। इदं व्याकरणाऽध्ययनस्यानुषङ्गिकप्रयोजनेष्वन्यतमाभ्युदयहेतुरूपप्रयोजनभाष्यम्। यस्तु। तुशब्दोऽत्र हेरर्थे। योहि कुशलोऽधीतव्याकरणः लक्षणस्मरणपूर्वकलक्ष्यप्रयोक्तेति भावः। व्यवहारकाले शब्दोच्चारणसमये विशेषे वाच्यलक्ष्यव्यङ्ग्यरूपार्थविशेषे शब्दान् यथावत् सनिष्ठीवादिदोषरहितम् प्रयुंक्ते उच्चारयति। स वाग्योगवित् वाचो योगः प्रकृतिप्रत्ययविभागेनार्थविशेषपरत्वम्। तं वेत्तीति तथा। परत्र परलोकेऽनन्तमतिशयितं जयमुत्कर्षमाप्नोति, तथा अपशब्दैर्दुष्यति दोषमेति।

"कः ?। वाग्योगविदेव। कुत एतत् ?। यो हि शब्दाञ्जानात्यपशब्दानप्यसौ जानाति। यथैव हि शब्दज्ञाने धर्म, एवमपशब्दज्ञानेऽप्यधर्मः। अथवा भूयानधर्मः प्राप्नोति। भूयांसो ह्यपशब्दा अल्पीयांसः शब्दाः। एकैकस्य हि शब्दस्य बहवोऽपभ्रंशाः। तद्यथा। गौरित्यस्य शब्दस्य गावी गोणी गोता गोपोतलिकेत्येवमादयोऽपभ्रंशाः। अथ योऽवाग्योगवित् अज्ञानं तस्य शर-

---

पृच्छति-क इति। कोऽपशब्दैर्दुष्यति किं? यथावच्छब्दप्रयोक्ता वाग्योगविद्, अन्यो ? वा। प्रष्टा एव परमतमाशंक्याह-वाग्योगविदेव। आक्षिपति कुत-इति। वाग्योगविदेव दुष्यति इति कथं सगच्छते। आक्षेपं निरस्यति-योहीति। यो हि वित् शब्दान् जानाति, असौ अपशब्दान् अपि जानाति। एवं चापशब्दवेत्तृत्वात्स दुष्यति।

ननु एकः शब्दः सुप्रयुक्तः सम्यग् ज्ञात इत्यादिश्रुतिभिः सुशब्दवेत्तृत्वस्य यथा धर्मप्रयोजकतोक्ता न तथा श्रुत्यादिभिरपशब्दवेत्तृत्वस्याधर्मप्रयोजकतोक्ताऽतो न दुष्यति सेत्यत आह-यथेति। यथा शब्दज्ञाने साधुशब्दवेत्तृत्वे धर्मः तथा अपशब्दज्ञानेऽसाधुशब्दवेत्तृत्वेऽधर्मः। अर्थात् धर्मप्रयोकसाधुशब्दज्ञानविरोधितया अपशब्दज्ञानमधर्मप्रयोजकम्, यद्यद्विरोधि तत्तद्विरोधिफलजनकं यथा श्लेष्मिणः श्लेष्मनाशकद्रव्यसेवेति अनुमानमेव प्रमाणम्। एवं च शास्त्रस्याधर्महेतुतया तत्र प्रवृत्तिर्न स्यादिति नेदं वचो व्याकरणाध्ययनानुष्ठापकत्वं स्यादिति तात्पर्यम्। ननु भवत्वधर्मोपि तथापि धर्माधिक्यायाध्येयं व्याकरणमत आह-अथवेति। अपशब्दैर्भूयानधर्मः प्राप्नोति भवति। भूयोऽधर्मभवने हेतुमाह—भूयांस इति। यत भूयांसोऽसाधुशब्दाः, अल्पीयांसः शब्दाः।

ननु इदानीन्तनव्यवहाराय संकेतितापशब्दानां कथं साधुशब्देभ्यो भूयस्त्वमित्युपपादयति—एकैकस्येति। अर्थात् देशकालपुरुषतदीयशक्तिवैकल्यानां बाहुल्यादेकैकस्यापि शब्दस्य बहवोऽपभ्रंशाः किमुतानेकेषां शब्दानाम्। तद्यथेति दर्शयति। गौरित्यस्य (इति शब्दोत्र स्वरूपार्थकः) शब्दस्य गावी गोणी गोता गोपोतलिकेत्यादयो बहवोऽसाधुशब्दाः। एवं च एकस्य साधुशब्दस्य बह्वपशब्दव्याप्तत्वाद् भूयानधर्म अल्पीयान् धर्मः। तस्माच्च व्याकरणशास्त्रविज्ञानमनुपादेयमेव।

नन्वेवं वाग्योगविदोऽधर्मबाहुल्यात् व्याकरणशास्त्रविज्ञानस्यानुपादेयत्वम्। तथाचास्य वचनस्य व्याकरणाध्ययनाननुष्ठापकतापत्तौ दुष्यतीत्यत्र सामर्थ्यादवाग्योविदेव कर्त्तास्त्वत आह—अथेति। अथेति पक्षान्तरमवतार्यते। योहि अवाग्योगविद् वाचो योगं प्रकृतिप्रत्ययविभागेन अर्थविशेषपरत्वं न जानाति। सोपशब्दैर्दुष्यति। विद एव सर्वत्राधिकारदर्शनादुक्तमपवदति अज्ञानमिति। तस्याविदुषोऽज्ञानं निषेधशास्त्राज्ञानमेव शरणं पापाद्रक्षकम्। यथाज्ञानवतां तिरश्चां ब्रह्महत्यादिदोषाभावः तथाऽ

रणम् । विषम उपन्यासः । नात्यन्तायाज्ञानं शरणं भवितुमर्हति । यो ह्यजानन्वै ब्राह्मणं हन्यात्सुरां वा पिबेत्सोऽपि मन्ये पतितः स्यात् । एवं तर्हि सोऽनन्तमाप्नोति जयं परत्र वाग्योगविद्दुष्यति चापशब्दैः । कः ? । अवाग्योगविदेव । अथ यो वाग्योगवित् विज्ञानं तस्य शरणम् । क्व पुनरिदं पठितम् ? । भ्राजा नाम श्लोकाः । किञ्च भोः श्लोका अपि प्रमाणम् ? । किञ्चातः ? । यदि प्रमाणमयमपि श्लोकः प्रमाणं भवितुमर्हति ।"

'यदुदुम्बरवर्णानां घटीनां मण्डलं महत् ।

---

विदुषामपीतिभावः ।

बाधकमुपन्यस्यति--विषम इति । विषमोऽनवस्थाकरः उपन्यासः कथनं दृष्टान्तो वा । यतोऽवाग्योगविदो नाज्ञानमात्रेण निस्तारः, किन्तु निषेधाधिक्यमपि इत्यत आह—नात्यन्तायेति । अत्यन्तायेति अत्यन्तमित्यर्थेऽव्ययम् । अत्यन्तमज्ञानम् । अथवा पापायेति अध्याहार्यम् । अत्यन्ताय पापायाज्ञानं शास्त्राज्ञानं न शरणं भवितुमर्हति । अयं भावः । तिरश्चामत्यन्तायोग्यत्वादस्त्वज्ञानं शरणम् । मनुष्याणां तु विधिनिषेधयोर्योग्यत्वात्तैर्निषिद्धानुष्ठानवर्जनार्थमवश्यं शास्त्रपरिज्ञानं कर्त्तव्यम् । अतोऽवाग्योगविदो महाननर्थः । उक्तार्थे हेतुमाह—यो हीति । यो हि पुरुषः निषेध शास्त्रमजानन्नेव ब्राह्मणं हन्यात् सुरां वा पिबेत् सोपि मन्ये (मन्य इति पदम् निश्चयार्थकम्) पतितः स्यात् ।

अथ सिद्धान्ती यथार्थोत्तरं दातुं पुनरनुवदति--एवमिति । एवमवाग्योगविदोऽन्यथा निर्वाहाभावेन दोषवत्वस्य सुवचत्वे, तर्हि । सोनन्तेति । सन्निधेरपेक्षया योग्यताया बलीयस्त्वाद् दुष्यतीत्यत्र अवाग्योगविदेव कर्त्तेति भावः । नन्वेवमवाग्योगविदो दोषकर्तृत्वाङ्गीकारे वाग्योगविदोपि अपशब्दज्ञानादधर्मः स्यादत्त आह-- अथेति । योहि वाग्योगवित्, तस्य विज्ञानं विधिनिषेधात्मकशास्त्रादिज्ञानपूर्वक प्रयोगः शरणम् । इदमत्रत्यं तत्वम् । वाग्योगवित शब्दानपशब्दानुभयं जानाति । अतः शब्दान् प्रयुङ्क्ते नापशब्दानिति ज्ञानपूर्वकशब्दप्रयोगादभ्युदयभाग्भवति । एवं च नापशब्दज्ञानमधर्मसाधनं किंतु तत्प्रयोग एवेति न दोषः ।

श्लोकस्यापरिज्ञानात्पृच्छति-क्व पुनरिति । कस्मिन् पुस्तक इदं वाक्यं पठितम् । समाधत्ते-भ्राजा- इति । भ्राजानाम कात्यायनप्रणीताः श्लोकाः । आप्तोक्तत्वापरिज्ञाना दाह-किंचेति । चकारः प्रश्नसमुच्चयार्थकः। भोः। किं श्लोका अपि धर्माधर्मयोः प्रमाणम् । अभिप्रायस्फुटीकरणार्थं पृच्छति-किंचेति।। अतः किं, श्लोकाः प्रमाणमिति प्रश्नात् किं विवक्षितं कोऽभिप्रायः । अभिप्रायं स्फुटीकरोति—यदीति । यदि श्लोकाः पद्यान्यपि प्रमाणम् । तर्हि अयमपि अस्माभिरुपस्थापितश्लोकः प्रमाणं भवितुमर्हति।

यदुदुम्बरेति । अयं श्लोकः सौत्रमाणियागे सुरापानस्य दुष्टत्वमुद्भावयति ।

पीतं न गमयेत्स्वग किं तत्क्रतुगतं नयेत् ॥' इति

"प्रमत्तगीत एष तत्रभवतो यस्त्वप्रमत्तगीतस्तत्प्रमाणमेव' इति गोनर्दीयः।

लौकिकः—"गुणानुरागमिश्रेण यशसा तव सर्पता।

दिग्वधूनां मुखे जातमकस्मादर्द्धकुङ्कुमम् ॥"

"असदुपदेशकत्वात्तर्हि नोपदेष्टव्यं काव्यम्" इत्यपरे। यथा एवं—

"वयं बाल्ये डिम्भाँस्तरुणिमनि यूनः परिणता-

वपीच्छामो वृद्धान्परिणयविधेस्तु स्थितिरियं।

---

यदि उदुम्वरवर्णानां ताम्रवर्णानां घटीनां कलशीनां महद् विशालं मण्डलं लक्षणया तत्स्थं सुराद्रव्यम्। स्वरूपतो घटीमण्डलस्य पानक्रियाकर्मत्वायोगात्। पीतं सत् पातारं स्वर्गं न गमयेत्, तर्त्ताहि सौत्रामणिग्रहपात्रस्थं स्वल्पं तत् सुराद्रव्यं पीतं किं नयेत् न नेष्यत्येवेत्यर्थः। उक्तं चैतत्तैतरीयब्राह्मणे। परिक्रीणीयादुच्छेषणस्य पाता ब्राह्मणो त्वा(?) हत्वा उच्छेषणस्य पाता यदि ब्राह्मणं न विन्देत् वल्मीकवपायामव- नयेत् सैव ततः प्रायश्चित्तिरिति।

एवं च स्वर्गसाधनत्वेव श्रुता सुराल्पत्वात्सम्यक् स्वर्गं गमयितुमशक्ता। तस्मात्सौ- त्रामणीं हित्वा पानागार एव मद्यं पातव्यमिति भावः।

एतन्निराकरोति--प्रमत्तेति। तत्र भवत एष श्लोकः प्रमत्तेन प्रमादेन अर्थात् वेद विषयकविप्रतिपत्त्याश्रयत्वेन गीतः।

ननु कथमस्यापि न प्रामाण्यम्, अत आह—यस्त्विति। यस्तु श्लोकोऽप्रमत्तगी- तः वेदविषयकविप्रतिपत्त्यनाश्रयत्वेन गीतः, तत्प्रमाणम्। इति गोनर्दीयो भाष्यकारः

शाब्दिकानां शब्दज्ञानादनन्तजयप्राप्तिकथनं रुच्युत्पादनार्थमन्यथा पारलौकि- कानन्तजयाप्तिः केन प्रत्यक्षीकृता।

लौकिकोऽर्थवादो यथा—गुणेति। गुणश्चानुरागश्चेति गुणानुरागो ताभ्यां मिश्रं तेन सर्पता सर्वतो गच्छता तव यशसा। दिग्वधूनां आशावधूनां मुखेऽकस्मात् अर्द्धकुंकु- मम् गुणमिश्रतया अर्द्धं श्वेतमनुरागमिश्रतया अर्द्धं रक्तम्। जातम्।

अत्र यशसा गुणानुरागमिश्रतयार्द्धकुंकुमप्राप्त्युक्ती राज्ञः शौर्यप्रख्यापनार्थम् नहि निरवयवपदार्थानां संमिश्रणं सम्भवति। संमिश्रणस्य सावयवत्वात।

असदिति। दुष्टार्थोपदेशकत्वान्नोपादेयं काव्यम्। इत्यपरेषामाशयः। यथोदा- हरणम्।

वयमिति। पातिव्रत्येनैव स्वजीवनं निर्वक्ष्ये इति प्रतिज्ञात्रीं स्वपुत्रीं काचन वेश्या उपदिशति हे पुत्रि! वयं बाल्ये एतस्यामवस्थायां डिम्भान् बालान् इच्छामः तैः सह मैथुनं कर्त्तुमभिलषामः। तरुणिमनि युवावस्थायां यूनः इच्छामः। परिणतौ वार्द्ध-

त्वयारब्धं जन्म क्षपयितुममार्गेण किमिदं
न नो गोत्रे पुत्रि क्वचिदपि सतीलाञ्छनमभूत् ॥"

"अस्त्ययमुपदेशः किन्तु निषेध्यत्वेन न विधेयत्वेन" इति यायावरीयः। य एवंविधा विधयः परस्त्रीषु पुंसां सम्भवन्ति तानवबुध्येतेति कवीनां भावः। किञ्च कविवचनायत्ता लोकयात्रा। "सा च निःश्रेयसमूलम्" इति महर्षयः। यदाहुः—

"काव्यमय्यो गिरो यावच्चरन्ति विशदा भुवि।
तावत्सारस्वतं स्थानं कविरासाद्य मोदते ॥"

किञ्च—

"श्रीमन्ति राज्ञां चरितानि यानि प्रभुत्वलीलाश्च सुधाशिनां याः।
ये च प्रभावास्तपसामृषीणां ताः सत्कविभ्यः श्रुतयः प्रसूताः ॥"

---

क्ये वृद्धान् अभिलषामः। इयमस्माकं परिणयविधेर्विवाहस्य स्थितिर्मर्यादा। त्वया पुनः किमिदं किमर्थमेतज्जन्म अमार्गेण अपथेन क्षपयितुं यापयितुमारब्धम्। हे पुत्रि नोऽस्माकं गोत्रे क्वचिदपि सतीलाञ्छनं पतिव्रतेति कलङ्कं नाभूत्। अत्र पवित्रपरिणयविधेरित्थं दुर्मर्यादाकत्वेन बोधनतया विनेयानामसन्मार्गप्रवर्त्तकत्वादुपदेशानर्हं काव्यमिति।

स्वीकृत्योक्तं परिहरति ग्रन्थकारः—अस्तीति। अयमेतादृशः उपदेशोऽस्ति। किन्तु प्रतिषेध्यत्वेन अकर्त्तव्यत्वेनोपदेशः। न तु कर्त्तव्यत्वेन। तदेव स्पष्टयति।

ये एवंविधा दुष्टाः प्रकाराः परस्त्रीषु विषये पुंसां सम्भवन्ति तान् प्रकारान् विज्ञायेत। अर्थात् विज्ञाय स्त्रियो रक्ष्या हि यत्नत इतिसूक्तिरनुसर्त्तव्या। इत्येवं कवयितॄणां भावः। किञ्च कविवचनाधीना संसारयात्रा। कविवाक्यानुसारित्वेन सम्पादिता संसारयात्रा निःश्रेयसस्य मूलम् कल्याणस्य कारणम्। इति महर्षयः कथयन्ति। यदाहुरिति कतिपयपद्यैस्तद्दर्शयति।

काव्यमय्य इति। भुवि यावत् काव्यरूपाः स्वच्छा गिरश्चरन्ति वर्त्तन्ते। तावत्कविः सारस्वतं स्थानं प्राप्य मोदते आनन्दं करोति।

श्रीमन्तीति। यानि श्रीमन्ति प्रशंसितानि राज्ञां भूपालानां चरितानि सन्ति। याश्च सुधाशिनां देवानां प्रभुत्वलीला आधिपत्यव्यवस्था इति भावः। ये च ऋषीणां तत्सम्बन्धिनां तपसां च प्रभावा अलौकिकानुभावाः। ताः सत्कविभ्यः श्रुतयः तत्कल्या वाचः इत्यर्थः। प्रसूताः।

उक्तञ्च—

"ख्याता नराधिपतयः कविसंश्रयेण राजाश्रयेण च गताः कवयः प्रसिद्धिम् ।
राज्ञा समोऽस्ति न कवेः परमोपकारी राज्ञो न चास्ति कविना सदृशः सहायः ॥
वल्मीकजन्मा स कविः पुराणः कवीश्वरः सत्यवतीसुतश्च ।
यस्य प्रणेता तदिहानवद्यं सारस्वतं वर्त्म न कस्य वन्द्यम् ? ॥"

"असभ्यार्थाभिधायित्वान्नोपदेष्टव्यं काव्यम्" इति च केचित् । यथा—

"प्रसर्पन्प्रग्रीवैर्भृतभुवनकुक्षिर्झणझणा-
करालः प्रागल्भ्यं वदति तरुणीनां प्रणयिषु ।
विलासव्यत्यासाज्जघनफलकास्फालनघन-
स्फुटच्छेदोत्सिक्तः कलकनककाञ्चीकलकलः ॥"

अपि च—

"नित्यं त्वयि प्रचुरचित्रकपत्रभङ्गीताटङ्कताडनविपाण्डुरगण्डलेखाः ।

---

यत उक्तं च । ख्याता इति । कवीनामाश्रयेण नराधिपतयो राजानः ख्याताः प्रसिद्धाः । राज्ञामाश्रयेण च कवयः प्रसिद्धिं गता प्राप्ताः । तस्मात् कविना सदृशस्तुल्यः राज्ञो नृपतेः सहायः संसारे कीर्त्तिसम्पादकत्वेन उपकारी नान्योऽस्ति । कवेरपि राज्ञा समः परमोपकारी सहायोऽन्यो नास्ति ।

वल्मीकेति । यस्य सारस्वतवर्त्मनः प्रणेता निर्माता स लोकप्रसिद्धः पुराणः प्राचीनः वाल्मीकिः कविरस्ति । कवीश्वरः कविश्रेष्ठः सत्यवत्याः पुत्रो व्यासश्च वर्त्तते । तद् अनवद्यं निर्दोषं सारस्वतं वर्त्म कस्य पुंसो न वन्द्यं प्रणम्यम् ।

असभ्येति । असभ्यमश्लीलमर्थमभिधत्ते इत्यसभ्यार्थाभिधायी । तस्य भावस्तत्वं तस्मात् काव्यं नोपदेष्टव्यम् । इति केचिद्वदन्ति । यथोदाहरणम्-प्रसर्पन्निति । प्रगता ग्रीवा येषु तैः प्रग्रोवैः वातायनैः मुख्यशालाभिर्वा प्रसर्पत् प्रकर्षेण प्रसरत् । ( प्रग्रीवो वातायनमिति सुभूतिः । मुख्यशालेति भानुजिदीक्षितः । वृक्षशीर्षमिति गोवर्द्धनः । सुन्दरगल इति त्रिकाण्डशेषकारः ) भृता पूरिता भुवनानां कुक्षिर्येन सः । झणझणाभिः कराल उन्नतः । विलासस्य व्यत्यासस्तस्मात् रतिवैपरीत्यात् । जघना एव फलकौ । तयोरास्फलनं संचलनं तेन घनो निविडः स्फुटः स्वच्छो यश्छेदस्तेन उत्सिक्त उद्रिक्तः । कलकनकेन निर्मलसुवर्णेन निर्मिता या काञ्ची । तस्याः कलकलो मधुरस्वनः प्रणयिषु विषये तरुणीनां प्रागल्भ्यं सुरतधृष्टतां वदति कथयति । अस्य पद्यस्य कस्याश्चित्कामिन्या विपरीतसुरतवर्णनामयत्वादश्लीलार्थकत्वम् ।

नित्यमिति । हे सखे ? प्रचुरा बहुला चित्रका ( स्वार्थे कन् ) विचित्रा पत्रभङ्ग्यो

स्निह्यन्तु रत्नरशनारणनाभिरामकामार्तिनर्तितनितम्बतटास्तरुण्यः ॥"

"प्रक्रमापन्नो निबन्धनीय एवायमर्थः" इति यायावरीयः । यदिदं श्रुतौ शास्त्रे चोपलभ्यते । तत्र याजुषः—

"योनिरुदूखलं शिश्नं मुशलं मिथुनमेवैतत् प्रजननं क्रियते ॥"

आर्चः—"उपोप मे परामृश मा मे दभ्राणि मन्यथाः ।
सर्वाऽहमस्मि रोमशा गान्धारीणामिवाविका ॥"

शास्त्रीयः—"यस्याः प्रसन्नधवलं चक्षुः पर्यन्तपक्ष्मलं ।
नवनीतोपमं तस्या भवति स्मरमन्दिरम् ॥"

---

यासु ( गण्डलेखासु ) ताः । एवंभूतास्तथा ताटङ्कस्य ताडनेन विपाण्डुरा गण्डलेखा यासां ( तरुणीनाम् ) ताः । रत्नखचितानां रशनानां रणनया अभिरामाः सुन्दराः कामार्त्या नर्तिताश्चंचला नितम्बतटा यासां ताः । तरुण्यो युवत्यस्त्वयि नित्यं स्निह्यन्तु ।

अस्यापि तथैवासभ्यार्थकत्वम् । एवं चासभ्यार्थकत्वान्नोपादेयम् काव्यमिति । स्वीकरणपूर्वकमुक्तं प्रतिक्षिपति ग्रन्थकारः-प्रक्रमापन्न इति । अयमेवंभूतोर्थः प्रक्रमप्राप्तो निबन्धुमुचित एव । यस्मादिदमसभ्यार्थवर्णनं श्रुतौ वेदे शास्त्रे लक्षण-शास्त्रे च प्राप्यते । तत्र श्रुत्यादिषु याजुषोऽसभ्यार्थः । योनिरिति । उदूखलं योनिः मुशलं शिश्नो मेढ्रः । एतदेव मिथुनम् । एतेन प्रजननं क्रियते ।

आर्चं ऋग्वेदोक्तोऽसभ्यार्थो यथोदाह्रियते । संभोगाय प्रार्थितं किन्तुत्वमजात-लोम्नीति बुद्ध्या परिहसन्तं स्वामिनं भावव्ययं प्रति ब्रह्मवादिन्या बृहस्पतेः पुत्र्या स्तद्भार्याया रोमशाया उत्तरवाक्यम् । उपोपेति । हे स्वामिन् ! मे माम् । द्वितीयार्थे चतुर्थी । उप उपेत्य । द्वितीय उपशब्दः पादपूरणः । परामृश सम्यक् स्पृश । भोग-योग्यां विद्धि इति भावः । यद्वा मे मम गोपनीयमङ्गमुपोप परामृश । नाजातलोम्न्या सह संविशेदिति परामर्शमकुर्वतः परामर्शनीयाभावशंकां परिहरति । मा म इति । मे दभ्राणि मा मन्यथा, मदंगसंभूतानि रोमाणि अल्पानि मा बुध्यस्व इति भावः । दभ्रशब्दोऽत्राल्पार्थकः दभ्रमर्भकमित्यल्पस्येति, दभ्रं दभ्नोतेरिति च यास्कः । अद-भ्रत्वं विशदयति । अहं रोमशा बहुरोमयुक्तास्मि । यतोहमीदृशी अतः सर्वा सम्पू-र्णावयवाऽस्मि । रोमशत्वे दृष्टान्तः ।

गांधारीणामविकेव । गंधारो देशः तत्सम्बन्धिन्यविजा तरिव । तद्देशस्था मेषा यथा रोमशास्तथाहमस्मि । यद्वा गांधारीण्णां गर्भधारिणीनां स्त्रीणामविका अत्यर्थं तर्पयन्ती योनिरिव । तासामाप्रसवं रोमादिवर्जनस्य शास्त्रे निषिद्धत्वाद्योनी रोमशा भवति । अतः सोपमीयते । ततोहमीदृशी अतो मामप्रौढां मावबुध्यस्वेति भावः ।

शास्त्रीयः शास्त्रोक्तोऽसभ्यार्थं उदाह्रियते । यस्या इति । यस्या नायिकायाश्चक्षुः प्रसन्नं स्वच्छं धवलं श्वेतं पर्यन्तयोः प्रान्तयोः पक्ष्मलं रोमबहुलं भवति । तस्याः स्मरमन्दिरं योनिः नवनीतोपमं हैयंगवीनतुल्यं भवति । अत्रापि योनिरूपोऽसभ्यार्थो वर्ण्यते ।

अयं भावः । यदि असत्यासभ्यार्थवर्णनात्मकतया काव्यानामनुपदेश्यत्वं व्यवस्थाप्यते तर्हि स्तुत्यादिष्वपि तादृशार्थस्योपलभ्यमानत्वात्तेषामपि तथात्वापत्तिर्दुर्वारैव । तस्मात् आवर्जनार्थस्य क्रमप्राप्तस्य वा तादृशार्थस्योपनिबन्धो न दोषावहः ।

अन्यच्च—

काव्यालापाश्च ये केचित् गीतकान्यखिलान्यपि ।
शब्दमूर्तिधरस्यैते विष्णोरंशा महात्मनः ॥

इति विष्णुपुराणोक्तदिशा भगवच्छब्दब्रह्मणोंऽशभूतानां तेषामनुपदेश्यत्वकथनं ब्रह्मण एव तत्कथनं स्यात् । इति ।

अथ यद्युच्यते "काव्यालापांश्च वर्जयेत्" इति प्रतिषेधवाक्यगौरवात् तदनुपदेश्यम् काव्यमिति, तदप्यविचारितरमणीयम् । यतस्तस्य वाक्यस्य असत्काव्यविषयत्वेन व्यवस्थापनात् । यदाह विद्यानाथः "यत्र पुनरुत्तमपुरुषचरितं न निबध्यते तत्काव्यं परित्याज्यमेव । तद्विषया च स्मृतिः "काव्यालापांश्च वर्जयेदिति" । इति । असत्काव्यमपि उपदेश्यं भवति किन्तु प्रतिषेध्यत्वेन न विधेयत्वेनेति पूर्वमेवोक्तम् । किञ्च दुष्टत्वमपि काव्यस्य न केवलं दुष्टप्रतिपाद्यतया, किन्तु निबन्धुः प्रतिभाऽऽवल्यकुलवैकल्याभ्यामपि तत् । तस्मात्काव्येदुष्टत्वं सर्वथा परिहर्त्तव्यम् तदुक्तं दण्डिना ।

तदल्पमपि नोपेक्ष्यं काव्ये दुष्टं कथञ्चन ।
स्याद्वपुः सुन्दरमपि श्वित्रेणैकेन दुर्भगम् ॥

यत्पुनरुत्तमनायककथाश्रयं काव्यं तत्तु ग्राह्यमेव ।

यदुक्तम्—

कवेरल्पापि वाग्वृत्तिर्विद्वत्कर्णावतंसति ।
नायको यदि वर्ण्येत लोकोत्तरगुणोत्तरः ॥ इति ।

किं बहूक्तेन । आश्रयसंपत्त्या आश्रयिणः प्रशस्तिरिति सर्वशास्त्राणां तुल्यकक्षानिक्षिप्तमेतत् । तथाहि । न्यायवैशेषिकयोरीश्वरप्रतिष्ठापकतया पूर्वोत्तरमीमांसयोर्धर्मब्रह्मप्रतिपादकतया सांख्ययोगयोः प्रकृतिपुरुषवर्णनात्मकतया च महनीयत्वम् । तत्त्वचिन्तायां तु शास्त्राणामपि काव्यमुखप्रेक्षितया कार्यकारित्वम् । यदाहुः ।

स्वादुकाव्यरसोन्मिश्रं शास्त्रमप्युपयुञ्जते ।
प्रथमालीढमधवः पिबन्ति कटु भेषजम् ॥ इति ।

अथ मन्यसे ऋषिप्रणीतत्वाभावान्नोपदेष्टव्यं काव्यमिति । तदप्यनालोचित-

पदवाक्यविवेकोऽयमिति किञ्चित्प्रपञ्चितः ।
अथ वाक्यपकारांश्च कांश्चिदन्यान्निबोधत ॥

॥ इति राजशेखरकृतौ काव्यमीमांसायां कविरहस्ये प्रथमेऽधिकरणे षष्ठोऽध्यायः पदवाक्यविवेकः ॥

---

चतुरम् । वाल्मीकिव्यासबोधायनपाणिनिप्रभृतिरपि महर्षिभिस्तस्य प्रणयनात् । नापि च वक्तव्यम् पुरुषप्रणीतत्वादिति । शास्त्राणामपि तथात्वेन तत्वे स्यात् । काव्यत्वादेव तन्नोपदेष्टव्यमिति चेत् । न । रामयणादौ व्यभिचरितत्वात् । तेषामपि तथात्वमेवेति चेत् । तर्हि ।

एकैकमक्षरं पुसां महापातकनाशनमिति ।

एकैकाक्षरोच्चारणजन्यफलविशेषबोधकवाक्यविरोधः स्यात् । ननु दृष्टादृष्टप्रयोजनाभावान्नानुपदेष्टव्यमिति चेत् । न । दृष्टप्रयोजनानां

काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षये ।
सद्यः परनिर्वृतये कान्तासम्मितयोपदेशयुजे । इत्यादीनाम् ।

अदृष्टप्रयोजनानाञ्च—

धर्मार्थकाममोक्षेषु वैचक्षण्यं कलासु च
करोति कीर्तिं प्रीतिं च साधुकाव्यनिषेवणम् । इत्यादिनां बहूनामुक्तत्वात् ।

किंच शास्त्रकाव्ययोरन्योपि विशेषः । यत् शास्त्रं जडधियामपि गुरूपदेशाद्विज्ञातुमलम्, काव्यं तु कस्यचिदेव प्रतिभावतो निर्मितिविषयम् । यदाह भामहः

गुरूपदेशादध्येतुं शास्त्रं जडधियोप्यलम् ।
काव्यं तु जायते जातु कस्यचित्प्रतिभावतः ॥

तथा शास्त्रं कटुकौषधवदज्ञानतिमिरापहम्, काव्यं तु अमृतवदाह्लादकतयेति विशेषः । तदुक्तमभियुक्तैः ।

कटुकौषधवच्छास्त्रमविद्याव्याधिनाशनम् ।
आह्लाद्यमृतवत्काव्यमविवेकगदापहम् ॥

तस्मात्सर्वथा काव्यं ग्राह्यमिति सर्वं निरवद्यम् ।

अध्यायोक्तविषयमुपसंहरति—पदेति । इति इत्थमयं पदवाक्ययोर्विवेकः किञ्चित् प्रपञ्चितः । अथ पदवाक्यविवेवकरणानन्तरं कांश्चिदन्यान् वाक्यप्रकारान् वाक्यभेदान् निबोधत ।

इति साहित्याचार्याहिताग्निश्रीमधुसूदनशास्त्रिणः कृतौ मधुसूदनीविवृतौ पदवाक्यविवेको नाम षष्ठोऽध्यायः ।

---

## सप्तमोऽध्यायः

# वाक्यविधयः, काकुप्रकाराः, पाठप्रतिष्ठा ।

वाक्यं वचनमिति व्यवहरन्ति । तच्च त्रिधा प्रणेतृभेदेन ब्राह्मं, शैवं, वैष्णवमिति । तदिदं वायुप्रोक्तपुराणादिभ्य उपलब्धं यदुत ब्राह्मं वचः पञ्चधा स्वायम्भुवमैश्वरमार्षमार्षीकमार्षिपुत्रकं च । स्वयम्भूर्ब्रह्मा तस्य स्वायम्भुवम् । तन्मनोजन्मानो भृगुप्रभृतयः पुत्रास्ते ईश्वरास्तेषामैश्वरम् । ईश्वराणां सुता ऋषयस्तेषामार्षम् । ऋषीणामपत्यानि ऋषीकास्तेषामार्षीकम् । ऋषीकाणां सूनव ऋषिपुत्रकास्तेषामार्षिपुत्रकम् । स्वयम्भुवः प्रथमं वचः श्रुतिः, श्रुतेरन्यच्च स्वायम्भुवम् । तद्दाहुः—

"सर्वभूतात्मकं भूतं परिवादं च यद्भवेत् ।
क्वचिन्निरुक्तमोक्षार्थं वाक्यं स्वायम्भुवं हि तत् ॥"

तदेव स्तोकरूपान्तरपरिणतमैश्वरं वचः । उक्तञ्च—

"व्यक्तक्रममसंक्षिप्तं दीप्तगम्भीरमर्थवत् ।

---

॥ श्रीः ॥

पाठस्थापनसिद्ध्यै वाक्यविधात्रीं सकाकुवक्रोक्त्या ।
देवीं यतिगणसुहितां नत्वा विवृणोमि वाक्यादीन् ॥

अथ पूर्वाध्यायप्रतिज्ञातान् वाक्यप्रकारान् व्याख्यातुं सूत्रमातनोति । वाक्यविधय इति । वाक्यस्य विधयः प्रकाराः अस्मिन्नध्याये व्याख्यास्यन्ते ।

वाक्यमेव वचनमिति व्यवहरन्ति कथयन्ति । तच्च वाक्यं च प्रणेतुर्निर्मातुर्भेदेन ब्राह्मं ब्रह्मणा प्रोक्त, शैवं शिवेन प्रोक्तं, वैष्णवं विष्णुना प्रोक्तमित्येवं त्रिप्रकारवत् । तदिदं वाक्यं वज्रप्रोक्तेभ्यः पुराणादिभ्यो विष्णुधर्मोत्तरप्रभृतिभ्य उपलब्धं प्राप्तम् । तस्य ब्रह्मणो मनसः सकाशात जन्म येषां ते ब्रह्ममानसपुत्राः ।

स्वायम्भुववाक्यलक्षणं प्रस्तौति सर्वभूतेति । यत् वाक्यं सर्वेषु भूतेषु क्ष्मादिषु स्थलेष्वित्यर्थः । भूतं क्ष्मादौ पिशाचादौ जन्तौ क्लीबे त्रिषूचिते । इति कोषः । आत्मा स्वरूपं यस्य तत् । भूतमुचितं सत्यमित्यर्थः । परिवादं च भवेत । क्वचित्स्थलविशेषे निरुक्तः प्रोक्तो मोक्षमुद्दिश्यार्थो यत्र तत् । तत् स्वायम्भुवं स्वयम्भुवा प्रोक्तं ज्ञेयम् ।

तदेव स्वायम्भुवमेव अल्पस्वरूपान्तरं प्राप्तं सत् ऐश्वरं भृगुपुत्राणां सम्बन्धि वचो ज्ञेयम् ।

व्यक्तमिति । निगदव्याख्यातः ।

प्रत्यक्षं च परोक्षं च लक्ष्यतामैश्वरं वचः ॥"

आर्षम्—"यत्किञ्चिन्मन्त्रसंयुक्तं युक्तं नामविभक्तिभिः ।
प्रत्यक्षाभिहितार्थं च तदृषीणां वचः स्मृतम् ॥"

आर्षीकम्—"नैगमैर्विविधैः शब्दैर्निपातबहुलं च यत् ।
न चापि सुमहद्वाक्यमृषीकाणां वचस्तु तत् ॥"

आर्षिपुत्रकम्—"अविस्पष्टपदप्रायं यच्च स्याद्बहुसंशयम् ।
ऋषिपुत्रवचस्तत्स्यात्ससर्वपरिदेवनम् ॥"

तदुदाहरणानि पुराणेभ्य उपलभेत । सारस्वताः कवयो नः पूर्वे इत्थंकारं कथयन्ति । ब्रह्मविष्णुरुद्रगुहवृहस्पतिभार्गवादिशिष्येषु चतुःषष्टावुपदिष्टं वचः पारमेश्वरम् । क्रमेण च सञ्चरद्देवैर्देवयोनिभिश्च यथामत्युपजीव्यमानं दिव्यमिति व्यपदिश्यते । देवयोनयस्तु—

"विद्याधरोप्सरोयक्षरक्षोगन्धर्वकिन्नराः ।
सिद्धगुह्यकभूताश्च पिशाचा देवयोनयः ॥"

---

आर्षं यथा-यत्किञ्चिदिति । मन्त्रैः संयुक्तम् । नाम प्रातिपदिकम् । विभक्तयः सुप्तिङ्रूपाः । स्पष्टमन्यत् ।

आर्षीकं ऋषिपुत्रसम्बन्धि वचो यथा । नैगमैरिति नैगमै र्वैदिकैः । युक्तमित्यध्याहार्यम् ।

अविस्पष्टेति । ससर्वः सर्वपर्यायः । तत्त्वसतत्व=गोत्रसगोत्रवत् । परिदेवनं विलापः । विलापः परिदेवन मित्यमरः ।

पूर्वे प्राचीनाः कवयो नोऽस्मभ्यमिति योजना । उपजीव्यमानं सेव्यमानम् ।

विद्याधरेति । विद्याधरोप्सरोयक्ष इति पाठः शुद्धः ।

विद्याधराप्सरोयक्षाणां परस्परं लिंगभेदं वोधयितुं विद्याधराप्सरसोरित्यत्र द्वन्द्वो न कृतः कोषकारेण । यत अग्रे क्वापि विद्याधरशब्दस्यानभिधानात् । यथाचोक्तं लिंगज्ञानोपायभूतासु परिभाषासु—

(१)भेदाख्यानाय न द्वन्द्वो नैकशेषो न सङ्करः ।

---

(१) अत्र कोशे अनुक्तानां स्वपर्यायेष्वपठितानाम् ( भिन्नं लिङ्गं येषां तेषां ) भिन्नलिङ्गानां शब्दानां भेदाख्यानाय लिङ्गभेदमाख्यातुं द्वन्द्वः एकशेषश्च न कृतः । किन्तु स्वपर्यायेषु पठितानां समानलिङ्गानां द्वन्द्वः एकशेषश्च कृत एव । तथा तेषां शब्दानां क्रमादृते क्रमं विना संकरो भिन्नलिङ्गानां मिश्रत्वं न कृतः ।

तत्र पिशाचादयः शिवानुचराः स्वभूमौ संस्कृतवादिनः, मर्त्ये तु भूत-भाषया व्यवहरन्तो निबन्धनीयाः। अप्सरसस्तु प्राकृतभाषया। तद्दिव्यं वचश्चतुर्द्धा । वैबुधं वैद्याधरं गान्धर्वं योगिनीगतं च । शेषाणामेतेष्वेवोपलक्षणं प्रकृतिसादृश्येन । तत्र वैबुधम्—

"समासव्याससंदब्धं शृङ्गाराद्भुतसम्भृतम् ।
सानुप्रासमुदारं च वचः स्यादमृताशिनाम् ॥"

यथा—

यच्चन्द्रकोटिकरकोरकभारभाजि बभ्राम बभ्रुणि जटाकुहरे हरस्य ।
तद्वः पुनातु हिमशैलशिलानिकुञ्जझात्कारडम्बरविरावि सुरापगाम्भः ॥"

वैद्याधरम्—"स्तोकानुप्राससच्छायं चतुरोक्तिप्रसादि च ।
द्राघीयसा समासेन विद्धि वैद्याधरं वचः ॥"

यथा—

"प्रणतसुरकिरीटप्रांशुरत्नांशुवंशच्छुरितनखशिखाप्रोद्भासमानारुणाङ्घ्रे ।

---

कृतोऽत्र भिन्नलिङ्गानामनुक्तानां क्रमादृते ॥ इति ।

भूतभाषया पिशाचभाषया । शेषाणां यक्षरक्षःकिन्नरादीनाम् ।

समासेति । संक्षेपविस्ताराभ्यां ग्रथितम् । श्रृंगाराश्चर्याभ्यां परिपूर्णम् । अनुप्रासवत् । उदारं महार्थम् । वचो वाक्यम् । अमृतमश्नन्ति इति तेषां विबुधानाम् । भवति ।

यथोदाह्रियते—यच्चन्द्रेति । चन्द्रस्य कोटिकरा एव कोरकाणां भारः मुकुलीनां समुदायः । तद्भाजि तद्युक्ते । बभ्रुणि पिङ्गले । बभ्रुर्ना नकुले विष्णौ विपुले त्रिषु इति बलशर्मा । हरस्य जटाकुहरे जटाविवरे । अथ कुहरं शुषिरं विवरमित्यमरः । यदम्भो बभ्राम भ्रमणं चकार । तत् हिमाद्रेः शिलानिकुञ्जेषु दृषन्मध्यगतकुञ्जेषु । शिला दृषदित्यमरः । झात्कारस्य झादितिशब्दस्य डम्बरेण आयोजनेन आडम्बरेणेति यावत् । विरौतीति तत् । सुरापगाया अम्भो जलं पुनातु रक्षतात् ।

अत्र चन्द्रकोटीत्यत्र समासः, बभ्राम बभ्रुणि जटाकुहरे हरस्येति पदानि व्यस्तानि । पूर्वपादे ककाररेफयोः भयोः, द्वितीयपादे भरेफयोः हकाररेफयोः । तृतीये शलयोरनुप्रासः । सुरापगायाः शिवजटासुभ्रमणं हिमाद्रिकुञ्जेषु औद्धत्यञ्चौदार्यमिति लक्षणसंगतिः ।

वैद्याधरं वदति विद्धि वचः स्वरूपम्—स्तोकेति । अल्पानुप्रासेन मनोहरलक्ष्मीकम् । चतुरोक्त्या प्रसन्नतामयम् । बहुलेन समासेनोपलक्षितं वचो वैद्याधरं जानीहि ।

प्रणतेति । प्रणतानां सुराणां ये किरीटयस्तेषां प्रांशव उन्नता ये रत्नांशवो मणिम-

उदिततरणिवृन्दोद्दामधामोर्ध्वनेत्रज्वलननिकरदग्धानङ्गमूर्त नमस्ते ॥"

यथा वा—"भ्रमति भ्रमरकरम्बितनन्दनवनचम्पकस्तबकगौरः ।
वात्याहत इव वियति स्फुटलक्ष्मा रोहणीरमणः ॥"

गान्धर्वम्—"ह्रस्वैः समासैर्भूयोभिर्विभूषितपदोच्चया ।
तत्त्वार्थग्रथनग्राह्या गन्धर्वाणां सरस्वती ॥"

यथा—"नमः शिवाय सोमाय सगणाय ससूनवे ।
सवृषव्यालशूलाय सकपालाय सेन्दवे ॥"

योगिनीगतम्—"समासरूपकप्रायं गम्भीरार्थपदक्रमं ।

---

यूखाः । किरणोस्रमयूखांशुगभस्तिघृणिरश्मयः । इत्यमरः । तेषां वंशेन वृन्देन च्छुरिता संसृष्टा ये नखानां शिखाग्राः । तैरुद्भासमानो देदीप्यमानोंऽह्रिर्यस्य तत्संबुद्धौ तथा । उदिता उदयं प्राप्ता ये तरणिवृन्दाः सूर्यनिकराः । तद्वदुद्दाम धाम उत्कृष्टं तेजो यस्यैवं भूत उर्ध्वनेत्रज्वलनः लालाटाग्निः । तस्यनिकरेण दग्धानङ्गस्य मूर्तिः शरीरं येन तत्सम्बुद्धौ । एवंभूत हे शिव ! ते तुभ्यं नमः । अत्र प्रणतेत्यत्र रेफशकारखकाराणां सकृदनुप्राप्तः । तथैतत्पदं लम्बायमानं समस्तं प्रसादगुणानुयोगि च । उदितेतिपदं लम्बायमानं समस्तं "उच्चार्यत्वाद्यदेकत्र स्थाने तालुरदादिके । सादृश्यं व्यञ्जनस्यैव श्रुत्यनुप्रास उच्यते" इति लक्षणकानुप्रासश्रुतिमनोहरम् । सरलार्थपदत्वात्प्रसादगुणानुवन्धि च ।

उदाहरणान्तरमुपन्यस्यति—भ्रमतीति । भ्रमरैः द्विरेफैः करम्बित आलिङ्गितो यो नन्दनवनीय चम्पकस्तम्बकः तद्वत गौरः पाण्डरः । गौरो विशदश्वेतपाण्डराः । इत्यमरः । स्फुटं लक्ष्म चिन्हं यस्यासौ । रोहिण्यारमणश्चन्द्रः वात्याहत इव वियत्याकाशे भ्रमति ।

उदाहरति बोद्धव्यं गान्धर्वं वाक्यलक्षणम्—

ह्रस्वैरिति । ह्रस्वैर्लघुभिः किन्तु भूयोभिः बहुभिः समासैः विभूषितः पदोच्चयः पदसमुदायो यस्याः सा । तत्त्वार्थस्य मुख्यार्थस्य ग्रन्थनेन गुम्फनेन ग्राह्या ग्रहीतुं योग्या । एवंभूता गन्धर्वाणां सरस्वती वाणी भवति । तदुदाहरणं यथा ।

नमः शिवायेति । उमया सहितः सोमस्तस्मै । गणैः सहितः सगणस्तस्मै । सूनुभ्यां सहितः ससूनुस्तस्मै । वृषश्च व्यालश्च शूलश्च ते वृषव्यालशूलाः । तैः सहितस्तस्मै । कपालेन सहितः सकपालस्तस्मै । इन्दुना सहितः सेन्दुस्तस्मै । शिवाय नमः । अत्र सोमादिषु पदेषु ह्रस्वः समासः। शिवसन्बन्ध्युमागणसूनुप्रभृतीनां वस्तूनां गुम्फनं च वर्त्तते ।

योगिनीवाक्यलक्षणमुदाहरति—समासेति । समासरूपकबहुलम् । गम्भीरोर्थो

सिद्धान्तसमयस्थायि योगिनीनामिदं वचः ॥"

यथा—

"दुःखेन्धनैकदहनामृतवर्षमेघ ? संसारकूपपतनैककरावलम्ब ? ।
योगीन्द्रदर्पण ? जगद्गतकृत्स्नतेजः-प्रत्यक्षचौरवर ? वीरपते ? नमस्ते ॥"

महाप्रभावत्वाद्भौजङ्गममपि दिव्यमित्युपचर्यते ।

"प्रसन्नमधुरोदात्तसमासव्यासभागवत् ।
अनोजस्विपदप्रायं वचो भवति भोगिनाम् ॥"

यथा—

"सुसर्जितां श्रोत्रसुखां सुरूपामनेकरत्नोज्ज्वलचित्रिताङ्गीम् ।
विद्याधरेन्द्रः प्रतिगृह्य वीणां पिनाकिने गायति मङ्गलानि ॥"

---

यस्मिन् पदक्रमे । स तथाभूतः पदक्रमो यस्मिन् वचसि तत् । सिद्धान्तो निर्णीतो यः समयः कविसम्प्रदायसिद्धाचारः । तस्मिंस्थातुं शीलमस्येति तत् । एवंभूतं वचो योगिनीनां मतम् ।

दुःखेति । दुःखान्येव इन्धनानि । तेषामेकदहन ? अमृतवर्षणे मेघस्वरूप? संसार एव कूपः तस्मिन् पतितानामेककरावलम्ब ! योगीन्द्राणां मध्ये दर्पण ! जगद्गतस्य कृत्स्नतेजसः प्रत्यक्षगौरवर ? साक्षाच्चौरश्रेष्ठ ? हे वीरपते ! ते नमः ।

दुःखे इन्धनत्वारोपः । राज्ञि च तन्नाशकर्तृत्वेन अग्नित्वाशेपः । एवं सर्वत्र बोध्यम् । समस्तानि सर्वाणि पदानि । अग्निर्यथा इन्धनानि भस्मसात् करोति अल्पमपि नावशिनष्टि तथा हे वीरेन्द्र त्वमपि दुःखानि निरवशेषी करोसीति गम्भीरोर्थः । एवं सर्वत्र बोध्यम् । दुःखेन्धननाशकतया राजादिषु अग्नित्वारोपः कविसम्प्रदाय सिद्धः । एवमन्यत्र ।

महान् प्रभावो यस्य तस्य भावस्तत्वं तस्मात् । महातेजस्त्वात् । भुजंगमानामिदं भौजङ्गमं सार्पम् । सर्पाणां वाक्यमित्यर्थः । तदपि दिव्यं स्वर्गीयमित्यारोप्यते ।

तल्लक्षणं यथा प्रसन्नेति । प्रसादगुणयुतम् , मधुरम् , उदात्तम् , समासं व्यस्तं भागेन सम्बद्धम् , प्रायः ओजस्विपदरहितं वचो वाक्यं भोगिनां सर्पाणां भवति ।

तदुदाहरणं यथा । सुसर्जितामिति । सुन्दरं यथास्यात्तथा सर्जितां तंत्रा (तारा) णामारोहावरोहेण गायनयोग्यतां नीताम् । श्रोत्रयोः सुखकरां कर्णमधुराम् । सुन्दरस्वरूपां सुलक्षणामित्यर्थः । अनेकरत्नैरुज्वलानि चित्रितान्यङ्गान्यस्याः सा ताम् । वीणां प्रतिगृह्य । विद्याधराणामिन्द्रस्तेषामधिपतिः । पिनाकिने शिवाय अर्थात् तमनुकूलयितुं तोषयितुमिति यावत् । मंगलानि स्तुतीः गायति ।

"किमर्थं पुनरनुपदेश्ययोर्ब्राह्मपारमेश्वरयोर्वाक्यमार्गयोरुपन्यासः ?" इत्याचार्याः। "सोऽपि कवीनामुपदेशपरः" इति यायावरीयः। यतो नाटकादावीश्वरादीनां देवानां च प्रवेशे तच्छायावन्ति वाक्यानि विधेयानीति दिव्यम्। इह हि प्रायोवादो यदुत मर्त्यावतारव्यवहाररुचेर्भगवतो वासुदेवस्य वचो वैष्णवं तन्मानुषमिति व्यपदिशन्ति। तच्च त्रिधा रीतित्रयभेदेन

---

किञ्चिद् विभेदवान् अयमेषां संग्रहो विष्णुधर्मोत्तरे—

तत्राज्ञायुक्तमद्वैधं दीप्तं गम्भीरशब्दवत्
क्वचिन्निरुक्तसंयुक्तं वाक्यमेतत्स्वयम्भुवः॥
यत्किञ्चिन्मिश्रसंयुक्तं युक्तं नामविभक्तिभिः
प्रत्यक्षाभिहितं यच्च तदृषीणां वचः स्मृतम्॥
नैगमैर्विविधैः शब्दैर्निपातबहुलं च यत्।
न चापि सुमहद्वाक्यमृषीकाणां वचः स्मृतम्॥
अविस्पष्टपदं ज्ञेयमृषिपुत्र वचो नृप।
भूतभाविभवज्ज्ञानं जन्मदुःखविकुत्सनम्॥
मित्राणां तद्भवेद्वाक्यं गर्भेषु च प्रवर्त्तनम्।
आज्ञायुक्तं च वचनं तथा हेतुविवर्जितम्॥
राजर्षीणां तु विज्ञेयं बह्वर्थं बहुविस्तरम्।
बह्वभिधानं बह्वर्थं देवतानां प्रकीर्तितम्॥
बह्वभिधानमल्पार्थं दानवानां प्रकीर्तितम्।
अल्पाभिधानमल्पार्थं गन्धर्वाणां तथा भवेत्॥
दुर्बोधं विषमं चैव राक्षसानां प्रकीर्तितम्।
गूढाक्षरं तु यक्षाणां किन्नरैरुक्तवत्तथा॥
नागानामतिविस्पष्टं पुनरुक्तसमन्वितम्।
रागद्वेषसमायुक्तं हेतुमत्पौरुषं भवेत्॥ इति

एषां वाक्यानां काव्यादिष्वनुपयुक्तत्वादाशंकन्त आचार्याः किमर्थमिति। अनुपदेश्ययोरनुपयुक्तत्वात्तथाभूतयोः। उपन्यासः कथनम्।

उत्तरति—सोपीति। उपदेशपरः उपदेशदाने तत्परः। हेतुश्चात्रभवति। यतो हेतोः। प्रवेशे आगमने। तच्छायावन्ति ईश्वरदेववाक्यच्छायायुक्तानि वाक्यानि कथानकवचनानि कर्त्तव्यानि। इतिः समाप्तौ। इह लोके। प्रायोवादः प्रसिद्धिः। मर्त्यावतारं व्यवहर्त्तुं रुचियुक्तस्य भगवतो वासुदेवस्य हरेः यद् वैष्णवं वचः, तद्वचो मानुषम्,

तदाहुः—

"वैदर्भी गौडीया पाञ्चाली चेति रीतयस्तिस्रः।
आसु च साक्षान्निवसति सरस्वती तेन लक्ष्यन्ते॥
रीतिरूपं वाक्यत्रितयं काकुः पुनरनेकयति॥"

"काकुर्वक्रोक्तिर्नाम शब्दाऽलङ्कारोयम्" इति रुद्रटः॥ "अभिप्रायवान्पाठधर्मः काकुः, स कथमलङ्कारी स्यात्?" इति यायावरीयः। सा च द्विधा साकाङ्क्षा निराकाङ्क्षा च। वाक्यान्तराकाङ्क्षिणी साकाङ्क्षा, वाक्योत्तरभाविनी निराकाङ्क्षा। तदेव वाक्यं काकुविशेषेण साकाङ्क्षम्। तदेव काकुमन्तरेण निराकाङ्क्षम्। आक्षेपगर्भा, प्रश्नगर्भा, वितर्कगर्भा चेति साकाङ्क्षा। विधिरूपा, उत्तररूपा निर्णयरूपेति निराकाङ्क्षा। तत्राक्षेपगर्भा—

"यदि मे वल्लभा दूती तदाऽहमपि वल्लभा।
यदि तस्याः प्रिया वाचः तन्ममाऽपि प्रिय? प्रियाः॥"

---

इति एवं कथयन्ति। तन्मानुषं वाक्यं रीतीनां त्रिभेदत्वात् त्रिप्रकारम् तदाहुरिति दर्शयति।

वैदर्भीति। येन साक्षात् सरस्वती भारती आसु यथातथा निवसति आवासं करोति। तेन हेतुना वैदर्भी गौडीया, पाञ्चाली चेतिनाम्न्यस्तिस्रो रीतयो लक्ष्यन्ते काव्येषु। एवं च रीतिरूपं वाक्यं त्रिभेदवत। काकुः पुनरेकैव।

यदा हर्षशोकभयादिभिः कण्ठस्वरः विकृतिमापद्यते, तदा वाक्यस्योच्चारणमन्यथा भवति। तादृशमुच्चारणमेव काकुपदेन व्यवह्रियते, इत्यतो वाक्यप्रस्तावे काकुप्रकारान् वक्तुमुपक्रमते। काकुरिति। वक्रोक्तिशब्दालङ्कारान्तःपातिनी अर्थात् तद्भेदः काकुः। अतोयं शब्दालङ्कारः। इति रुद्रटाशयः। तत्र स्वमतं प्रस्तौति-अभिप्रायेति। वाक्यस्योच्चारणमेव वक्ता स्वाशयेनान्यथा करोति न पुनस्तेनोच्चारणेन वाक्यस्य कापि शोभानिष्पत्तिः सम्पद्यते। केवलं वक्तुरभिप्रायभेदेनार्थभेदोतः काकुरुच्चारणधर्मः (पाठधर्मो) नालङ्कारत्वकोटीमाटीकते इतिग्रन्थकाराशयः। यत्र वाक्यं स्वाकांक्षानिवृत्त्यर्थं वाक्यान्तरोपादानमाकाङ्क्षति सा काकुः साकाङ्क्षा। यत्र वाक्योच्चारणान्तरं सम्पद्यते सा निराकाङ्क्षा काकुः। एवं च तदेव वाक्यं काकुविशेषेण सम्बद्धं सत् साकांक्षम्। काकुमन्तरेणेति पाठः। तस्यार्थः काकुं विना। (काक्वन्तरेणेति पाठे सामान्यकाक्वा) जातं तदेव वाक्यं निराकांक्षम्। तां विभिनत्ति-आक्षेपेति। आक्षेपो निषेधो गर्भे यस्याःसा आक्षेपगर्भा। तत्राक्षेपगर्भामुदाहरति-यदि म इति। यदि मे दूती ते वल्लभा, तदाहमपि ते वल्लभा। यदि तस्या वाचः प्रियास्तदा हे प्रिय! ममापि

एवमेव निर्देष्टुर्विधिरूपा । प्रश्नगर्भा—

"गतः स कालो यत्रासीन्मुक्तानां जन्म वल्लिषु ।
वर्त्तन्ते साम्प्रतं तासां हेतवः शुक्तिसम्पुटाः ॥"

इयमेवोपदेष्टुरुत्तररूपा । वितर्कगर्भा—

"नवजलधरः सन्नद्धोऽयं न दृप्तनिशाचरः
सुरधनुरिदं दूराकृष्टं न नाम शरासनम् ।
अयमपि पटुर्धारासारो न बाणपरम्परा
कनकनिकषस्निग्धा विद्युत्प्रिया न ममोर्वशी ॥"

इयमेवोपदेष्टुर्निर्णयरूपा । ता इमास्तिस्रोऽपि नियतनिबन्धाः । तद्विपरीताः पुनरनन्ताः । तत्राभ्युपगमानुनयकाकू—

---

वाचः प्रियाः । अत्र यदि दूतीवल्लभा तदाहमपि वल्लभेत्यादिसरलोक्त्या शठनायकविषया कृत्रिमा प्रीतिः प्रतीयते काक्वा तु दूतीनां वल्लवात्वे कुतोऽस्माकं वल्लभात्वमित्याक्षेपः प्रतीयते यद्येतद्वाक्यं निर्देशकर्तुः, तर्हि इयमेव विधिरूपा । गत इति । स समयो गतः । यत्र काले मुक्तानां जन्म वल्लिषु लतासु आसीत् । साम्प्रतं तासां मुक्तानां हेतवः कारणानि शुक्तिसम्पुटाः शुक्तीनां समुद्रकाः वर्त्तन्ते । अत्र गतः किमिति स्यात्तर्हि प्रश्नगर्भा साकांक्षाकाकुः । गत एवेति चेत्तर्हि उत्तररूपा निराकांक्षाकाकुः ।

नवजलेति । विक्रमोर्वशीये चतुर्थेऽङ्के उर्वशीविरहे पुरूरवसो मेघादौ निशाचरादिभ्रमानन्तरं विशेषदर्शने सति उक्तिरियम् । अयं सन्नद्धः उद्यतो नवोजलधरो मेघो वर्त्तते । न दृप्तनिशाचरो सन्नद्धो हन्तुमुद्यतोऽस्ति । इदं दूरमाकृष्टं सुरधनुरिन्द्रधनुः, वर्त्तते न तस्य राक्षसस्य शरासनं वाणासनं धनुरित्यर्थः । अयमपि पटुस्तीव्रः धारासारो धारावर्षः वर्त्तते न वाणपरम्परा पतति इति शेषः । इयमपि कनकस्य निकषः कषणरेखा, तद्वत् स्निग्धा दीप्ता विद्युत् तडित् वर्त्तते, न मम प्रिया उर्वशी अस्ति । अत्र संनह्यत्वात् नवजलधरोयं वा दृप्तनिशाचरो वा इति वितर्कमूलत्वाद्वितर्कगर्भा । इयमेव नवजलधर एव न दृप्तनिशाचर इति कृते उपदेष्टुः निर्णयरूपा निराकाङ्क्षाकाकुः ।

ततः पूर्वोक्ता इमास्तिस्रोः नियतनिबन्धाः निश्चितग्रथनाः । आभ्यो विपरीता भिन्नास्तु अनन्तसंख्याकाः । तत्र एतद्भिन्नासु काकुषु । अभ्युपगमश्च अनुनयश्च । ते च ते काकू इति अभ्युपगमानुनयकाकू । स्वीकारविनयविशिष्टे काकू । तत्रोदाहरणं युष्मदिति ।

"युष्मच्छासनलङ्घनाम्भसि मया मग्नेन नाम स्थितं
प्राप्ता नाम विगर्हणा स्थितिमतां मध्येऽनुजानामपि।
क्रोधोल्लासितशोणितारुणगदस्योच्छिन्दतः कौरवा-
नद्यैकं दिवसं ममाऽसि न गुरुर्नाऽहं विधेयस्तव॥"

अभ्यनुज्ञोपहासकाकू—

"मथ्नामि कौरवशतं समरे न कोपाद् दुःशासनस्य रुधिरं न पिबाम्युरस्तः।
सञ्चूर्णयामि गदया न सुयोधनोरू सन्धिं करोतु भवतां नृपतिः पणेन॥"

---

इयं युधिष्ठिरं प्रति क्रुद्धस्य भीमस्योक्तिः। युष्माकं शासनं युष्मच्छासनम्। तस्य लङ्घनमेवाम्भः। तस्मिन्। मग्नेन मज्जता मया स्थितं नाम। अर्थात् भवदाज्ञोल्लङ्घनं नाकरि। मया भवदाज्ञां लङ्घयितुं चेष्टितम्, परं न तत्कृतं गौरवात् अनुजैरर्जुन-प्रभृतिस्तु तथा चेष्टितमपि नैव, अतएव ते स्थितिमन्तः। तेषामनुजानामपि मध्ये विगर्हणा निन्दा प्राप्ता नाम। क्रोधेनोल्लासितं यच्छोणितं तेन अरुणा रक्ता गदा यस्य तस्य कौरवानुच्छिन्दतो विनाशयतो मम भीमस्य, त्वमद्य एकं दिवसं यावत् न गुरुरसि, अहं तव युधिष्ठिरस्य विधेयो विनयग्राही नास्मि।

अत्र पूर्वार्धे मया मग्नेन स्थितं नामेति, विगर्हणा प्राप्ता नामेति चाभ्युपगमकाकुः, तया काका भवदाज्ञोल्लंघनमकारीति प्रतीयते! अद्यैव केवलं त्वं गुरुर्नासि, अहं च तव विधेयो नास्मीति अनुनयकाकुः, तया काका अद्य यत्किमपि कुर्यां तत्क्षन्तव्यं ततः परं भवान् गुरुरहं दास इति प्रतीयते।

अभ्यनुज्ञा च उपहासश्चेति। ते च ते काकू चेति। अभ्यनुज्ञोपहासकाकू। तयो-रुदाहरणं यथा—मथ्नामीति। वेणीसंहारे प्रथमांके संधिश्रवणकुपितस्य भीमसेनस्य सहदेवं प्रत्युक्तिरियम्। अहं समरे युद्धे कोपात् कौरवाणां दुर्योधनप्रभृतीनां शतं न मथ्नामि। मथ्नामीत्यत्र क्रोधातिशयाद्वर्तमानताव्यपदेशः। यद्वा वर्तमानसामीप्ये वर्तमानवत्प्रयोगः। दुःशासनस्य उरस्तः हृदयात् रुधिरं रक्तं न पिबामि। सुयोध-नस्य दुर्योधनस्य ऊरू सक्थियुग्मं गदया न संचूर्णयामि। भवतां नृपतिः, राजा युधिष्ठिरः न तु मम प्रजानां वा नृपतिः। पणेन ग्रामपञ्चकरूपेण संधिं मैत्रीं करोतु।

अत्र प्रतिज्ञातकुरुकुलक्षयस्य भीमस्य न मन्थामीत्युक्तिर्विरुद्धेति नञि अभ्यु-पगमकाकुः प्रतीयते। तया काक्वा प्रतीयमानं नञर्थान्तरं "न मन्थामीति न" इत्ये-वंरीत्या प्रकृथतान्वयि, इति अभावाभावरूपं मथ्नाम्येवेत्यवधारणं व्यज्यते। भवतां नृपतिरित्यत्रोपहासकाकुः प्रतीयते॥

एवं त्रिचतुरकाकुयोगोऽपि। तत्र त्रियोगः—

"सेयं पश्यति नो कुरङ्गकवधूस्त्रस्तैवमुद्वीक्षते
तस्याः पाणिरयं न मारुतवलत्पत्राङ्गुलिः पल्लवः।
तारं रोदिति सैव नैष मरुता वेणुः समापूर्यते
सेयं मामभिभाषते प्रियतमा नो कोकिलः कूजति॥"

चतुर्योगः—

"उच्यतां स वचनीयमशेषं नेश्वरे परुषता सखि साध्वी।
आनयैनमनुनीय कथं वा विप्रियाणि जनयन्ननुनेयः॥"

"सख्या वा नायिकाया वा सखीनायिकयोरथ।

---

एवं तिसृणां चतसृणां काकूनां योगोपि भवति। तत्र तिसृणां काकूनां योगो यथा—सेयं पश्यति—इति। सर्वतः पुष्पितं वसन्तमालोक्य "अपश्यत्तन्मयं विरहे" इति दशापन्नः कश्चिद्विरही नायिकाकर्तृकदर्शनादौ मृगवधूकर्तृकदर्शनभ्रमानन्तरं विशेषदर्शने सति कथयति।

सेयं मत्प्राणेश्वरी पश्यति, नो कुरङ्गकबधू मृगवधूः, त्रस्ता सती एवमुद्वीक्षते। अयं प्रत्यक्षभूतः तस्या नायिकाया पाणिः करोऽस्ति। न तु मारुतेन वलन्ति पत्राण्येवाङ्गुलयो यस्मिन् स। एवम्भूतः पल्लवो वर्त्तते। सैव नायिका एव तारं यथास्यात्तथा रोदिति, न तु एष वेणुः कीचको मरुता वायुना समापूर्यते। सेयं प्रियतमा मामभिभाषते ह्वयति नो कोकिलो कूजति शब्दायते। अत्र निर्देष्टुः सेयं प्राणेश्वरी पश्यति किमु? यतो मृगवधूरेवं नोद्वीक्षते इत्येवंवितर्कगर्भा काकुः। इयमेवोपदेष्टः "सेयमेव पश्यति नान्या" इत्येवं रूपानिर्णयकाकुः।

चतसृणां काकूनां योगो यथा—उच्यतामिति। नायिका स्वसखीं प्रति कथयति। मया स (तस्मै,) अशेषं सम्पूर्णं वचनीयं निन्दावाक्यमुच्यताम् उक्तः। तदेव वाक्यं सखी काक्वा प्रतिवदति—उच्यतां स वचनीयमशेषम् किमु? नोच्यता मित्यर्थः। सेत्यत्र उच्यतामिति ब्रूञ् धातोः द्विकर्मकतया तदः सम्प्रदानाविवक्षया अकथितं चेति कर्मसंज्ञा, तत्रैव गौणे कर्मणि दुह्यादेरिति स्मृत्या लकारः। सखी वदति हेसखि! ईश्वरे स्वामिनि परुषता निष्ठुरता साध्वी उचिता न। इदेव वाक्यं द्वितीया काक्वा सखी वक्ति—नेश्वरे परुषता सखि? साध्वी अपितु साध्वी एवेत्युभ्युपगमकाकुः। अपरा सखी वदति यद्ययं निन्दावाक्येन रुष्टस्तर्हि एनमनुनीय आनय। विप्रियाणि विरुद्धानि जनयन् स कथमिवानुनेयः। वा शब्दः इवार्थे। "इववद्वायथाशब्दौ" इति कोषः अत्र पूर्वोक्ते द्वे काकू उपदेष्टृनिर्देष्टृभेदेन चतुर्विधे। एवमत्र सखीनां भूयसीनां मिथः संलापो वर्त्तत अत एवोक्तं ग्रन्थकृता सख्यावेति।

सखीनां भूयसीनां वा वाक्ये काकुरिह स्थिता ॥
पदवाक्यविदां मार्गो योऽन्यथैव व्यवस्थितः ।
स त्वाङ्गाभिनयद्योत्यः तं काकुः कुरुतेऽन्यथा ॥
अयं काकुकृतो लोके व्यवहारो न केवलं ।
शास्त्रेष्वप्यस्य साम्राज्यं काव्यस्याप्येष जीवितम् ॥
कामं विवृणुते काकुरर्थान्तरमतन्द्रिता ।
स्फुटीकरोति तु सतां भावाभिनयचातुरीम् ॥
इत्थं कविर्निबध्नीयादित्थं च मतिमान्पठेत् ।
यथा निबन्धनिगदश्छायां काञ्चिन्निषिञ्चति ॥
करोति काव्यं प्रायेण संस्कृतात्मा यथा तथा ।
पठितुं वेत्ति स परं यस्य सिद्धा सरस्वती ॥

---

इह उच्यतामिति पद्ये सख्या वाक्ये काकुः, नायिकाया वाक्ये च काकुः । अथ अनन्तरं सखीनायिकयो र्वाक्ये काकुः । अथवा भूयसीनां सखीनां वाक्ये काकुः स्थिता।

ननु काकुः किमर्थं स्वीक्रियत इति चेत्, अन्याभिप्रायकं वाक्यमन्यथाकरणार्थमिति दर्शयति—पदवाक्येति । यः पदवाक्यविदां वैयाकरणमीमांसकानां मार्गो रीतिः अन्यथा एव विभिन्नसिद्धान्तत्वेन व्यवस्थितः, स आङ्गाभिनयद्योत्यो वर्त्तते, तु किन्तु तमाङ्गाभिनयद्योत्यं मार्गं काकुरन्यथा कुरुते ।

नन्वियं स्वरविकाररूपा काकुर्लौकिकानां वाक्येषु एव दरीदृश्यते, कोऽत्रास्य प्रदर्शनावसर इति चेत्। न । न केवलं लोकवाक्ये शास्त्रादिष्वपि तस्या स्थितिरिति निर्दिशति-'अयमिति । जीवितं प्राणः चमत्कारजनकमिति यावत् ।

काममिति । अतन्द्रिता आलस्यरहिता शुद्धोच्चारितेति भावः । भावाभिनयचातुरीम् भावानामभिनये प्रकाशन इति यावत् चातुरीं वैदग्धीम् ।

अभिप्रायवत्पाठधर्मरूपायाः काका निर्देशप्रसङ्गेन पाठप्रतिष्ठां व्यवस्थापयति । यत्सूत्रं पाठप्रतिष्ठा । पाठस्य विशेषस्योक्तत्वात् सामान्यस्य उच्चारणस्य प्रतिष्ठा आस्पदं मर्यादेति यावत् । निर्दिश्यते । इत्थमिति । निबन्धनिगदः प्रबन्धपाठः । काञ्चिच्छायां सुषमाम् । निषिञ्चति वर्षति आलोकयतीति यावत् ।

पाठवेत्तृत्वं काचित्कमिति प्रकटीकरोति-करोतीति । संस्कृतः काव्यस्य निर्माणे तद्गतपदार्थानां युक्तस्थाननिवेशने च परिपक्वः आत्मा चित्तं यस्यासौ संस्कृतात्मा । काव्यज्ञ इति यावत् । प्रायेण बाहुल्येन ।

यथा जन्मान्तराभ्यासात्कण्ठे कस्यापि रक्तता ।
तथैव पाठसौन्दर्यं नैकजन्मविनिर्मितम् ॥
ससंस्कृतमपभ्रंशं लालित्यालिङ्गितं पठेत् ।
प्राकृतं भूतभाषां च सौष्ठवोत्तरमुद्गिरेत् ॥
प्रसन्ने मन्द्रयेद्वाचं तारयेत्तद्विरोधिनि ।
मन्द्रतारौ च रचयेन्निर्वाहिणि यथोत्तरम् ॥
ललितं काकुसमन्वितमुज्ज्वलमर्थवशकृतपरिच्छेदम् ।
श्रुतिसुखविविक्तवर्णं कवयः पाठं प्रशंसन्ति ॥
अतितूर्णमतिविलम्बितमुल्बणनादं च नादहीनं च ।
अपदच्छिन्नमनावृतमतिमृदुपरुषं च निन्दन्ति ॥

---

तत्र दृष्टान्तः । यथेति । यथा जन्मान्तरीणपौनः पुन्येन प्रवृत्तेः कस्यापि धन्यस्य पुंसः कण्ठे रक्तता अनुरागता लालिमा वा । तथैव पाठसौन्दर्यमुच्चारणकौशलम् । नैकेन वहुना जन्मना विनिर्मितम् ।

उच्चारणशैलीं निर्दिशति—ससंस्कृतमिति । संस्कृतेन सहितं ससंस्कृतम्, अपभ्रंशम् । ललितं यथा स्यात्तथा पठेत् । प्राकृतं भूतभाषां पैशाचीं उत्तरोत्तरं सुन्दरं यथा स्यात्तथा उद्गिरेत् पठेत् ।

प्रसन्न इति । प्रसन्ने प्रसादगुणयुक्ते काव्ये अर्थात् तादृशकाव्योच्चारणप्रसङ्गे वाच मन्द्रयेत् गम्भीरयेत तद्विरोधिनि ओजस्विनि वाचं तारयेत् उच्चैः कुर्यात् । यथोत्तरं निर्वाहिणि काव्ये मन्द्रतारे वाचौ रचयेत् ।

प्रशस्तपाठस्वरूपं प्रकटीकरोति—ललितमिति । ललितं सुन्दरं, काका युक्तम्, उज्वलं महार्थम्, अर्थवशेन कृतः परिच्छेदो विभागो यत्र तम्, श्रुतिसुखकराः विविक्ता व्यक्ता वर्णा यत्र तं पाठं कवयः प्रशंसन्ति ।

तथा चोक्तम्—

माधुर्यमक्षरव्यक्तिः पदच्छेदस्तु सस्वरः ।
धैर्यं लयसमर्थं च षडेते पाठका गुणा ॥ इति ।

प्रसंगान्निन्दितपाठस्वरूपं दर्शयति—अतितूर्णमिति । अतितूर्णं शीघ्रम् । अतिविलम्वितं अतिशनैः कृतम्, । उल्वणनादमुत्कटध्वनिम् । नादहीनम् ध्वनिरहितम् अपदच्छिन्नं पदच्छेदरहितम् । अनावृतमावृतिरहितम् अव्यक्तमिति यावत् । अतिमृदु कोमलं परुषमतिकठिनं पाठं निन्दन्ति । तथा चोक्तम्—

शंकितं भीतमुद्घुष्टमव्यक्तमनुनासिकम् ।

गम्भीरत्वमनैश्वर्यं निर्व्यूढिस्तारमन्द्रयोः।
संयुक्तवर्णलावण्यमिति पाठगुणाः स्मृताः॥
यथा व्याघ्री हरेत्पुत्रान् दंष्ट्राभिश्च न पीडयेत्।
भीता पतनभेदाभ्यां तद्वद्वर्णान्प्रयोजयेत्॥
विभक्तयः स्फुटा यत्र समासश्चाकदर्थितः।
अम्लानः पदसन्धिश्च तत्र पाठः प्रतिष्ठितः॥
न व्यस्तपदयोरैक्यं न भिदां तु समस्तयोः।
न चाख्यातपदम्लानिं विदधीत सुधीः पठन्॥
आगोपालकमायोषिदास्तामेतस्य लेह्यता।
इत्थं कविः पठन्काव्यं वाग्देव्या अतिवल्लभः॥
येऽपि शब्दविदो नैव नैव चार्थविचक्षणाः।

---

विस्वरं विरसं चैव विश्लिष्टं विसमाहितम्।
काकस्वरं निरसितं तथा स्थानविवर्जितम्॥
व्याकुलं तालहीनं च पाठदोषाश्चतुर्दश।
संगीतं शिरसः कम्पमल्पकण्ठमनर्थकम्॥
इति मार्कण्डेयपुराणे।

गम्भीरत्वमिति। गम्भीरत्वम्, अवैस्वर्य्यम् विस्वरतारहितम्। तथा तारमन्द्रयोः स्वरयोर्निर्व्यूढि निर्वहणम्। संयुक्तवर्णानां लावण्यम्। इति पाठगुणाः स्मृताः।

तत्रोदाहरणं पाणिनीयशिक्षागतम्—यथेति। यथा येन प्रकारेण पतनभेदाभ्यां भीता। दंष्ट्राणां शैथिल्ये पतनभयं किञ्चिद् दार्ढ्यें छेदभयमतो मध्यमभावमाश्रिता। पुत्रान् हरेत् हरति, दंष्ट्राभिश्च न पीडयति। तद्वद्वर्णान् प्रयोजयेत् प्रयुञ्जीत।

विभक्तय इति। अकदर्थितोऽकुत्सितीकृतार्थः अम्लानोऽविकृतः। यथा "चलण्डामरवेष्टितः," "उर्व्यसावत्र तर्वाली" इत्यादौ।

न व्यस्तेति। व्यस्तपदयोः पृथक्पदयोः। भिदां भेदम्। आख्यातपदस्य तिङन्तपदस्य म्लानिं विकृतिम्।

आगोपालकमिति। आगोपालकम्, आयोषिदित्यत्राभिव्याप्तावाङ्। लेह्यता आस्वाद्यता। उच्चारणप्रियतेति भावः।

येपि शब्दविद इति। ये जना शब्दविदो न शब्दज्ञा अर्थात् वैयाकरणा न। ये अर्थे पदार्थे विचक्षणाः कुशलाः, पदार्थज्ञा नैयायिका न वर्त्तन्ते। तेषामपि शब्दार्थोभयाज्ञानिनामपि सतां संगीतविदुषां पाठः कर्णे रसायनमिवोपकारीभवति।

तेषामपि सतां पाठः सुष्ठु कणरसायनम् ॥
पठन्ति संस्कृतं सुष्ठु कुण्ठाः प्राकृतवाचि तु ।
वाराणसीतः पूर्वेण ये केचिन्मगधादयाः ॥"

आह स्म—"ब्रह्मन्विज्ञापयामि त्वां स्वाधिकारजिहासया ।
गौडस्त्यजतु वा गाथामन्या वाऽस्तु सरस्वती ॥
नातिस्पष्टो न चाश्लिष्टो न रूक्षो नातिकोमलः ।
न मन्द्रो नातितारश्च पाठी गौडेषु वाडवः ॥
रसः कोऽप्यस्तु काप्यस्तु रीतिः कोऽप्यस्तु वा गुणः ।
सगर्वं सर्वकर्णाटाष्टंकारोत्तरपाठिनः ॥
गद्ये पद्येऽथवा मिश्रे काव्ये काव्यमना अपि ।
गेयगर्भे स्थितः पाठे सर्वोऽपि द्रविडः कविः ॥
पठन्ति लटभं लाटाः प्राकृतं संस्कृतद्विषः ।
जिह्वया ललितोल्लापलब्धसौन्दर्यमुद्रया ॥
सुराष्ट्रत्रवणाद्या ये पठन्त्यर्पितसौष्टवम् ।

---

पठन्तीति । कुण्ठा अनभिज्ञा उच्चारणशक्तिरहिता इत्यर्थः । पूर्वेण पूर्वम् । द्वितीयाया एनप् । एनपा द्वितीया । इति सूत्रद्वयस्य लक्ष्यम् ।

आह स्मेति उक्तार्थं द्रढयति । ब्रह्मन्निति । स्वस्य शब्दाधिष्ठातृत्वरूपाधिकारस्य जिहासया हातुमिच्छया । गाथां गाथोच्चारणम् ।

अथ देशभेदेन पाठप्रतिष्ठां दर्शयति—नातिस्पष्ट इति । नातिस्पष्टः नातिस्वच्छः । न च अश्लिष्टः श्लिष्ट एव मिलित एव । रूक्षो न अर्थात् अस्निग्धः । नातिकोमलः नातीवपेशलः । न मन्द्रो गम्भीरः। नातितारो नात्युच्चैः पाठी पठनशीलो वाडवो ब्राह्मणो गौडेषु गौडदेशेषु वर्त्तते ।

रसः कोपीति । सगर्वं गर्वसहितम् । सर्वकर्णाटदेशवासिनः । टमिति शब्द उत्तरकाले पठितुं शीलमेषां ते टंकारोत्तरपाठिनः ।

गद्ये पद्ये—इति । गद्ये पद्ये अथवा मिश्रे काव्ये सर्वत्रैवेत्यर्थः काव्यमनाः अपि काव्यमिदमिति जानन्नपि इत्यर्थः । सर्वो द्रविडः कविः गेयगर्भे पाठे स्थितो वर्तते स्वरेणैव पठन् शीलो भवति । इत्यन्वयः ।

पठन्तीति । लटभं मनोज्ञम् । ललितो य उल्लापः उच्चारणं तेन लब्धा सौन्दर्यस्य मुद्रा यथा तथा ।

सुराष्ट्रेति । त्रवणो देशः । ट्रावनकोर इति प्रसिद्धः । अपभ्रंशेन अपभ्रंशभाषया अवदर्श्यंते भक्ष्यन्ते चर्व्यन्ते यानि तानि अपभ्रंशावदंशानि अपभ्रंशभाषास-

अपभ्रंशावदंशानि ते संस्कृतवचांस्यपि ॥
शारदायाः प्रसादेन काश्मीरः सुकविर्जनः।
कर्णे गुडूचीगण्डूषस्तेषां पाठक्रमः किमु ! ॥
ततः पुरस्तात्कवयो ये भवन्त्युत्तरापथे।
ते महत्यपि संस्कारे सानुनासिकपाठिनः ॥
मार्गानुगेन निनदेन निधिर्गुणानां सम्पूर्णवर्णरचनो यतिभिर्विभक्तः।
पाञ्चालमण्डलभुवां सुभगः कवीनां श्रोत्रे मधु क्षरति किञ्चन काव्यपाठः ॥
ललल्लकारया जिह्वाजर्जरस्फाररेफया।
गिरा भुजङ्गाः पूज्यन्ते काव्यभव्यधियो न तु ॥
पञ्चस्थानसमुद्भववर्णेषु यथास्वरूपनिष्पत्तिः।
अर्थवशेन च विरतिः सर्वस्वमिदं हि पाठस्य ॥"

---

न्मिलितानि।

शारदाया इति। गुडूच्या अमृताया इव गण्डूषो यस्य। किमुः विमर्शे। किमु-संभावनायां स्याद्विमर्शे चापि दृश्यते। तेषां पाठक्रमः कर्णे गुडूचीगण्डूष इति विमर्शः सिद्धविचारः। इति तत्वम्।

तत इति। ततः पुरस्तात् काश्मीरात्पूर्वस्यां दिशि। संस्कारे व्याकरणजनित-शब्दोच्चारणविषयकविशोधने जातेऽपि।

मार्गानुगेनेति। मार्गं रीतिमनुगच्छतीति तेन निनदेन ध्वनिना गुणानां निधिराकरो भवति। एतेन पाठगतं सौस्वर्य्यमभिहितं लयसामर्थ्यं च। सम्पूर्णा वर्णानां रचना यत्रासौ। एतेन अक्षरव्यक्तिरुक्ता। यतिभिश्छेदैर्विभक्तः प्राप्तविभागः। एतेन पदच्छेदो गुणः समर्थितः। अत एव सुभगः सुन्दरः पाञ्चालमण्डलोत्पन्नानां कवीनां काव्यपाठः श्रोत्रे कर्णे किञ्चन मधु माधुर्यं क्षरति निषिञ्चति।

ललल्लकारयेति। ललन्तो लकारा यासु तथा जर्जरा खण्डिता अर्धा इति यावत्। स्फाराः विस्तृता सम्पूर्णा इत्यर्थः रेफा यासु तथा। गिरा वाण्या। जिह्वा इति पाठः। जिह्वा कुटिला भुजंगा भुजंगसदृशकठोरा नैयायिका वैयकरणा पूज्यन्ते आद्रियन्ते। तेषां तथावचसामेवादरः। काव्यभावनापरिपक्वबुद्धयस्तु न पूज्यन्ते। तेषां तु कोमलमसृणमधुरवचसामेवादरः।

पञ्चस्थानेति। पञ्चस्थानेभ्यः स्वजनकपञ्चधाविभक्तस्थलेभ्यः समुद्भवो येषां वर्णानां तेषु। वर्णानां पञ्चस्थानसमुद्भवत्वमुक्तं यथा—

स्वरतः कालतः स्थानात्प्रयत्नानुप्रदानतः।
इति वर्णविदः प्राहुर्निपुणं तन्निबोधत ॥ इति।

सकाकुकलना पाठप्रतिष्ठेयं प्रतिष्ठिता ।
अर्थानुशासनस्याथ प्रकारः परिकीर्त्त्यते ॥

॥ इति राजशेखरकृतौ काव्यमीमांसायां कविरहस्ये प्रथमेऽधिकरणे सप्तमोऽध्यायः वाक्यविशेषाः काकुकलना पाठप्रतिष्ठा च ॥

---

## अष्टमोऽध्यायः

# काव्यार्थयोनयः ।

"श्रुतिः, स्मृतिः, इतिहासः, पुराणं, प्रमाणविद्या, राजसिद्धान्तत्रयी, लोको, विरचना, प्रकीर्णकं च काव्यार्थानां द्वादश योनयः" इति आचा-

---

यथास्वरूपनिष्पत्तिः स्वस्वरूपसम्प्राप्तिः । अर्थवशेन अर्थानुरोधेन विरतिः परिच्छेदश्च कर्त्तव्यः । हि यतः इदं सर्वं पाठस्य सर्वस्वं प्राणभूतम् ।

उपसंहरति सकाकुकलनेति । काकाः कलनया सहिता इयं पाठप्रतिष्ठा। प्रतिष्ठिता प्रतिष्ठापिता । अन्तर्भावितणिजर्थः । अथोनन्तरमष्टमाध्याये अर्थानुशासनस्य प्रकारः परिकीर्त्त्यते । परिकीर्त्तयिष्यामहे इति भावः वर्त्तमानसमीप्ये वर्त्तमानवद्वेति लट् ।

इति साहित्याचार्याहिताग्निश्रीमधुसूदनशास्त्रिणः कृतौ मधुसूदनीविवृतौ वाक्यविधि काकुलना पाठप्रतिष्ठानामसप्तमोऽध्यायः संपूर्त्तिमगात् ।

---

॥ श्रीः ॥

अभिनन्द्य नन्दबालं काव्ये सर्वार्थबीजरूपं तम्
व्याख्याम्यष्टमकाध्याये काव्यार्थकारणान् मासान् ।

अथ सप्तमाध्यायपर्यन्तमाचूडं काव्यविषयमालोचितम् । अतः परं तद्वर्णनीयोर्थः कीदृक्, क्वोपलभ्यते इति विवेचयितुं सूत्रमासूत्रयति—काव्यार्थयोनयः । काव्यस्यार्थः काव्यार्थस्तस्य योनयः कारणानि वक्ष्यामहे इति सूत्रार्थः ।

श्रुतिर्वेदः। स्मृतिः मन्वादिप्रणीतधर्मशास्त्रम् । इतिहासः स्वनामख्यातः । पुराणं प्रसिद्धम् । प्रमीयन्ते प्रमाविषयीक्रियन्ते पदार्थाः अनेनेति प्रमाणं मीमांसा षड्विधस्तर्कश्च तस्य विद्या । समयप्राप्तविद्या समयविद्या तात्कालिकराष्ट्रविद्या । यथा स्वस्वसमये राष्ट्रभाषाया हिन्द्याः, राजभाषाया अंग्रेजीति प्रथिताया, यवनभाषाया उर्दू इति प्रसिद्धाया विज्ञानमावश्यकम् । अथवा समयः सिद्धान्तस्तस्य विद्या । राजसिद्धान्तानां अर्थनाट्यकामशास्त्राणां वा प्रभावोत्साहमन्त्ररूपाणां शक्तीनां वा त्रयी । लोको लोकवृत्तम् । विरचना महाकाव्यानि। प्रकीर्णकम् उक्तेभ्योऽन्यद् गजतुरगखड्गवृक्षलक्षणायुर्वे-

र्याः । "उचितसंयोगेन, योक्तृसंयोगेन, उत्पाद्यसंयोगेन, संयोगविकारेण च सह षोडश" इति यायावरीयः । तत्र श्रौतः । "उर्वशी हाप्सराः पुरूरवसमैडं चकमे" । अत्रार्थे—

"चन्द्राद् बुधः समभवद्भगवान्नरेन्द्रमाद्यं पुरूरवसमैडमसावसूत ।
तं चाप्सराः स्मरवती चकमे किमन्यदत्रोर्वशी स्मितवशीकृतशक्रचेताः ॥"

यथा वा—"यदेतन्मण्डलं तपति तन्महदुक्थं ता ऋचः स ऋचां लोकोऽथ यदेतदर्चिर्दीप्यते तन्महाव्रतं तानि सामानि स साम्नां लोकोऽथ य

---

दज्यौतिषप्रभृति शास्त्रम् काव्यार्थानां काव्यगतत्वेन वर्णनीयार्थानां योनयः कारणानि द्वादश द्विरावृत्ताः षट् । इत्याचार्या भामहादयः ।

तदुक्तं भामहेन—

शब्दश्छन्दोऽभिधानार्था इतिहासाश्रयाः कथाः ।
लोको युक्तिः कलाश्चेति मन्तव्याः काव्ययोनयः ॥ इति ।
लोको विद्या प्रकीर्णं च काव्याङ्गानि । इति ॥

लोको लोकवृत्तमिति वामनाचार्यः । स्वमतं प्रस्तौति—उचितेति । वर्णनीयकाव्यार्थानां मिथः उचितो योग्यः सम्बन्धो यत्र तेन । योक्तृसंयोगेन उत्तरोत्तरं सम्बन्धकारिसम्बन्धेन । उत्पाद्यसंयोगेन संभाव्यमानतया संपाद्यसम्बन्धेन । संयोगविकारेण संयोगस्य लक्षणया संयुक्तस्य अथवा संयोगेन विकारस्तेन । इत्येवं चतुर्भिः काव्यार्थः सह पूर्वं द्वादश मिलिताः षोडश इति ग्रन्थकारः ।

तत्र षोडशकाव्यार्थेषु श्रौतः श्रुतिप्रतिपाद्योऽर्थो यथा—उर्वशीति । एतन्मंत्रभागः ऐतरेयब्राह्मणस्य । उर्वशी नामाप्सरा देववेश्या ऐडं (लं) पुरूरवसं एतन्नामकं चन्द्रवंशसम्भूतं राजानं चकमे । ग्राम्यधर्माय इयेष । अत्रास्मिन् श्रुतिप्रतिपादितार्थविषये काव्यार्थो यथा ।

चन्द्रादिति । चन्द्राद् बुधः समभवत् । असौ भगवान् बुधः आद्यं नरेन्द्रमैडं पुरूरवसं प्रासोष्ट । तमैडं स्मरवती कामार्त्ता असौ उर्वशी चकमेऽत्राप्सरोविषये किमन्यद् वक्तव्यम् । साप्सराः स्मितेन अलक्ष्यदन्तमुकुलहास्येन वशीकृतं शक्रस्य चेतो यया सा । वर्त्तते ।

यथा वेति तैत्तिरेयारण्यकस्य चतुर्दशानुवाकमुदाहरति यदेतदिति । अत्र आदित्यमण्डले परब्रह्मोपसनां कथयति । यद् एतदस्माभिर्दृश्यमानं मण्डलं वर्त्तुलाकारमुष्णं तेजस्तपति तत्तत्र महत् वृहत् उक्थं सामविशेषः । (तत्र मण्डले) ता अध्यापकप्रसिद्धा "अग्निमीले" इत्यादिका ऋचो वर्त्तन्ते स ऋग्भिर्निष्पादितो मण्डलभागः ऋचामृगभिमानिदेवतानां लोको निवासस्थानम् ।

एष तस्मिन्मण्डले पुरुषः सोऽग्निस्तानि यजूंषि स यजुषां लोकः सैषा त्रय्येव विद्या तपति।"

अत्रार्थे—"एतद्यन्मण्डलं खे तपति दिनकृतस्ता ऋचोऽर्चींषि यानि
द्योतन्ते तानि सामान्ययमपि पुरुषो मण्डलेऽणुर्यजूंषि।
एवं यं वेद वेदत्रितयमयमयं वेदवेदी समग्रो
वर्गःस्वर्गापवर्गप्रकृतिरविकृतिः सोऽस्तु सूर्यः श्रिये वः॥"

तच्चेदं वेदहरणं यदित्थं कथयन्ति—

"नमोऽस्तु तस्यै श्रुतये यां दुहन्ति पदे पदे।
ऋषयः शास्त्रकाराश्च कवयश्च यथामति॥"

---

एवमृगात्मकत्वं मण्डलस्य ध्यात्वा अथानन्तरं सामात्मकत्वं तत्र ध्यातव्यम्। कथमिति तदुच्यते—यदेतदर्चिर्दीप्यते भास्वरं तेजः प्रकाशते, तन्महाव्रतम् तानि अर्चिःस्वरूपाणि बृहद्रथन्तरादिसामानीति ध्यायेत्। सोऽर्चिर्भागः साम्नां सामाभिमानिदेवतानां लोको निवासस्थानम्। अथ सामध्यानानन्तरं तस्य यजुरात्मकत्वं ध्यातव्यम्। कथमिति तदुच्यते। य एष शास्त्रप्रसिद्ध एतस्मिन् दृश्यमाने मण्डले पुरुषो देवतात्मा वर्त्तते। सो ऽग्निः तानि देवतास्वरूपाणि यजूंषि इषेत्वोर्जेत्वेत्यादीनि ध्यायेत्। स यजुर्भागो यजुषां यजुरभिमानिदेवतानां लोको निवासस्थानम्। सैषा मण्डलतदर्चिस्तत्रत्यपुरुषरूपा त्रयी एव ऋग्यजुःसामात्मिका एव विद्या तपति प्रकाशते। इति।

तैत्तिरेयारण्यकस्य चतुर्दशानुवाकप्रतिपाद्यार्थविषये काव्यार्थो यथा। एतद्यदिति। ख आकाशे यदेतद् दिनकृतः सूर्यस्य मण्डलं तपति। ता ऋचः सन्ति। यानि अर्चींषि द्योतन्ते तानि सामानि। अयमपि अणुः पुरुषो मण्डले वर्त्तते। तानि यजूंषि सन्ति। एवममुना प्रकारेण वेदत्रितयमयम् ऋग्यजुःसामलक्षणं यं सूर्यं वेद। अयं स श्रुत्यादिषु प्रार्थितो वेदवेदो वेदज्ञः, समग्रः सम्पूर्णः धर्मार्थकामानां वर्गः समुदायः, स्वर्गापवर्गयोस्त्रिदिवमोक्षयोः प्रकृतिः कारणम्। अविकृतः सर्वेषां प्रकृतिरूपत्वादकार्यरूपः सूर्यः वो युष्माकं श्रिये लक्ष्म्यै अस्तु भवतात्। अत्र निगदव्याख्यासङ्गतिः—

तच्चेदं पूर्वोक्तं वेदहरणं श्रुत्यर्थापहरणं वर्त्तते। यद्यस्मिन् वेदहरणविषय इत्थं जनाः कथयंति। नमोऽस्त्विति। तस्यै श्रुतये नमोऽस्तु, यां श्रुतिं ऋषयो मन्त्रद्रष्टारः, शास्त्रकाराः कणादगौतमप्रभृतयः, कवयो वाल्मीकिव्यासादयश्च पदे पदे स्थले २ वस्तुनि २ लक्ष्मणि २ काव्यव्यवसाये च दुहन्ति।

स्मार्त्त:—"बह्वर्थेष्वभियुक्तेन सर्वत्र व्यपलापिना ।
विभावितैकदेशेन देयं यदभियुज्यते ॥"
अत्रार्थे—"हंस प्रयच्छ मे कान्तां गतिस्तस्यास्त्वया हृता ।
सम्भावितकदेशेन देयं यदभियुज्यते ॥"
ऐतिहासिक:—"न स सङ्कुचितः पन्था येन वाली हतो गतः ।
समये तिष्ठ सुग्रीव मा वालिपथमन्वगाः ॥"
अत्र—"मदं नवैश्वर्यलवेन लम्भितं विसृज्य पूर्वः समयो विमृश्यताम् ।
जगज्जिघत्सातुरकण्ठपद्धतिर्न वालिनैवाहततृप्तिरन्तकः ॥"
पौराणिक:—"हिरण्यकशिपुर्दैत्यो यां यां स्मित्वाऽप्युदैक्षत ।

---

स्मार्त्तः स्मृतिप्रतिपाद्यार्थो यथा बह्वर्थेष्विति । बहुषु अर्थेषु विषयेषु अभियुक्तेन अभियोगिना सर्वत्र अभियोगेषु व्यपलापिना निह्नवकारिणा नैवं धारयामि नैवं कृतमित्युक्तिवतेति भावः । विभावितो दृष्ट एकदेश चोरितद्रव्यांशो यस्मिन्नेतादृशेन चौरेण तद्देयं यदस्मिञ्चौरे स्वामिना अभियुज्यते चोरितत्वेनारोप्यते ।

एतदर्थविषये काव्यार्थो यथा हंस प्रयच्छेति । हे हंस! मे मम कान्तां वल्लभां प्रयच्छ देहि । कथं त्वया ज्ञातं यन्मया तव कान्तापहृतेति अत आह—गतिरिति यत इत्यध्याहृत्य वाक्यं पूरणीयम् । यतस्त्वया अस्याः मे कान्ताया गतिर्गमनं हृता अपनीता अतो ज्ञायते सापि त्वयैवापहृता । एवं च विभातैकदेशेन दृष्टचोरित-द्रव्यांशेन चौरेण तद्वस्तु देयम् । यदस्योपरि अभयुज्यते चोरितद्रव्यस्य स्वामिना चोरितत्वेनारोप्यते । चौर्या एकदेशो यस्य सविधे दृष्टस्तेन तत्सर्वं प्रदातव्यमिति धर्मशास्त्रीयसिद्धान्तनुसारेण चोरितगतिना त्वया मे वल्लभा प्रदातव्येति भावः ।

ऐतिहासिकार्थो यथा—न स सङ्कुचित इति । रामायणे किष्कन्धाकाण्डे सुग्रीवं प्रति लक्ष्मणोक्तिः। हे सुग्रीव । स पन्थाः मार्गो न सङ्कुचितः न ह्रस्वतां गतः । येन पथा वाली तव ज्येष्ठभ्राता हतःसन् गतः । तस्मात् समये शपथपूर्वककृतप्रतिज्ञायां तिष्ठ स्थितिं कुरु वालिपथं वालिद्वारानुसृतमार्गं मा अन्वगाः मा गच्छ ।

अस्मिन्नर्थे काव्यार्थो यथा—मदमिति । नवैश्वर्यलवेन नूतनराज्यसमृद्धिलेशेन लम्भितं मदं विसृज्य पूर्वः प्राचीनः समयः कालो विमृश्यतां विचार्यताम् । नो चेत् शृणु । जगज्जिघत्सातुरकण्ठपद्धतिः । जगतो लोकस्य जिघत्सायामत्तुमिच्छाया-मातुरा लोलुपा कण्ठपद्धतिः गलदेशो यस्यासौ । अन्तको यमः । वालिनैव न आहिता कृता तृप्तिर्येनासौ । न कृततृप्तिकोऽस्ति ।

पौराणिकार्थो यथा-हिरण्यकशिपुरिति । श्रीमद्भागवतीयं पद्यम् । हिरण्यकशिपु-

भयभ्रान्तैः सुरैश्चक्रे तस्यै तस्यै दिशे नमः ॥"

अत्र—"स सञ्चरिष्णुर्भुवनत्रयेऽपि यां यदृच्छयाशिश्रियदाश्रयः श्रियः।
अकारि तस्यै मुकुटोपलस्खलत्करैस्त्रिसन्ध्यं त्रिदशैर्दिशे नमः ॥"

अत्राहुः—"श्रुतीनां साङ्गशाखानामितिहासपुराणयोः।
अर्थग्रन्थः कथाभ्यासः कवित्वस्यैकमौषधम् ॥
इतिहासपुराणाभ्यां चक्षुर्भ्यामिव सत्कविः।
विवेकाञ्जनशुद्धाभ्यां सूक्ष्ममप्यर्थमीक्षते ॥
वेदार्थस्य निबन्धेन श्लाघ्यन्ते कवयो यथा।
स्मृतीनामितिहासस्य पुराणस्य तथा तथा ॥"

---

दैत्यः स्मित्वापि यां दिशमुदैक्षत अवालोकिष्ट। भयेन भ्रान्तैः घूर्णितैः सुरैर्देवैस्तस्यै दिशे नमश्चक्रे। तस्य स्मितावलोकनेनैव अत्यन्तभीताः सुरा तस्यै दिशेऽपि प्रणेमुः किमुत साक्षात्तं दृष्ट्वा कुर्युरिति भावः।

अत्रार्थे काव्यार्थो यथा—स संचरिष्णुरिति। श्रियः सुरराजलक्ष्म्या आश्रयः स हिरण्यकशिपुः यदृच्छयाऽपि स्वेच्छयैव न तु युद्धकाम्यया सार्यं प्रातर्विहर्तुमित्यर्थः। भुवनत्रये संचारिष्णुः सन् यां दिशमशिश्रयत् अध्यतिष्ठत्। तदा मुकुटोपलेषु किरीटरत्नेषु स्खलन्तः ससंभ्रमेण पतन्तः करा येषां तैस्त्रिदशैर्देवै तस्यै दिशे तन्नमिकर्मीकृतदिशे नमोऽकारि।

एवमुपर्युक्तदिशा श्रुतिस्मृतिपुराणेतिहासानां भावार्थमुपगृह्य काव्यार्थो निरूपणीय इत्यत्र प्राचां सम्मतिमुद्धरति अत्राहुरित्यादिना-श्रुतीनामिति। अंगैः—

शिक्षाकल्पो व्याकरणं निरुक्तं छन्दसाञ्चयः।
ज्योतिषामयनं चैतत् षडङ्गमिति कीर्तितम् ॥

इत्युक्तरूपैः षडंगैः शाखाभिश्च सहितानां श्रुतीनामर्थग्रन्थः पदार्थसार्थः। इतिहासपुराणयोः कथाभ्यासः तत्प्रोक्तकथानामनुशीलनं कवित्वस्य काव्यस्य एकं केवलमौषधम् तन्निर्माणविषयकाज्ञानगदनाशकत्वात् स्फूर्तिदायकत्वाच्च भेषजमिव।

इतिहासेति। सत्कविः विवेकरूपिणाञ्जनेन शुद्धाभ्यां इतिहासपुराणाभ्याम्। विवेकतुल्याञ्जनेन शुद्धाभ्यां चक्षुर्भ्यामिव। सूक्ष्ममपि अर्थमीक्षते पश्यति।

वेदार्थस्येति। यथा वेदार्थस्य निबन्धेन निर्माणेन श्रुत्युक्तप्रसंगमनुरुध्य पद्यस्य ग्रन्थस्य वा ग्रथनेनेत्यर्थः। कवयः श्लाघ्यन्ते। तथेति द्विरुक्तिः निश्चयार्था। तथैव स्मृतीनाम्, मन्वादिप्रणीतधर्मशास्त्राणाम्। इतिहासस्य महाभारतादेः पुराणस्य पद्मादेर्निबन्धेन कवयः श्लाघ्यन्ते सत्ख्यातिं लभन्ते।

द्विविधः प्रामाणिको मैमांसिकस्तार्किकश्च। तत्र प्रथमः शब्दस्य सामान्यमभिधेयं विशेषश्चार्थः। अत्र—

"सामन्यवाचि पदमप्यभिधीयमानं मां प्राप्य जातमभिधेयविशेषनिष्ठम्।
स्त्री काचिदित्यभिहिते सततं मनो मे तामेव वामनयनां विषयीकरोति॥"

तर्केषु साङ्ख्यीयः—"नासतो विद्यते भावो नाभावो विद्यते सतः।
उभयोरपि दृष्टोऽन्तस्त्वनयोस्तत्त्वदर्शिभिः॥"

---

प्रमाणविद्ययाधिगतोर्थः, मीमांसानिरूपित-तर्कनिरूपितभेदेन द्विप्रकारः। तत्र तयोरर्थयोर्मध्ये प्रथमो मैमांसिकः। शब्दस्य अभिधेयमभिधया प्रतिपाद्यं सामान्यं जातिः, उपाधिर्वास्ति। जातिरेव शक्यतावच्छेदकं सर्वेषां शब्दानामिति वादिनां मते अभिधया प्रतिपाद्यं जातिरिति बोध्यम्। इतरेषां मते उपाधिरि बोध्यम्। उपाधिश्च जातिरूपः गुणरूपः क्रियारूपः यदृच्छाशब्दरूपः। विशेषभूतोर्थो व्यक्तिरूपोर्थः।

अत्रार्थे यथा सामान्यवाचीति। अभिधीयमानं सामान्यवाचि अपि पदम्। मां प्राप्य अर्थात् मत्कथनावसरे अभिधेयविशेषनिष्ठं जातम्। अर्थविशेषप्रतिपादकं भवति। यतः काचित्स्त्रीति अभिहिते कथिते सति मे मनो हृदयं सततं निरन्तरं तामेव प्रागनुभूतां वामनयनां सुन्दरनेत्रां वामे नयने यस्यास्ताम्। विषयीकरोति गोचरीकरोति।

अत्र मीमांसासिद्धान्तः अर्थस्य सामान्यविशेषबोधरूपः काव्ये शृङ्गाररसानुगुणतया परिणीय निरूपितः।

अर्हद्भदन्तदर्शने लौकायतं च पूर्वपक्षः, न्यायवैशेषिकौ साङ्ख्यं चोत्तरः। इमे षट् तर्का इति प्रागुक्तषट्तर्कानुरोधेन तर्केष्विति बहुवचनम्।

तर्केषु प्रागुक्तषट्तर्केषु सांख्यीयः सांख्यैः प्रोक्तोर्थः। नासत इति। असतोऽविद्यमानस्य भावो भवनमस्तिता न विद्यते। न हि शीतोष्णादि सकारणं प्रमाणैर्निरूप्यमाणं वस्तु सद्भवति। विकारो हि सः। विकारश्च व्यभिचरति। यथा घटादिसंस्थानं चक्षुषा निरूप्यमाणं मृद्व्यतिरेकेणानुपलब्धेरसत्तथा सर्वो विकारः कारणव्यतिरेकेण अनुपलब्धेरसत् प्रागूर्ध्वं जन्मप्रध्वंसाभ्यां चानुपलब्धेः। आदावन्ते च यन्नास्ति वर्त्तमानेऽपि तत्तथा। इत्युक्तेः। सतः सद्वस्तुनोऽभावोऽसत्वं कदाचिदपि न विद्यते। सुषुप्त्यादावपि न विद्यते। सुषुप्त्यादावपि अनुभूतयो सुखाज्ञानयोः "सुखमहमस्वाप्सम्" "न किञ्चिदवेदिषम्" इत्युत्थाने परामर्शदर्शनात्। तदनुभवमन्तरेण तयोः परामर्शासंभवात्। अतः सतोऽसत्त्वं नास्ति। ननु सत आकादेः क्वचिदपि देशे काले चाभावो यद्यपि नास्ति तथापि सत एव परिमाणोदेशान्तरेऽभावोस्ति, प्रागसतो घटादेर्भावश्च दृष्टः तत्कथमुच्यते "नासतो विद्यते भा-

अत्र—"य एते यज्वानः प्रथितमहसो येऽप्यवनिपा
मृगाक्ष्यो याश्चैताः कृतमपरसंसारकथया।
अमी ये दृश्यन्ते फलकुसुमनम्राश्च तरवो
जगत्येवंरूपा विलसति मृदेषा भगवती ॥"

न्यायवैशेषिकीयः—स किंसामग्रीक ईश्वरः कर्त्ता ? इति पूर्वपक्षः। निरतिशयैश्वर्यस्य तस्य कर्तृत्वमिति सिद्धान्तः। अत्र—

"किमीहः किंकायः स खलु किमुपायस्त्रिभुवनं
किमाधारो धाता सृजति किमुपादान इति च।

---

वा नाभावो विद्यते सतः" इत्याशंक्य विद्वदनुभवेन निरस्यति–उभयोरपीति। तत्त्वदर्शिभिः, तदिति सर्वनाम, सर्वं च ब्रह्म तस्य नाम। तस्य भावस्तत्त्वं ब्रह्मणो याथात्म्यम्। तद्द्रष्टुं शीलं येषां ते तत्त्वदर्शिनस्तैः तत्त्वदर्शिभिः ब्रह्मविद्भिः न तु कुतार्किकैः। उभयोरपि अनयोः सतश्चासतश्चान्तो मर्यादा नियतरूपत्वं यत्सत् तत्सदेव यदसत् तदसदेवेति दृष्टः श्रुतिस्मृतियुक्तिभिर्विचारपूर्वकं निश्चितः।

अत्रार्थे काव्यार्थो यथा—य एत इति। य एते प्रथिता यज्वानः याज्ञिकाः, येपि प्रसिद्धतेजसो राजानः याश्च एता मृगाक्ष्यो हरिणनयनाः स्त्रियो वर्त्तते। अपरस्य संसारस्य जंगमलोकस्य कथया कृतमलम्। कृतमिति अलमर्थेऽव्ययम्। अमी ये स्थावराः फलैः कुसुमैश्च नम्राः नीचैर्भूतास्तरवश्च दृश्यन्ते दृष्टिपथमवतरन्ति। तत्र जगति-लोके एवंरूपा जंगमेषु यज्वादिरूपा स्थावरेषु तरुप्रभृतिस्वरूपा एषा प्रत्यक्षा भगवती मृद् विलसति तस्या एव विलासः सर्वमिदं स्थावरजंगमात्मकं जगत् वर्त्तते।

अत्र नासतो विद्यते भाव इत्यांशिकभावमुपगृह्य एतत्पद्यं प्रणीतम्। वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यमिति श्रुत्या विकारस्यासत्यत्वादसतश्च भावाभावात् यज्वादिरूपा मृदेव न तु तद्विकार इति तात्पर्यम्।

न्यायश्च वैशेषिकश्च तौ न्यायवैशेषिकौ तयोर्भवः। लक्षणया तदाचार्याभ्यां प्रोक्तः प्रकाशितोर्थः। स श्रुतिस्मृतिपुराणादिप्रसिद्ध ईश्वरः। का सामग्री यस्य स किंसामग्रीकः सन् कर्त्ता जगत् करोति। इति शंकाकर्त्तुः पक्षः। निरतिशयैश्वर्येन लोकोत्तरसामर्थ्येन स जगत्करोति। अत्रार्थे काव्यार्थो यथा।

किमीह इति। एतच्च महिमस्तोत्रीयं पद्यम्। क्षित्यादिकं सकर्तृकं कार्यत्वात् घटवदित्यनुमानेन आत्मप्रत्यक्षमपह्नुवन्तः वेदं चान्यथा वर्णयन्तो निराकार्या इति जगदुदयरक्षाप्रलयकृदित्यनेन सूचितम् तत्र "विहन्तुं व्याक्रोशीं विदधत इहैके जडधियः" इति पूर्वश्लोकोक्तव्याक्रोशीबीजमतिकूलतर्कमुद्भावयन्तः पूर्वपक्षिणो निराकुर्वन् स्तौति। किमिति। तवैश्वर्यमित्यत्र अभव्यानामस्मिन्वरद-

अतर्क्यैश्वर्ये त्वय्यनवसरदुःस्थो हतधियः
कुतर्कोऽयं कांश्चिन्मुखरयति मोहाय जगतः॥"

बौद्धीयः—विवक्षापूर्वा हि शब्दास्तामेव विवक्षां सूचयेयुः।

अत्र—"भवतु विदितं शब्दा वक्तुर्विवक्षितसूचकाः
स्मरवति यतः कान्ते कान्तां बलात्परिचुम्बति।
न न न म म मा मा मां स्प्राक्षीर्निषेधपरं वचो
भवति शिथिले मानग्रन्थौ तदेव विधायकम्॥"

---

रमणीयामरमणीमित्यतःवरदेति सम्बोधनमनुषज्यते। हे वरद? अतर्क्यं तर्काविषयमैश्वर्यं यस्य तस्मिन्नतर्क्यैश्वर्ये सर्वतर्कागोचरे, यत्र यः कश्चित्तर्कः स्वातन्त्र्येण उपन्यस्यते स सर्वोऽप्याभासतां गच्छति तस्मिंस्त्वयि विषये प्रमाणानां स्वगोचरशून्यत्वात् स्वागोचरे प्रामाण्याभावो युक्त एवेति भावः। अनवसरदुःस्थः। नास्त्यवसरोऽवकाशो यस्येत्यनवसरः, अत एव दुःस्थः दुष्टत्वेन स्थितः।विचित्रनानाशक्तिमायावशेन सर्वनिर्मातरि सर्वतर्कागोचरे त्वयि नास्ति कुतर्कस्थित्यवकाशः इत्यर्थः। अचिन्त्याः खलु ये भावा न तांस्तर्केण योजयेदित्युक्तेः। अयं कुतर्कः तर्काभासः कांश्चिद्धतधियः कानपि दुष्टबुद्धीन् मुखरयति वाचालान् करोति। कोयं कुतर्क इति तमेवाह—किमीह इत्यादिना। स धाता परमेश्वरस्त्रिभुवनं सृजति। खलु किन्तु किमीहः सन् सृजति। एवं सर्वत्र योजनीयम्।का ईहा चेष्टा यस्येति। कः कायः शरीरं कर्तृरूपं यस्येति किंकायः। क उपायः सहकारिकारणमस्येति किमुपायः। क आधारोऽधिकरणमस्येति किमाधारः। किमुपादानं समवायिकारणं भुवनाकारेण निष्पाद्यमस्येति किमुपादानः। सर्वत्र किंशब्द आक्षेपे। इति शब्दः प्रकारे। चकारः शंकान्तरसमुच्चयार्थः। अत्र न्यायवैशेषकीयपूर्वपक्षसिद्धान्तौ उपर्युक्तौ विशद्य दर्शितौ।

बौद्धीयः बुद्धदेवेनोपज्ञातोर्थः। वक्तुमिच्छा विवक्षा। सा पूर्वं येषां ते विवक्षापूर्वाः। हि यतः शब्दा विवक्षितपूर्वाः विवक्षितार्थमनुसन्धाय प्रवृत्ताः। अतः तामेव यामिच्छां हृदि निधाय वक्ता शब्दान् प्रयुञ्जीत तामेव विवक्षां शब्दाः सूचयेयुः प्रकाशयेयुः। इत्ययं बौद्धानां सिद्धान्तः।

अस्मिन्नर्थे काव्यार्थो यथा—भवत्विति। शब्दा वक्तुः प्रयोक्तुर्विवक्षितार्थसूचकाः सन्ति इति भवतां विदितं भवतु। कुत एतदिति वक्ति—स्मरवतीति। यतः स्मरवति कामार्त्ते कान्ते कामुके बलाद्धठात् कान्तां परिचुम्बति सति मम मेऽङ्गं त्वं न न नास्प्राक्षीः मा मास्प्राक्षीरिति यत निषेधपरं निषेधात्मकं वचोऽस्ति तदेव वचो मानग्रन्थौ मानरूपे ग्रन्थौ शिथिले सति विधायकं प्रवर्त्तकम् भवति। अत्र नायिकाया निषेधात्मकमपि वचस्तात्पर्येण विधौ प्रवर्त्तते।

लौकायतिकः— भूतेभ्यश्चैतन्यं मदशक्तिवत् । अत्र—

"बहुविधमिह साक्षिचिन्तकाः प्रवदन्त्यन्यदितः कलेवरात् ।
अपि च सुदति ते सचिन्तकाः प्रलयं यान्ति सहैव चिन्तया ॥"

आर्हतः-शरीरपरिमाण आत्मा, अन्यथा शरीराफल्यमात्माफल्यं वा। अत्र—"शरीरमात्रमात्मानं ये वदन्ति जयन्ति ते ।
तच्चुम्बनेऽपि यज्जातः सर्वाङ्गपुलकोऽस्य मे ॥"

सर्वपार्षदत्वात्काव्यविद्यायाः तानिमानन्यांश्चार्थान्व्युत्पत्तये प्रत्यवेक्षेत ।

---

लौकायतिकः लोकायतेनोपज्ञातोर्थः । भूतेभ्यः पृथिव्यप्तेजोवायुभ्यश्चतुर्भ्यो भूतेभ्यश्चैतन्यमुपजायते इति शेषः । तत्र दृष्टान्तः मदेति । मदशक्तिवत् । यथा अन्नजलगुडेभ्यः पृथक्स्थितेभ्यो नहि काचिन्मदजनिका शक्तिरूपजायते किन्तु संयुक्तेभ्यस्तेभ्य एव सा शक्तिरुपजायते तथैव संयुक्तेभ्यः पृथिव्यादिभ्यश्चतुर्भ्यश्चैतन्यमुपजायते पृथक्स्थितास्तु तच्छक्तिशून्या एव ।

अस्मिन्नर्थे काव्यार्थो यथा—बहुविधमिति । इह लोके साक्षिणः सकलपदार्थसार्थसाक्षिभूतस्य चैतन्यस्य परब्रह्मणश्चिन्तका आलोचकाः अर्थात् साक्षिभासकं ब्रह्म किञ्चिदस्तीति वादिनः इतः कलेवरात् शरीरात् अन्यद् बहुविधं केचित् ब्रह्म । अन्ये पुरुषः। अपरे तद्विशेष ईश्वरः । इतरे आत्मा इत्यादि बहुप्रकारं प्रवदन्ति कथयन्ति । अपिच हे सुदति ! ते सचिन्तकाः, चिन्तया तादृशया मत्या सहैव प्रलयं यान्ति निरन्तरं गच्छन्ति । गता, गमिष्यन्ति इत्यपि बोध्यम् । किन्तु नहि तैरद्यापि तादृशं किमपि निश्चित्य दर्शितम् । अतो वाय्वादिचतुर्विधभूतानां संयोगश्चैतन्यम् ।

अर्हतामयमार्हतः तन्मतसिद्धोर्थः । यथा—शरीरपरिमाणो यावच्छरीरं तावानात्मा, अन्यथा अल्पत्वे शरीराफल्यं देहवैयर्थ्यम् । अधिकत्व आत्मन आफल्यम् फलराहित्यम् । अयं भावः । यदि शरीरापेक्षया आत्मनोऽल्पत्वं तदा यावति शरीरे आत्मा तावति सुखदुःखादिकानुभवः, व्यतिरिक्तं तदफलम् । यदि तस्याधिक्यं तदा शरीरानुपयोगित्वाद्विफलः सः । अत यावच्छरीरं तावानात्मेति आर्हतसिद्धान्तः

अत्रार्थे काव्यार्थो यथा—शरीरेति । ये जैनाः आत्मानं शरीरमात्रं शरीरपरिमाणं परिमाणे मात्रच् । वदन्ति । ते जयन्ति सर्वोत्कृष्टाः । सर्वोत्कृष्टत्वे हेतुं दर्शयति—तदिति । यद्यस्मात् तस्य अंगविशेषस्य चुम्बनेऽप अस्य मे मम सर्वाङ्गे पुलको रोमहर्षणं जातम् । अत्र शरीरपरिमाण आत्मेति अर्हतां मतमुपगृह्य शृङ्गारपक्षनिक्षिप्ततया उपवर्णितम् ।

ननु

हस्तिना ताडयमानोपि न गच्छेज्जैनमन्दिरम् ।

आहुश्च—

"यांस्तर्ककर्कशानर्थान्सूक्तिष्वाद्रियते कविः।
सूर्यांशव इवेन्दौ ते काञ्चिदर्चन्ति कान्तताम् ॥"

समयविद्यासु शैवसिद्धान्तीयः—

"घोरघोरतरातीतब्रह्मविद्याकलातिगः।
परापरपदव्यापी पायाद्वः परमेश्वरः ॥"

पाञ्चरात्रः—

---

मूर्तीनां नग्नभावेन क्रियावैगुण्यदर्शनात् ॥

इत्यादिस्मृतिभिः मन्दिरगमनस्यापि निषिद्धत्वात्तेषां शास्त्राध्ययनं तु सुतरां निषेधयोग्यमिति कथं तदध्येयमिति चेदुच्यते । काव्यविद्यायाः सर्वपार्षदत्वात् सर्वे निखिलविषयविदो विचक्षणाः पार्षदाः सभ्या यस्या सा सर्वपार्षदा तस्या भावस्तत्वं तस्मात् । सर्वपार्षदत्वात्काव्यविद्याया इत्युभे चैते पदे "सर्ववेदपारिषदं हीदं शास्त्रम्" इति भाष्यप्रयोगं सम्वदति अतस्तदनुसन्धानकल्पितमिति नापूर्वम् । तानिमान् पूर्वनिर्दिष्टान् अन्यांश्चनिर्दिष्टांश्चार्थान् व्युत्पत्यै तत्तदर्थकौशलं लब्धुं प्रत्यवेक्षेत सम्यगालाचयेत् ।

आहुश्चेत्यनेन प्रागुक्तार्थोपष्टम्भकं पद्यमवतारयति—यानिति । तर्केति शास्त्रोपलक्षणम् । तर्कसम्बन्धिनः तर्कादिशास्त्रसम्बन्धिनः कर्कशान् यानर्थान् कविः सूक्तिषु आद्रियते सरसतापादनेन कोमलीकृत्य काव्येषु प्रदर्शयते ते अर्था इन्दौ चन्द्रे संगताः सूर्यांशव इव भानुभानव इव काञ्चिदनिर्वचनीयां कान्ततां रमणीयतामर्चन्ति पूजयन्ति तत्कान्तिमुत्कृष्टां सम्पादयन्ति अतः तत्तच्छास्त्रप्रतिपाद्यानामर्थानामाकलनमावश्यकम् ।

समयः सिद्धान्तो भाषा च ।

समयः शपथाचार सिद्धान्तेषु तथा धियि ।
क्रियाकारे च निर्देशे संकेते कालभाषयोरिति मेदिनी ।
तस्य विद्यास्तासु । शैवसिद्धान्ते भवः काव्यरूपेण परिणतोर्थः ।

घोरेति । घोरघोरतरेभ्योऽतीता ब्रह्मविद्या उपनिषद्विद्या तस्या कलामतिक्रम्य गतः । परं चापरं चेति परापरे । ते च ते पदे स्थाने । तयोर्व्यापी परमेश्वरः शिवः वो-युष्मान् पायात् अव्यात् ।

पञ्च पञ्चसंख्याकानि रात्राणि ज्ञानानि यत्र तत्पंचरात्रं नारदादिप्रणीतं ज्ञानोपदेशकं पुस्तकम् । तदुक्तं ब्रह्मपुराणे—

रात्रं च ज्ञानवचनं ज्ञानं पञ्चविधं स्मृतम् ।

"नाद्यन्तवन्तः कवयः पुराणाः सूक्ष्मा बृहन्तोऽप्यनुशासितारः ।
सर्वज्वरान्घ्नन्तु ममानिरुद्धप्रद्युम्नसङ्कर्षणवासुदेवाः ॥"

---

तेनेदं पंचरात्रं च प्रवदन्ति मनीषिणः ॥ इति ।

ज्ञानस्य पंचप्रकारता च यथा तत्रैव—

प्रथमं सात्विकं ज्ञानं द्वितीयन्तु तदेव च
नैर्गुण्यं च तृतीयं च ज्ञानं च सर्वतत्परम् ।
चतुर्थं च राजसिकं भक्तस्तन्नाभिवाञ्छति
पंचमं तामसं ज्ञानं विद्वांस्तन्नाभिवाञ्छति ॥
ज्ञानं पंचविधं प्रोक्तं पंचरात्रं विदुर्बुधाः । इति ।

तच्च पंचरात्रं सप्तर्षिभिरुपदिष्टत्वात् सप्तविधं यथोक्तं नारदपंचरात्रे—

पंचरात्रं सप्तविधं ज्ञानिनां ज्ञानदं परम् ।
ब्राह्मं शैवं च कौमारं वाशिष्ठं कापिलं परम् ॥
गौतमीयं नारदीयमिति सप्तविधं स्मृतम् । इति

कौमारं सनत्कुमारीयमित्यर्थः ।

तत्र भवः पाञ्चरात्रोऽर्थः काव्यरूपेण परिणतः । यथा नाद्यन्तवन्त इति । नाद्यन्तवन्तः आद्यन्तरहिताः पुराणाः प्राचीनः कवयः, सूक्ष्माः अपि । बृहन्तः षड्गुणसम्पूर्णाः अनुशासितारः जगच्छिक्षयितारः । न केनापि प्रादुर्भवेषु निरुद्ध इत्यनिरुद्धः चतुर्व्यूहस्य परमेश्वरस्य कथमप्यनिषेध्यस्य अत्यन्तवलस्य चेतसोऽधिष्ठाता, अंशः । प्रकृष्टं द्युम्नं वलं यस्येति प्रद्युम्नः चतुर्व्यूहेष्वेकः । संहारसमये युगपत्प्रजाः संकर्षतीति संकर्षणः तेष्वेकः । वसति वासयत्याच्छादयति वा स्वयमिति वासुः, दीव्यति क्रीडति विजिगीषते व्यवहरति द्योतते स्तूयते गच्छतीति वा देवः। वासुश्चासौ देवो वासुदेवः ।

तदुक्तम्—

छादयामिजगत्सर्वं भूत्या सूर्य इवांशुभिः ।
सर्वभूताधिवासश्च वासुदेवस्ततः स्मृतः ।
वसनात्सर्वभूतानां वसुत्वात् देवयोनितः ।
वासुदेवस्ततो ज्ञेयो योगिभिस्तत्त्वदर्शिभिः ॥
इति उद्योगपर्वणि महाभारते ।

सर्वत्रासौ समस्तं च वसत्यत्रेति वै यतः ।
सर्वाणि तत्र भूतानि वसन्ति परमात्मनि ॥
भूतेषु च स सर्वात्मा वासुदेवस्ततः स्मृतः !
इति विष्णुपुराणे ।

बौद्धसिद्धान्तीयः—

"कलिकृतकलुषाणि यानि लोके मयि निपतन्तु विमुच्यतां स लोकः।
मम हि सुचरितेन सर्वसत्त्वाः परमसुखेन सुखावनीं प्रयान्तु ॥"

एवं सिद्धान्तान्तरेष्वपि। राजसिद्धान्तत्रय्यामर्थशास्त्रीयः—

"शमव्यायामाभ्यां प्रतिविहिततन्त्रस्य नृपतेः
परं प्रत्यावापः फलति कृतसेकस्तरुरिव।

---

चतुर्षु व्यूहेषु एकः। तदुक्तम्—

संकर्षणो वासुदेवः प्रद्युम्नश्चानिरुद्धकः।
व्यूहश्चतुर्विधो ज्ञेयः सूक्ष्मः सम्पूर्णषड्गुणः ॥ इति।

व्यूहकारणं व्यूढानां तेषां कार्यं चान्यत्रोक्तं तद्यथा।

व्यूह्यात्मानं चतुर्द्धा वै वासुदेवादिमूर्तिभिः ॥
सृष्ट्यादीन् प्रकरोत्येष विश्रुतात्मा जनार्दनः।
मूलं तु कारणं वासुदेवाख्यं व्यूहसूत्रके ॥
द्वितीया पृथिवीं मूर्ध्ना शेषाख्या धारयत्यधः।
तामसी वा समाख्याता तिर्यक्त्वे समुपाश्रिता ॥
तृतीया!कर्म कुरुते प्रजापालनतत्परा।
सत्वोद्रिक्ता तु सा ज्ञेया धर्मसंस्थानकारिणी ॥
चतुर्थी जलमध्ये तु शेते पन्नगतल्पगा।
राजसी तद्गुणं सर्गं सा करोति सदैव हि ॥ इति।

बह्वृचोपनिषदि तु शरीरपुरुष-छदः पुरुष-महापुरुषेत्येवं चतुर्व्यूहस्वरूपं निर्दिष्टम्।

चतुर्व्यूहस्वरूपा अनिरुद्धादयो मे मम सर्वज्वरान् विषमाजीर्ण-संतत-सतत-मंथरैकाहिकद्व्यहिक-त्र्यहिक-प्रभृतीन् अशीतिप्रकारान् ज्वरान् घ्नन्तु नाशयन्तु।

दयाप्रधानो वौद्धानां सिद्धान्तभूतोर्थः काव्यरूपेण परिणतः। कलीति। लोके संसारे यानि कलिकृतकलुषाणि कलिकृतकल्मषाणि वर्त्तन्ते तानि मयि निपतन्तु। स लोकः तेभ्यः पापेभ्यो विमुच्यताम्। हि यतः सर्वसत्वाः सर्वप्राणिनः मम सुचरितेन पुण्येन तद्द्वारा परमसुखेन परमाह्लादपूर्वकं सुखावनीं सुखमयीं भूमिं प्रयान्तु गच्छन्तु। भूमिवाचको दीर्घकारान्तोपि अवनीशब्दः। नैषधे यथा।

सुमसृद्धवनी वृथाऽवनी सुवनी संप्रवदत्पिकापि चेति।

अर्थशास्त्रसंभवोर्थः काव्ये व्यवस्थितो यथा—शमव्यायामाभ्यामिति। शमेन शान्त्या लक्षणया शान्तिपूर्वकविचारेण व्यायामेन परिश्रमेण निश्चितकार्यानुष्ठानेन प्रतिविहितः कृतस्तन्त्रो स्वराष्ट्रचिन्ता येनेति तस्य प्रतिविहिततन्त्रस्य नृपतेः प्रत्यावापः पर-

बहुव्याजं राज्यं न सुकरमराजप्रणिधिभि-
र्दुराराधा लक्ष्मीरनवहितचित्तं छलयति ॥"

नाट्यशास्त्रीयः—

"एवं धारय देवि बाहुलतिकामेवं कुरुष्वाङ्ककं
मात्युच्चैर्नम कुञ्चयाग्रचरणं मां पश्य तावत्स्थितं ।
देवीं नर्त्तयतः स्ववक्त्रमुरजेनाम्भोधरध्वानिना
शम्भोर्वः परिपान्तु लम्बितलयच्छेदाहतास्तालिकाः ॥"

कामसूत्रीयः—"नाश्चर्यं त्वयि यल्लक्ष्मीः क्षिप्त्वाधोक्षजमागता ।
असौ मन्दरतस्त्वं तु प्राप्तः समरतस्तया ॥"

लौकिकस्तु द्विधा प्राकृतो व्युत्पन्नश्च । तयोः प्रथमः—

---

राष्ट्रचिन्ता । कृतः सेको यस्येति कृतसेको विहिताभिषेकस्तरुर्वृक्ष इव फलति फलितो भवति । स्वस्मिन् सुरक्षिते सति परचिन्ता कर्त्तव्या, सैव फलति मूले कृतो यत्नः फलवान् भवतीति सिद्धान्तादिति तत्वम् । बहुव्याजं बहुच्छलमिदं राज्यं राजकर्म । अराजप्रणिधिभिः राजकीयचरैर्विना नृपतेर्न सुकरम् दुष्करम् । राज्ञां चारैकचक्षुष्ट्वात् तैर्विना तेषामन्धवत्स्थितिः । उक्तं च-चारैः पश्यन्ति राजानश्चक्षुर्भ्यामितरे जना इति भावः । दुखेन आराधयितुं शक्या लक्ष्मीरनवहितचित्तं प्रमादिनं पुरुषं छलयति स्वपदात्पुमासं च्यावयतीत्यर्थः ।

नाट्यं नटकर्म । तच्छास्त्रगतोर्थः काव्ये निरूपितो यथा—एवमिति । देवि ? बाहुलतिकां भुजवल्लीमेवं धारय स्थापय । अङ्ककं कोमलमङ्गमेवं कुरूष्व संपादय । अत्युच्चैरत्यधिकं मा नम नो नम्रीभव अग्रचरणं पादाङ्गुलिं कुञ्चय । तावत्स्थितं तादृशरूपेणावस्थितं मां पश्य । इत्येवम् । अम्भोधरवत् ध्वनितुं शीलमस्येति तेन । स्ववक्त्रमेव मुरजस्तेन निजवदनमृदङ्गेन देवीं गौरीं नर्त्तयतः नृत्यं कारयतः शम्भोः शिवस्य । लम्बितेषु लयच्छेदेषु आहतास्ताडितास्तालिकाः करतलध्वनयः । वो युष्मान् पान्तु रक्षन्तु ।

कामसूत्रप्रतिपादितोर्थः काव्यतां गतो यथा-नाश्चर्यमिति । एतन्न आश्चर्यं न विस्मयः । यत् एषा लक्ष्मीः अधोक्षजं विष्णुं क्षिप्त्वा त्यक्त्वा त्वयि समागता । यतोऽसौ विष्णुः तया लक्ष्म्या मन्दरतोऽल्परतः । स्वापेक्षया स्वल्पमैथुनशक्तिस्त्वं तु तया समरतः स्वसमानग्राम्यधर्मनिपुणः प्राप्तः । स्वेष्टसाधनप्राप्त्यप्राप्ती अनुरागविरागयोर्हेतू । पक्षान्तरे मन्दरतो मन्दराचलात् । समरतो युद्धात् ।

लौकिको लोकवृत्तं द्विधा द्विप्रकारः प्राकृतः स्वभावसिद्धः । व्युत्पन्नो व्युत्पत्तिनिष्पन्नः । तयोः प्राकृतव्युत्पन्नयोर्मध्ये प्रथमः पूर्वः स्वाभविकः ।

"स्फुटितपिठरीबन्धश्लाघ्यो विपक्षगृहेप्यभूत्
प्रियतम ययोः स्नेहग्रन्थिस्तथा प्रथमं स नौ।
जनवदधुना सद्मन्यावां वसाव इहैव तौ
धिगपरिचिते प्रेम स्त्रीणां चिराय च जीवितम् ॥"

यथा वा—"इक्षुदण्डस्य मण्डस्य दध्नः पिष्टकृतस्य च।
वाराहस्य च मांसस्य शेषो गच्छति फाल्गुने ॥"

द्वितीयो द्विधा समस्तजनजन्यः कतिपयजनजन्यश्च। तयोः प्रथमोऽनेकधा देशानां बहुत्वात्। तत्र दाक्षिणात्यः—

"पिबन्त्यास्वाद्य मरिचं ताम्बूलविशदैर्मुखैः।
प्रियाधरावदंशानि मधूनि द्रविडाङ्गना."

---

स्फुटितेति। हे प्रियतम ? प्रथमं प्राग् ययोर्नौ आवयोः स बाल्यवस्थायां जातः स्नेहग्रन्थिः प्रेमबन्धनम्। विपक्षगृहेपि स्वस्वापेक्षया विपरीतगृहेऽपि। स्फुटिता या पिठरी स्थाली। पिठरः स्थाल्युखा कुण्डम्। पिठरः स्थाल्यां ना क्लीबं मुस्तामन्थानदण्डयोरित्यमरनुमेदिनीभ्यां तस्य पिठरशब्दस्य पुंस्त्वमेव। बन्धवच्छ्लाघ्यः प्रशस्योऽभूत्। तौ एव आवां अधुना इह सद्मनि जनवद् प्राकृतजनवद् वसावस्तिष्ठावः। अतः अपरिचिते जने प्रेम धिग्। तथा स्त्रीणां चिराय जीवितं च धिक्।

यथा वेतीतरमुदाहरणमुपन्यस्यति-इक्षुदण्डस्येति। इक्षूणां रसालानाम्। रसाल इक्षुरित्यमरः। दण्डस्य यष्टेः। मण्डस्य पेयद्रव्यविशेषस्य। दध्नः। पिष्टकृतस्य पिष्टद्वारासम्पादित वस्तुनः कचौरीप्रभृतेः। वाराहस्य वराहसम्बन्धिनो मांसस्य। फाल्गुने फाल्गुनमासि गच्छति व्रजति सति शेषः समाप्ति र्भवति। शिशिरर्त्तुभोग्यपदार्थानां गुरुत्वात् वसन्ते नोपयोगः। फाल्गुनचैत्रौ वसन्तः इति मतेन। अतो फाल्गुने लघूनामुपयोज्यत्वात् गुरुभूतानां तेषां समाप्तिरेव जायते इति भावः। अस्य श्लोकस्य "सैष गच्छति फाल्गुनः" इति चतुर्थचरणीयपाठोऽपपाठः। "शेषो गच्छति फाल्गुने" इति पाठ एवार्थ संगतिः।

द्वितीयो व्युत्पन्नो द्विधा। समस्तजनेभ्यो जन्य उत्पाद्यः कतिपयजनेभ्यो जन्यः। तयोः समस्तजनजन्य-कतिपयजनजन्ययोर्मध्ये प्रथमः समस्तजनजन्यः देशाना मानन्त्यात् बहुप्रकारः। तत्र देशभेदेषु दाक्षिणात्यः दक्षिणदिग्भवजनजन्यः।

पिबन्तीति। द्रविडाङ्गनाः ताम्बूलै र्विशदानि ताम्बूलविशदानि तैः ताम्बूलविशदैः ताम्बलभक्षणेन स्वच्छैः मुखैः मरिचमास्वाद्य उपभुज्य प्रियाधरेणावदंशानि उच्छिष्टानि पीतानीत्यर्थः। मधूनि मद्यानि पिबन्ति। ताम्बूलभक्षणाव्य-

यथा वा—"विरम मदन कस्त्वं चैत्र का शक्तिरिन्दो-
रिह हि कुसुमबाणाः कुण्ठिताग्राः स्खलन्ति ।
हृदयभुव इमास्ताः कुन्तलप्रेयसीनां
प्रहृतिकिणकठोरग्रन्थयो वज्रसाराः ॥"

उदीच्यः—"नेपाल्यो वल्लभैः सार्द्धमार्द्रैणमदमण्डनाः ।
ग्रन्थिपर्णकपा(ले)लीषु नयन्ति ग्रीष्मयामिनीः ॥"

द्वितीयः—"मिथ्यामीलदरालपक्ष्मणि वलत्यन्तः कुरङ्गीदृशो
दीर्घापाङ्गसरित्तरङ्गतरले तल्पोन्मुखं चक्षुषि ।

---

वहितोत्तरं मद्यपानस्य अनास्वाद्यतया मध्ये मरीचभक्षणम् ततो मद्यपानम् । इति द्रविडपुङ्गवाः ।

विरमेति । हे मदन ? विरम विरतो भव । चैत्र त्वं कोसि । इन्दोः का शक्तिः किं सामर्थ्यम् । इह कुन्तलदेशे कुसुमवाणाः पुष्पशराः कुण्ठिताग्राः सन्तः स्खलन्ति स्खलिता भवन्ति । यतो हि कुन्तलप्रेयसीनां कुन्तलदेशवासिप्रियाणां इमास्ताः हृददयभुवः चित्तभूमयः । प्रहृत्या कामस्य प्रहारेण किणैः व्रणजन्यचिन्हैः कठोराः ग्रन्थयः पर्वाणि । ग्रंथिर्ना पर्वपरुषीत्यमरः । यासु ता अत एव वज्रसाराः कुलिशस्थिरांशतुल्याः सन्ति । अत्र कुन्तलदेशाङ्गनासु कामादीनां कुण्ठितप्रयासो वर्णितः । कुन्तलदेशो हि दक्षिणदिशि एवं चायं दाक्षिणात्योर्थः ।

उदीच्यः उत्तरदेशवासिजनजन्योर्थः । नेपाल्य इति । आर्द्रः क्लिन्नः ऐणमदः मृगमदः कस्तूरीपंक इत्यर्थः मण्डनमलंकरणं यासां ताः आर्द्रैणमदमण्डना नेपाल्यो नेपालदेशाङ्गनाः वल्लभैः प्रेयोभिः सार्द्धं सह ग्रन्थिपर्णानां वर्हिपुष्पाणाम् । कुक्कुरवद्रा इति ख्यातानाम् । "ग्रन्थिपर्णं शुकं वर्हिपुष्पं स्थौणेयकुक्कुरे" इत्यमरः कपालीषु व्रजेषु । ग्रन्थिपर्णवृक्षसमूहेष्वित्यर्थः । कपालोऽस्त्री शिरोऽस्थिन स्यात् घटादेः शकले व्रजे इति मेदिनीकोशात्तु कपालेषु" इति पुमान् पाठो युक्तः । ग्रीष्मयामिनीः ग्रीष्मर्तुरात्रीः नयन्ति यापयन्ति । अत्र नेपालीनां वर्णनमय उदीच्योर्थः ।

द्वितीयः कतिपयजनजन्यो यथा—मिथ्यामीलदिति । मिथ्यैव मृषैव मीलन्ति संकुचन्ति अरालानि वक्राणि पक्ष्माणि यत्र तस्मिन् । दीर्घा अपांगाः कटाक्षा यस्मिन् तत् दीर्घापाङ्गम् । सरितस्तरंगवत्तरलं चञ्चलम् । दीर्घापाङ्गं च सरित्तरंगतरलं च दीर्घापांगसरित्तरंगतरलम् । तस्मिम् । कुरंगीवत् दृशौ अथवा कुरंग्या दृशाविव चञ्चले दृशौ यस्याः तस्या मृगनयनायाः चक्षुषी नेत्रे तल्पोन्मुखं शयनोन्मुखम् अन्तर्वलति अन्तर्घूर्णति सति । आलीजनः सखीजनः अन्योन्यस्मिन् परस्परस्मिन् कण्डूयनात् केलिमतः क्रीडावतः क्रीडासक्तस्य कथां वार्त्ताम् विरमयन् निवर्त्तयन् सन् । अयं को मा

पत्युः केलिमतः कथां विरमयन्नन्योन्यकण्डूयनात्
कोऽयं व्याहरतीत्युदीर्य निरगात्सव्याजमालीजनः ॥"

कविमनीषानिर्मितं कथातन्त्रमर्थमात्रं वा विरचना । तत्राद्या—

"अस्ति चित्रशिखो नाम खड्गविद्याधराधिपः ।
दक्षिणे मलयोत्सङ्गे रत्नवत्याः पुरः पतिः ॥
तस्य रत्नाकरसुता श्रियो देव्याः सहोदरी ।
स्वयम्वरविधावासीत्कलत्रं चित्रसुन्दरी ॥"

द्वितीया—"ज्योत्स्नां लिम्पति चन्दनेन स पुमान्सिञ्चत्यसौ मालती-
मालां गन्धजलैर्मधूनि कुरुते स्वादून्यसौ फाणितैः ।
यस्तस्य प्रथितान्गुणान्प्रथयति श्रीवीरचूडामणेः
तारत्वं स च शाणया मृगयते मुक्ताफलानामपि ॥"

---

व्याहरति इत्येवमुदीर्य उच्चार्य सव्याजं सकपटं निरगात् । अत्र कस्यचित्कामिनः केलिकौतुकासक्तस्य वर्णनं कश्चित्करोति ।

कविना स्वमनीषया कल्पितं कथाया इतिवृतम्, अथवा केवलमर्थो विरचना ॥ तत्र विरचनायाम् आद्या कथातन्त्ररूपा प्रथमा विरचना ।

अस्तीति । दक्षिणे दक्षिणदेशे मलयोत्सङ्गे मलयाद्रेरुपत्यकायां वर्तमानाया रत्नवत्याः पुरो नगर्या पतिः खड्गविद्याया धराणामधिपः स्वामी चित्रशिखो नाम्नास्ति । तस्य चित्रशिखस्य राज्ञो रत्नाकरनाम्नो राज्ञः पुत्री श्रियो देव्याः लक्ष्म्या सहोदरी भगिनी सदृशीति यावत् चित्रसुन्दरी एतन्नाम्नी राजकन्या स्वयम्वरविधौ स्वयन्वरकर्मणि कलत्रं पत्नी आसीत् अभवत् । एतयोः श्लोकयोः चित्रशिखकथोपयोगीतिवृत्तं वर्त्तते ।

द्वितीया अर्थमात्ररूपा विरचना यथा—ज्योत्स्नामिति । यः पुमानत् तस्य लोकप्रसिद्धस्य श्रीवीरचूडामणेः प्रथितान् लोकप्रसिद्धान् गुणान् धैर्यगाम्भीर्यसौजन्यसौशील्यौदार्यप्रभृतीन् प्रथयति विस्तारयति स पुमान् पुरुषः चन्दनेन मलयजेन ज्योत्स्नां कौमुदीं लिम्पति । असौ पुमान् मालतीमालां जातिस्रजं गन्धजलैः गन्धोदकैः सिञ्चति सुरभीकरणाय आर्द्रां करोति । असौ पुमान् फाणितैः फाणितद्रव्यविकारैः मधूनि मद्यानि स्वादूनि मधुराणि करोति तथा च मुक्ताफलानामपि मौक्तिकानामपि तारत्वमौज्ज्वल्यं शाणया रत्नादिकषणयन्त्रेण मृगयते शाणयन्त्रद्वारा तानि उज्ज्वलीकर्त्तुम् अन्वेषणानुकूलव्यापारं करोति । अत्र कविगतो राजविषयकरतिरूपभावः प्रतीयते ।

अत्राहुः—"नीचैर्नार्थकथासर्गौ यस्य न प्रतिभाक्षयः।
स कविग्रामणीरत्र शेषास्तस्य कुटुम्बिनः॥"

अभिहितेभ्यो यदन्यत्तत्प्रकीर्णकम्। तत्र हस्तिशिक्षीयः—

"मेघानां क्षणहासतामुपगतो हारः प्रकीर्णो दिशा-
माकाशोल्लसितामितामरवधूपीतस्तनास्फालकः।
क्षुण्णश्चन्द्र इवोल्बणो मदवशादैरावणप्रेरितः
पायाद्वः परिपाकपाण्डुलवलीश्रीतस्करः शीकरः॥"

रत्नपरीक्षीयः—

"द्वौ वज्रवर्णौ जगतीपतीनां सद्भिः प्रदिष्टौ न तु सार्वजन्यौ।
यः स्याज्जपाविद्रुमभङ्गशोणो यो वा हरिद्रारससंन्निकाशः॥"

---

अत्राहुरिति प्राचीनाचार्यपद्यमवतारयति—यस्य पुंसः नीचै नीचस्य अर्थस्य अर्थमात्ररूपविरचनायाः तथा नीचायाः कथायाः कथातन्त्ररूपविरचनाया सर्गौ प्रतिभाक्षयो न। स दुष्टार्थकथे परित्यजन् सुन्दरार्थकथयोः प्रणेता अत्र लोके साहित्ये वा कविग्रामणीः कविपरिवृढः शेषास्तदतिरिक्ताः कवयः तस्य कविमूर्धन्यस्य कुटुम्बिनः सहकारिण इत्यर्थः॥

यानि श्रुतिस्मृत्यादीनि काव्यविद्याया अङ्गानि अभिहितानि उक्तानि तेभ्यो यदन्यद् भिन्नमङ्गम्, तत्प्रकीर्णकम्। तत्र प्रकीर्णके हस्तिशिक्षानुकूलभूतोर्थः।

मेघानामिति। मदवशात् स्वगतस्वाभाविकोन्मादवशात् ऐरावणेन अभ्रमुस्वामिना प्रेरितः उच्चालितः अत एव क्षुण्णः शीर्णः शीकरो जलकणः। शीकरोऽम्बुकणः स्मृतः इत्यमरः। वो युष्मान् पायात् अव्यात्। कीदृशः स शीकरः, तस्योच्चैः प्रेरणेन मेघानां जलदानां क्षणहासतां मुहूर्त्तहासताम् ( विद्युत्समानतामित्यर्थः कदाचिद्भवेत् ) उपगतः प्राप्तः दिशामाशानां तत्स्वामिकः प्रकीर्णः त्रुटितो हारः। पुनः कीदृश आकाशे गगने विहर्त्तुमुल्लसिताः समागताः अमिता अगणिता या अमरवध्वः देवाङ्गनाः तासां पीनस्तनानां पीवरकुचानामास्फालकः संस्पर्शकः। पुनः कीदृशः। चन्द्र इवोल्बणो निर्मलः। पुनः कीदृशः परिपाकेन पाण्ड्वी या लवली तस्याः श्रियो लक्ष्म्यास्तस्करोऽपहारकः। अत्र ऐरावणप्रेरितजलविन्दोः मेघादिषु क्षणहासत्वादीनामुपगमनप्रभृतयः तस्य शिक्षापाटवं सूचयन्ति।

रत्नपरीक्षीयः मणितत्वसमीक्षाप्रादुर्भूतोर्थः। द्वाविति। सद्भिः रत्नपरीक्षकैः वैकटिकैः द्वौ वज्रयोः वर्णौ रूपे (वर्णद्वयविशिष्टौ वज्रौ) जगतीपतीनां राज्ञामेव कृते प्रदिष्टौ निर्दिष्टौ, न तु सार्वजन्यौ विश्वजनीनौ। कीदृशौ तौ द्वौ वर्णौ तत आह—यः स्यादिति। यो वर्णः जपायाः विद्रुमस्य च भङ्गवत्खण्डवच्छोणः रक्तः अथवा यः हरि-

धनुर्वेदीयः—

"स दक्षिणापाङ्गनिविष्टमुष्टिं नतांसमाकुञ्चितसव्यपादं ।
ददर्श चक्रीकृतचारुचापं प्रहर्तुमभ्युद्यतमात्मयोनिम् ॥"

योगशास्त्रीयः—"यः सर्वेषां हृदयकमले प्राणिनामेकहंस
स्त्वं जागर्षि स्वपिषि च मुहुर्बुध्यसे नापि बुद्धः ।
तं त्वाराध्य प्रविततधियो बन्धभेदं विधाय
ध्वस्तातङ्का विमलमहसस्ते भवन्तो भवन्ति ॥"

एवं प्रकीर्णकान्तरमपि । उचितसंयोगः—

---

छाया रसेन सन्निकाशः तुल्यः पीतः स्यात् भवेत् ।

जगतीपतोर्नां कृते रक्तपीतौ एव वस्त्रावुपयोगार्हौ नानीदृशौ इति वैकटिकवेद्योर्थोऽत्रोपनिवद्धः ।

धनुर्वेदशिक्षासम्पन्नकाव्यगतोर्थः । सेति । स श्रुतिस्मृतिपुराणादिप्रसिद्धो भगवान् शिवः दक्षिणापाङ्गे दक्षनेत्रप्रान्ते । निविष्टा स्थापिता मुष्टिर्येन तम् । नतोंसः स्कन्धो यस्य तम् । आकुञ्चितः ईषद् भुग्नः सव्यपादो वामचरणो यस्य तम् । आलीढाख्यस्थानके स्थितमित्यर्थः ।

यथोक्तमालीढलक्षणं यादवेन—

स्थानानि धन्विनां पंच तत्र वैशाखमस्त्रियाम् ।
वितस्त्यन्तरगौ पादौ मण्डलं तोरणाकृति ।
समानौ स्यात्समपदमालीढं पदमग्रतः
दक्षिणं वाममाकुञ्च्य प्रत्यालीढं विपर्ययः । इति ।

चक्रीकृतः चक्राकारं नीतः चारुर्मनोहरश्चापो येन तम् । प्रहर्तुं प्रहारं कर्तुमभ्युद्यतमुत्थितम् आत्मयोनिं कामदेवं ददर्श दृष्टवान् ।

योगशास्त्रोपदिष्टविधया काव्यार्थो यथा-य इति । यस्त्वं सर्वेषां समेषां प्राणिनां जीवानां हृदयकमले एको हंसोऽसि । त्वमेव जागर्षि । स्वपिषि च शेषे च त्वमेव । तथा तत्र मुहुः वारम्बारं बुध्यसे ज्ञायसे । तथापि न वुद्धः नहीदानं यावत्कैरपि ज्ञातः । ते भवन्तः पूज्याः प्रविततधियो दूरदर्शिनो मुनयः तमेदृशं त्वा त्वामाराध्य सेवयित्वा, बन्धस्य अज्ञानजनितग्रन्थेः भेदं विश्लेषं कृत्वा । ध्वस्तः निरस्त आतंको भयं येषान्ते निर्भयाः । विमलं निर्मलं महो येषां ते । निर्मलज्ञाना भवन्ति सम्पद्यन्ते ।

प्रकीर्णान्तरं यथोक्तम्—

अष्टमीचन्द्रकः कुन्द-चतुर्थी सुवसन्तकः ।
आन्दोलनचतुर्थ्येक-शाल्मली मदनोत्सवः ॥

उदकक्ष्वेडिका शोकोत्तंसिका चूतभञ्जिका ।
पुष्पावचायिका चूतलतिका भूतमातृका ॥
कदम्बयुद्धानि नवपत्रिका विसखादिका ।
शकार्चा कौमुदी यक्षरात्रिरभ्यूषखादिका ॥
नवेक्षुभक्षिका तोयक्रीडा प्रेक्षादि दर्शनम् ।
द्यूतानि मधुपानं च प्रकीर्णानीति जानते ।

अस्यार्थः—प्रकीर्णकेषु स्पृहयन्ती व्रतमष्टमीचन्द्रकः, सहि चैत्रचतुर्थीतोऽष्टमचतुर्थ्यामुपादीयमानः कामिनोभिरच्यंते । यस्यां यवस्रस्तरेषु अवला लोलन्ति क्रीडन्ति सा कुन्दचतुर्थी । केचिदेनां यवचतुर्थी इति कथयंति, वैशाखशुक्लचतुर्थ्यां नायाकानां परस्परं सुगन्धयवचूर्णप्रक्षेप इति । इयं पाश्चात्येषु प्रसिद्धा । वसन्तावतारदिवसः सुवसन्तकः । यस्यां स्त्रियो दोलामारोहन्ति सा आन्दोलनचतुर्थी । अपरे आलोलचतुर्थी मन्यन्ते सा च क्रीडा श्रवणशुक्लतृतीयायां भवति । एकमेव सुकुसुमनिर्भरशाल्मलीवृक्षमाश्रित्य सुनिमीलितकादिभिः तत्रत्यकुसुमाभरणैर्वा खेलतां या क्रीडा सा एकशाल्मली । कामदेवपूजा मदनोत्सवः । गन्धोदकपूर्णवंशनाडीभिः, वंशनाडी स्मृता क्ष्वेडा सिंहनादश्च कथ्यते-श्रृङ्गादिभिर्वायूनां प्रियजनाभिषेककर्दमेन क्रीडा उदकक्ष्वेडिका । सा मध्यदेश्यानाम् । यत्रोत्तमस्त्रियः पदाभिघातेनाशोकं विकाश्य तत्कुसुममवतंसयन्ति सा अशोकोत्तंसिका । यत्राङ्गनाभिश्चूतमञ्जर्योवचित्यानङ्गाय वालरागरवेनैव दायं दायमवतंस्यन्ते सा चूतभंजिका । यत्र युवत्यो मदिरागण्डूषदोहदेन वकुलं विकाश्य तत्पुष्पाण्येव चिन्वन्ति सा पुष्पावचायिका । यत्र कस्ते प्रियतम इति पृच्छद्भिः पलाशादिनवलताभिः प्रियो जनो हन्यते सा चूतलतिका । पश्चात्मानुनयन्ती भूतमातृका । वर्षासु कदम्बनीपहारिद्रकादिकुसुमैः प्रहरणभूत द्विधा वलं विभज्य कामिनीनां क्रीडा कदम्वयुद्धानि । कदम्बग्रहणं कुसुमसुकुमारप्रहरणसूचनार्थम् । प्रथमवर्षणप्ररूढनवतृणाङ्कुरासु स्थलीषु शाद्वलभ्यर्च्य भुक्तपीतानां स्त्रीणां कृत्रिमविवाहादिक्रीडा नवपत्रिका सा प्रायेण अटवीसमीपवासिनामाटविकानाम् । अभिनवविसाङ्कुरोद्भेदाभिरामसरःसमाश्रित्य कामिमिथुनानां विसभक्षणम् विसखादिका । शक्रोत्सवदिवसः शक्रार्चा । आश्विने पौर्णमासी कौमुदी, आश्वयुज्यां हि पौर्णमास्यां कौमुद्याः प्रकर्षेण प्रवृत्तेः । तत्र दोलाद्यूतप्रायाः क्रीडाः। कुत्रचित् कौमुदी जागर इति प्रसिद्धम् । दीपोत्सवो यक्षरात्रिरर्थात् सुखरात्रिः । यक्षाणां तत्र सन्निधानात् । तत्र प्रायशो लोकस्य द्यूतक्रीडा । शमीधान्यानां विटपास्थानामत एवार्द्राणामग्नौ पक्कानामभ्यवहारोऽभ्यूषखादिका । प्रथमत एवेक्षुभक्षणं नवेक्षुभक्षिका । ग्रीष्मादौ जलाशयावगाहनं तोयक्रीडा । नाथादिदर्शनं प्रेक्षा । आलिङ्गनादिग्लहा दुरोदरादिक्रीडा द्यूतानि । रागोद्दीपनाय माध्वीकादिसेवा मधुपानम् ।

"पाण्डयोऽयमंसार्पितलम्बहारः क्लृप्ताङ्गरागो हरिचन्दनेन ।
आभाति बालातपरक्तसानुः सनिर्झरोद्गार इवाद्रिराजः ॥"
योक्तृसंयोगः—"कुर्वद्भिः सुरदन्तिनो मधुलिहामस्वादु दानोदकं
तन्वानैर्नमुचिद्रुहो भगवतश्चक्षुः सहस्रव्यथां ।

---

वात्स्यायनीयकामसूत्रे ऽपि क्रीडाद्वैविध्यं प्रदर्शितं समस्या देश्याश्चेति भेदात् । तत्र किञ्चिद्विभेदवत्य एता एव प्रायेण सर्वा विनिर्दिष्टाः ।

कन्दर्पचूडामणावपि—

कुर्याच्च यक्षरात्रिं सुखरात्रिः सा च कथ्यते लोके ।
ऐक्यं कोजागरया कौमुद्यास्तत्र निर्दिष्टम् ॥
सुवसन्तकोत्र शास्त्रे भवति वसन्तस्य वासरः प्रथमः ।
बिसखादिका सरस्यां बिसभुक्तिः कीर्तिता लोकैः ॥
मदनार्थिनाम्रकुसुमैरवतंसे चाम्रभञ्जिका प्रोक्ता ।
अभ्यूषखादिकैवं ज्ञातव्या ग्रन्थतः परतः ॥
अन्योन्यं जलसेकः पानीयक्ष्वेडिकेरिता विबुधैः ।
कृत्रिमविवाहलीला कथिता नवपत्रिका तज्ज्ञैः ॥
कृत्रिमपुत्रकलीला स्यादनुयानं तथा तु पाञ्चाल्याः ।
शाल्मल्यामधिरुह्य क्रीडैका शाल्मली कथिता ॥
युद्धं कदम्बमुकुलैः प्रविभज्य बलं परस्परं यत्र
स्यात्तत्कदम्बयुद्धं कुर्यादन्यास्तथा लीलाः । इति ।

उचितः काव्यवर्णनीयपदार्थानां मिथो योग्यः संयोगः सम्बन्ध उपमानोपमेयभावादिरूपो यत्रासौ । तदुदाहरणं यथा—

पाण्डय इति । अंसयोरर्पितो लम्बो लम्बायमानो हारो येनासौ । हरिचन्दनेन क्लृप्तोऽङ्गरागो येनासौ । अयं पाण्डयः, बालातपेन रक्ताः सानवो यस्यासौ निर्झरस्योद्गारेण सहितोऽसौ । अद्रिराज इव हिमाद्रिरिव आभाति ।

अत्र अंसार्पितलम्बहारस्य हरिचन्दनेन क्लृप्ताङ्गरागस्य पाण्डयस्य बालातपरक्तसानुना सनिर्झरोद्गारेण अद्रिराजेन सह उपमानोपमेयरूपः सम्बन्ध उचितः । हरिचन्दनबालातपयोर्निझरहारयो साद्दश्यात् । विशेषणयोः विशेष्ययोरौपम्यम् ।

योक्ता योजनकर्त्ता संयोगः सम्बन्धो यत्रासौ योक्तृसंयोगः उत्तरोत्तरसम्बन्धकारी सम्बन्ध इति भावः । यथा—

कुर्वद्भिरिति । सुरदन्तिनो देवहस्तिनो दानोदकं मदजलम् । उभयत्र पदयोः षष्ठीसमासः । मधुलिहां भ्रमराणां कृतेऽस्वादु कुर्वद्भिः सम्पादयद्भिः । भगवतो

मज्जन्स्वर्गतरङ्गिणीजलभरे पङ्कीकृते पांसुभि-
र्यद्यात्राव्यसनं निनिन्द विमनाः स्वर्लोकनारीजनः ॥"

उत्पाद्यसंयोगः—

"उभौ यदि व्योम्नि पृथक्प्रवाहावाकाशगङ्गापयसः पतेतां ।
तेनोपमीयेत तमालनीलमामुक्तमुक्तालतमस्य वक्षः ॥"

संयोगविकारः—"गुणानुरागमिश्रेण यशसा तव सर्पता ।
दिग्वधूनां मुखे जातमकस्मादर्द्धकुङ्कुमम् ॥"

यथा वा—"उन्माद्यत्यम्बुराशिर्विदलति कुमुदं सङ्कुचन्त्यम्बुजानि

---

( नमुचिं द्रुह्यति नमुचिद्रुट् तस्य ) नमुचिद्रुह इन्द्रस्य चक्षुषां सहस्रस्य व्यथां पीडां तन्वानैः विस्तारयद्भिः पांसुभिः धूलिभिः पङ्कीकृते कर्दमभावं प्रापिते । स्वर्गतरङ्गिण्या मन्दाकिन्या जलभरे जलसमुदाये मज्जन् स्नानं कुर्वन् विमनाः सपङ्कजलावगाहेन उदस्तचेताः स्वर्लोकस्य नारीजनः देवाङ्गनाजनः यस्य तव यात्राव्यसनं निनिन्द ।

अत्र यात्रया पांसूनामुत्थानम्, तैश्च मन्दाकिन्याः पङ्कीकरणम्, तेन च तत्र मज्जतां विमनस्कता, विमनस्कतया च यात्रानिन्दा इत्येवं रूपेण उत्तरोत्तरं सम्बन्धकारी सम्बन्धः हेतुहेतुमद्भावरूपः ।

उत्पाद्यः सम्भाव्यत्वेन सम्पाद्यः संयोगः सम्बन्ध उपमानोपमेयभावरूपो यत्रासौ । उदाहरणं यथा—

उभाविति । यदि व्योम्नि आकाशे आकाशगंगायाः पयसो मन्दाकिनीनीरस्य उभौ द्वौ प्रवाहौ पृथक् पतेताम् । तदा तेन पृथक् पतता प्रवाहेण तमालवन्नीलं कृष्णम् । आमुक्ता धृता मुक्तालता मौक्तिकमाला येन तत् । अस्य श्रीकृष्णस्य वक्ष उरस्थलमुपमीयेत प्रतियोगितया निरूप्येत । अर्थात् आमुक्तमुक्तालतं श्रीकृष्णवक्षः पृथक्पतन् मन्दाकिनीनीरप्रवाहव्योमसदृशम् इत्युपमातुं शक्येत ।

अत्र व्योमवक्षसोः मुक्तालताप्रवाहयोरुमापनोपमेयरूपः सम्बन्धः सम्भाव्यनिरूप्यते ।

संयोगस्य लक्षणया संयुक्तस्य विकारः संयोगविकारः संयुक्तद्रव्यविकारः । संयोगस्य गुणतया क्रियाश्रयत्वाभावात् । द्रव्यस्यैव तदाश्रयत्वात् ।

उदाहरणं यथा—गुणानुरागमिश्रेणेति । व्याख्यातं प्राक् । अत्र सौजन्यादिगुणानुरागाभ्यां संयुक्तस्य यशसः दिग्वधूनां मुखे अर्द्धकुङ्कुमत्वप्राप्तिरूपविकारो जातः ।

अथवा संयोगेन विकारः संयोगविकारः इत्यर्थबुद्ध्या उदाहरति द्वितीयं पद्यं—यथा वेति । उन्माद्यतीति । कर्पूरवद्गौरां द्युतिं बिभर्तीति कर्पूरगौरद्युतिभृत् । तस्मिन् क-

स्यन्दन्ते चन्द्रकान्ताः पतितसुमनसः सन्ति शेफालिकाश्च।
पीयन्ते चन्द्रिकाम्भः क्रमसरलगलं किं च किञ्चिच्चकोरा-
श्चन्द्रे कर्पूरगौरद्युतिभृति नभसो याति चूडामणित्वम् ॥"
इदं कविभ्यः कथितमर्थोत्पत्तिपरायणम्।
इह प्रगल्भमानस्य न जात्वर्थकदर्थना॥

॥ इति राजशेखरकृतौ काव्यमीमांसायां कविरहस्ये प्रथमेऽधिकरणे (अर्थानुशासने) षोडश काव्यार्थयोनयः अष्टमोऽध्यायः॥

---

र्पूरगौरद्युतिभृति चन्द्रे चन्द्रमसि नभस आकाशस्य चूडामणित्वमापीडरत्नत्वं याति गच्छति सति अम्बुराशिः समुद्रः उन्माद्यति उद्वेलो भवति। कुमुदं कैरवं विदलति विकसति। अम्बुजानि कमलानि सङ्कुचन्ति म्लानानि सम्पद्यन्ते। चन्द्रकान्ताः स्यन्दन्ते श्च्योतन्ति। शेफालिका निर्गुण्डयः पतितसुमनसः गलितप्रसूनाः सन्ति। किंच चकोराः, क्रमेण सरलः सुन्दरः स्वच्छ इति यावत् गलो येन तत् चन्द्रिकैवाम्भो जलं किंचित् पीयन्ते। पीङ्पाने इत्यस्य दैवादिकस्थ कर्तृ लटि प्रयोगः।

अत्र च उदीयमानचन्द्रसम्बन्धेन अम्बुराशिप्रभृतीनामुन्मादादयो भावविकाराः प्रादुर्भवन्ति। एवमस्मिन् व्याख्याने पूर्वस्मिन् गुणानुरागेत्युदाहरणेऽपि—गुणानुरागयोः संयोगेन यशसोऽर्द्धकुङ्कुमत्वप्राप्तिरूपो विकारो जात इति सङ्गतिरनुसन्धेया।

उपसंहरन्नाह—इदमिति। इदमुपरिनिर्दिष्टमर्थानामुत्पत्तेः परायणमुत्कृष्टस्थानम्। अष्टमोध्याय इत्यर्थः। कथितम्। इह अर्थोत्पत्तिपरायणभूतेऽष्टमाध्याये प्रगल्भमानस्य धृष्टस्य जातु कदाचिदपि अर्थविषयिणी कदर्थना कुत्सा न भवति।

इति साहित्याचार्याहिताग्निश्रीमधुसूदनशास्त्रिणः कृतौ मधुसूदनी विवृतौ अष्टमोध्यायः समवगात् पूर्तिम्।

## नवमोऽध्यायः

# अर्थानुशासनम् (अर्थव्याप्तिः)

"स त्रिधा" इति द्रौहिणिः; दिव्यो, दिव्यमानुषो, मानुषश्च । "सप्तधा" इति यायावरीयः; पातालीयो, मर्त्त्यपातालीयो, दिव्यपातालीयो, दिव्यमर्त्त्यपातालीयश्च । तत्र दिव्यः—

"स्मृत्वा यन्निजवारवासगतया वीणासमं तुम्बुरो-
रुद्गीतं नलकूवरस्य विरहादुत्कञ्चुलं रम्भया ।

---

॥ श्रीः ॥

अर्थरूपं महादेवं पार्वतीशं नमाम्यहम्
यत्कृपातोऽत्रनवमे व्याख्याम्यर्थानुशासनम् ।

पूर्वास्मिन्नष्टमाध्याये काव्यार्थानां षोडश योनीः उदाहरणदिशा समन्वयपूर्वकं प्रदर्श्य संप्रति काव्यार्थानां सावान्तरभेदान् भेदानुपदर्शयितुमासूत्रयति—अर्थेति । अर्थानां काव्यार्थानामनुशासनं विद्यार्थिभ्योऽनुशिक्षणम् क्रियते। काव्यार्थानां भेदोपभेदद्वारा काव्यसाहित्यविद्याधिजिगीषूणामन्तेवासिनां ज्ञानसौकर्याय अनुशासनं कुर्मः । मुद्रितपुस्तकेत्वत्र अर्थव्याप्तिरिति मूर्द्धन्यलेखः ।

सेति । स काव्यार्थः त्रिधा त्रिप्रकारः । इति द्रौहिणिः दुहिणानुयायी कश्चिदाचार्यः, भरतो वा । दिवि भवो दिव्यः स्वर्गीयः एकः (दिगादिभ्यो यदिति यत् )दिव्यमानुषोभयप्रकारो द्वितीयः । मानुषो मनुष्यलौकिकस्तृतीयः । ग्रन्थकृत्स्वमतं दर्शयति-सप्तधेति । काव्यार्थो न केवलं त्रिप्रकारः किन्तु सप्तधा सप्तप्रकारः । इति ग्रन्थकारः । पाताले भवः पातालीयोर्थः । मर्त्त्यपातालोभयलोकसमुत्थो मर्त्त्यपातालीयः । द्युलोकपाताललोकोभयसमुत्थो दिव्यपातालीयः । द्युलोकमृत्युलोकपाताललोकेषु भवोर्थः दिव्यमर्त्यपातालीयः तत्र सप्तविधकाव्यार्थेषु दिव्यार्थः । स्मृत्वेति ।

वारस्य अवसरस्य वासः स्थानं वारवासः संकेतस्थानमितियावत् ।

वासो वेश्मन्यवस्थाने वासा स्यादाटरूषके" इति हेमः ।
वारः सूर्यादिदिवसे वारोऽवसरवृन्दयोः ।
कुब्जवृक्षे हरे द्वारे वारं मद्यस्य भाजने । इति विश्वः ।

निजो यो वारवासः निजवारवासः । तस्मिन् गतया प्राप्तया रम्भया स्वनामप्रसिद्धाप्सरसा । विरहात् वारवासे नलकूवरवियोगात् । नलकूवरस्य कुवेरपुत्रस्य स्मृत्वा-कुवेरपुत्रसम्बन्धि स्मरणं कृत्वेत्यर्थः । मातुः स्मरतीतिवत् नलकूवरस्येति सम्ब-

तेनैरावणकर्णचापलमुषा शक्रोऽपि निद्रां जह-
द्भूयः कारित एव हासिनि शचीवक्त्रे दृशां सम्भ्रमम् ॥"

दिव्यमानुषस्तु चतुर्द्धा। दिव्यस्य मर्त्यागमने, मर्त्यस्य च स्वर्गगमन इत्येको भेदः। दिव्यस्य मर्त्यभावे, मर्त्यस्य च दिव्यभाव इति द्वितीयः।

---

न्धसामान्ये षष्ठी। उक्तं च दीक्षितैरपि-कर्मादीनामपि सम्बन्धमात्रविवक्षायां षष्ठ्ये-वेति। उत्कञ्चुलं रम्भायाः सरोमाञ्चतया उद्गतकञ्चुलिकं यथा स्यात्तथा (उत्कञ्चुल-मिति उद्गानक्रिया विशेषणम्) तुम्वरोः एतन्नामकयक्षस्य वीणासमं कलावतीवीणा-तुल्यम्। तुम्वरूप्रभृतीनां वीणायाः संज्ञा वैजयन्त्यां निर्दिष्टा तद्यथा।

विश्वावसोस्तु बृहती तुम्बुरोस्तु कलावती
महती नारदस्य स्यात् सरस्वत्यास्तु कच्छपी। इति॥

यदुद्गीतम् उत्कृष्टगानं कृतम्। रमणीनां स्वरमाधुर्यस्य वीणास्वरतुल्यत्वमन्यत्रापि दृश्यते। यथा

कण्ठे वसन्ती चतुरा यदस्याः सरस्वती वादयते विपञ्चीम्।
तदेव वाग्भूय मुखे मृगाक्ष्याः श्रोतुः श्रुतौ याति सुधारसत्वम्। इति॥

ऐरावणस्य इन्द्रहस्तिनः कर्णयोश्चापलं चांचल्यं मुष्णातीति तेन। ऐरावणकर्णचा पलमुषा, तेन उत्कृष्टगानेन शक्र इन्द्रोऽपि निन्द्रां स्वापं जहत् भूयः वारंवारं हासिनि सहासे शचीवक्त्रे इन्द्राणीमुखे दृशां दृष्टीनां सम्भ्रमम् संवेगम् संचलनमिति यावत्। समौ संवेगसंभ्रमौ इत्यमरः। (१)कारितः। अत्र अर्थस्य रम्भानलकूवरादिदिव्य-पात्राश्रयतया दिव्यत्वम्।

दिव्यमानुषस्य चतुःप्रकारान् दर्शयति—चतुर्द्धेति। दिव्यः पुरुषः कदाचिन् मर्त्यलोकमागच्छेत्। मर्त्यो वा कदाचित् स्वर्गं गच्छेत्। इत्येकः प्रकारः। दिव्यस्य

---

(१) कारित इति ण्यन्तात्कृधातोः कर्मणि क्तप्रत्ययः। तेन शक्रस्य प्रथमान्तता। एवमत्र बो-ध्यम्। शक्रः (दृशां) संभ्रममकार्षीत् संभ्रमं कुर्वन्तं शक्रं ऐरावणकर्णचापलमुट् गानं प्रैरिरत् इति-स्थिते हृक्रोरन्यतरस्यामिति अण्यन्तावस्थस्य कर्त्तृभूतस्य शक्रस्य कर्मत्वम्। तथा च ऐरावणकर्ण चापलमुषा गानेन शक्रं [निद्रां जहन्तम्] सम्भ्रममचीकरत्। ततश्च प्रयोज्यकर्मणि (शक्रे) क्तप्रत्ययः तथा च उक्ते तु प्रथमैव स्यादिति नियमबलेन शक्रशब्दे प्रथमा। अत्र प्रयोजककर्तृगा-नम्। प्रयोज्यं कर्म्म शक्रः। लादिकानां प्रत्ययानां विधित्वंनियामक कारिका—

यथा—गौणे कर्मणि दुह्यादेः प्रधाने नीहृकृष्वहाम्।
बुद्धिभक्षार्थयोः शब्दकर्मकाणां निजेच्छया।
प्रयोज्यकर्मण्यन्येषां ण्यन्तानां लादयो मताः॥

दिव्येतिवृत्तपरिकल्पनया तृतीयः । प्रभावाविर्भूतदिव्यरूपतया चतुर्थः । तत्र दिव्यस्य मर्त्यागमनम्—

"श्रियः पतिः श्रीमति शासितुं जगज्जगन्निवासो वसुदेवसद्मनि ।
वसन्ददर्शावतरन्तमम्बराद्धिरण्यगर्भाङ्गभुवं मुनिं हरिः ॥"

---

जन्मतो मानुषत्वे । मर्त्यस्य प्राणविमोचनादिना स्वर्गीयत्वे सति द्वितीयः प्रकारः । अदिव्ये दिव्यसम्बन्धिकथानकपरिकल्पनायाम् तृतीयः प्रकारः । मर्त्यस्य सतः प्रभावेण स्वतेजोमाहात्म्येन दिव्यत्वप्रकटने चतुर्थः प्रकारः । तत्र चतुर्षु प्रकारेषु स्वर्ग्यस्य मर्त्यलोकागमनं प्रथमस्य प्रथममुदाह्रियते ।

श्रियः पतीति । कदाचिद् हरिर्मुनिं ददर्श । ननु हरयो दश संख्याता वर्त्तन्ते—

अर्कमर्कट मण्डूक विष्णु वासववायवः ।
तुरङ्गसिंहशीतांशुयमाश्च हरयो दश ॥ इति ।

तत् कोऽयं हरिरित्याह–श्रियो लक्ष्म्याः पतिः विष्णुः कृष्ण इत्यर्थः । अनेन रुक्मिणीरूपया श्रिया समेत इति सूचितम् । यथोक्तं विष्णुपुराणे–राघवत्वेऽभवत्सीता रुक्मिणी कृष्णजन्मनी । इति

मुनिं कमित्याह–हिरण्येति । हिरणस्य गर्भो हिरण्यगर्भो ब्रह्मा ब्रह्माण्डप्रभवत्वात् तस्याङ्गादुत्सङ्गरूपावयवात् । भवतीति भूस्तं हिरण्यगर्भाङ्गभुवं ब्रह्मतनयं नारदमित्यर्थः उत्सङ्गान्नारदो जज्ञे दक्षोऽङ्गुष्ठात्स्वयम्भुवः इति विष्णुपुराणात् । यद्यपि हरिणा ब्रह्मपुत्रत्वेन तदा नाज्ञायि, अन्यथा क्रमादमुंनारद इत्यवोधि स इत्यस्य निष्प्रयोजनत्वं स्यात् तथापि कविना तु ज्ञात एव तस्य चैतद्वचनम् तस्मात्तथोक्तावपि न दूषणम् । क्वाद्राक्षीदित्याह । वसुदेवेति । वसुदेवस्य शूरसेनपुत्रतां गतस्य वसुदेवरूपिणः कश्यपस्य सद्मनि वेश्मनि श्रीमति सर्वसमृद्धियुते वसन् तिष्ठन् । ननु वैकुण्ठनिवासी श्रीविष्णुः किमिति तत्रोवासेत्याह–जगदिति । जगत् शासितुं दुष्टशिष्टयोर्निग्रहानुग्रहौ कुर्वन् त्रिभुवनं शिक्षयितुम् । एतेन भगवतः कर्माधीनत्वं निरस्तम् । ननु श्रीनाम्न्याः कस्याश्चन स्त्रियः पतित्वात्कथं हरे विष्णुत्वमित्यत आह—जगदिति जगतां भुवनानां निवासः आधारः । निवसन्त्यस्मिन्निति निवासः । कुक्षिस्थाखिललोक इत्यर्थः । एतादृशस्य विष्णुत्वमेव नान्यत्वम् । किमवस्थं मुनिं ददर्शेत्यत आह–अम्बरादिति । अम्बरादाकाशादवतरन्तं पतन्तम् । अत्राल्पीयसि वसुदेवसद्मनि निखिललोकाधारतया महीयसो हरेराधेयत्वकथनादधिकालंकारः । तदुक्तं—

महतोर्यन्महीयांसावाश्रिताश्रययोः क्रमात् ।
आश्रयाश्रयिणौ स्यातां तनुत्वेऽप्यधिकं तु तत् ॥ इति ।

जगन्निवासस्य जगदेकदेशनिवासित्वमिति विरोधश्च । तथा तकार सकारादेः केव-

मर्त्यस्य स्वर्गगमनम्—

"पाण्डोर्नन्दन नन्दनं वनमिदं सङ्कल्पजैः शीधुभिः
क्लृप्तापानककेलि कल्पतरुषु द्वन्द्वैः सुधालेहिनाम्।
अप्यत्रेन्दुशिलालवालवलयं सन्तानकानां तले
ज्योत्स्नासंगलदच्छनिर्झरजलैर्यत्नं विना पूर्यते ॥"

दिव्यस्य मर्त्यभावः—"इति विकसति तस्मिन्नन्ववाये यदूनां
समजनि वसुदेवो देवकी यत्कलत्रम्।
किमपरमथ तस्मात्षोडशस्त्रीसहस्र-
प्रणिहितपरिरम्भः पद्मनाभो बभूव ॥"

---

स्यासकृदावृत्त्या जगज्जगदिति सकृद्वर्णद्वयसादृश्याच्च वृत्त्यनुप्रासभेदौ शब्दालंकारौ एषां चान्योन्यनैरपेक्ष्येणैकत्र समावेशात् संसृष्टिः।

सेष्टा संसृष्टिरेतेषां भेदेन यदिह स्थितिरित्युक्तेः।

पाण्डोरिति। हे पाण्डोर्नन्दन ? अर्जुन ? इदं नन्दनं वनम् इन्द्रोद्यानम्। अत्र वने कल्पतरुषु कल्पवृक्षेषु सुधालेहिनाममृताशिनां द्वन्द्वै मिथुनैः कर्तृभिः संकल्पजैः इदं मम भवतु इति मानस कर्मणा प्राप्तैः। संकल्पः कर्म मानसम् इत्यमरः। शीधुभिर्मद्यैः पक्वेक्षुरसोद्भवैः।

तदुक्तम्—

शीधुरिक्षुरसैः पक्वैरपक्वैरासवं भवेत्।
मैरेयं धातकीपुष्पगुडधानाम्बुसंहितम् ॥ इति।

क्लृप्ता रचिताः आपानकेषु पानगोष्ठीषु। स्वार्थे कन्। आपानं पानगोष्ठिका इत्यमरः। केलयो यस्मिन् तत्। अपि चात्र सन्तानकानां सुरद्रुमविशेषाणाम्। संतानः संततौ गोत्रे स्यादपत्ये सुरद्रुमे। इति मेदिनी। तले नीचैः। इन्दुशिलया चन्द्रकान्तमणिना निर्मितमालवालवलयं (आसमन्ताज्जलस्य लवमालातीति आलवालं तस्य वलयं मण्डलम्) आवालमण्डलम्। "स्यादालवालमावालमावापः" इत्यमरः। ज्योत्स्नया संगलन्ति चन्द्रिकासम्पर्केण द्रवीभवन्ति यानि अच्छानि निर्मलानि निर्झरस्य प्रवाहस्य जलानि तैरेव। यत्नमायासं विना पूर्यते पूर्णं भवति।

इदं मर्त्ये पाण्डुपुत्रे अस्त्रविद्याशिक्षणार्थं स्वर्गते कश्चिदिन्द्रभृत्यः नन्दनवनं परिदर्शयति—इत्यतः मर्त्यस्य स्वर्गगमनविषयकमुदारणम्।

इति विकसतीति। इतीत्थं विकसति प्रसरति तस्मिन् प्रसिद्धे यदूनां यदुवंशीयानामन्ववाये कुले वासुदेवः समजनि। यत्कलत्रं देवकी वर्त्तते। किमपरं वक्तव्यम्। अथ तस्मात् देवकीवसुदेवमिथुनात् षोडशस्त्रीणां सहस्रे प्रणिहितः कृतः परिरम्भः गाढालि-

मर्त्यस्य दिव्यभावः—

"आकाशयानतटकोटिकृतैकपादास्तद्धेमदण्डयुगलान्यवलम्ब्य हस्तैः ।
कौतूहलात्तव तरङ्गविघट्टितानि पश्यन्ति देवि मनुजाः स्वकलेवराणि ॥"

दिव्येतिवृत्तपरिकल्पना—

"ज्योत्स्नापूरप्रसरविशदे सैकतेऽस्मिन्सरय्वा
वादद्यूतं चिरतरमभूत्सिद्धयूनोः कयोश्चित् ।
एको ब्रूते प्रथमनिहतं कैटभं कंसमन्यः
स त्वं तत्त्वं कथय भवता को हतस्तत्र पूर्वम् ॥"

प्रभावाविर्भूतदिव्यभावः—

"मा गाः पातालमुर्वि स्फुरसि किमपरं पात्यमानः कुदैत्य ?
त्रैलोक्यं पादपीतप्रथिम, नहि बले ? पूरयस्यूनमङ्घ्रेः ।

---

ङ्गनं येनासौ । तथाभूतः । पद्मं नाभौ यस्यासौ विष्णुः साक्षाद् बभूव आविरास । इदं दिव्यस्य भगवतो वसुदेवात् देवक्यां जन्मग्रहणात् मर्त्यत्वे उदाहरणम् ।

आकाशेति । हे देवि ? हे गङ्गे ? त्वन्मज्जनेन निर्धूतकल्मषत्वात् स्वर्गगमनसमय आकाशयानस्य विमानस्य तटः उत्सेधः । तस्य कोटौ कोणे कृत एकः पादो यैस्ते आकशयानतटकोटिकृतैकपादाः मनुजाः । तस्य आकाशयानस्य हेमदण्डयोर्युगलानि हस्तैरवलम्ब्य दण्डाश्रयेण तत्र स्थित्वेत्यर्थः

तव तरङ्गैर्विघट्टितानि विलोडितानि स्वकलेवराणि निजशरीराणि कौतूहलात् कौतुकात्-पश्यन्ति अवलोकयन्ति ।

इदं मरणसधर्मणः पुंसो गङ्गास्नानजन्यपुण्यलब्धदिव्यत्व उदाहरणम् ।

ज्योत्स्नेति । ज्योत्नायाः पूरस्य समूहस्य प्रसरेण विशदे स्वच्छे अस्मिन् सरय्वाः सैकते सिकतामये तटे कयोश्चिदनिर्दिष्टनामयोः सिद्धयूनोः चिरतरं चिरकालं वादद्यूतं वाग्विवादोऽभूत् जातः । एकः तयोर्मध्ये प्रथमः कैटभं प्रथमनिहतं पूर्वमारितं ब्रूते कथयति । अन्यो द्वितीयः कंसं प्रथमनिहतं ब्रूते । अर्थादेकेनोक्तं भगवता पूर्वं कैटभो मारितः पश्चात्कंसो हतः । अन्येनोक्तं यत् पूर्वं कंसो निहतः पश्चात्कैटभो निहतः ॥ अतो हे भगवन् स त्वं कंसकैटभयोर्निहन्ता भवान् तत्त्वं वस्तुस्थितिं कथय । तत्र तयोर्मध्ये पूर्वं भवताको हतः को मारितः । अत्र राज्ञि दिव्यकथानकं परिकल्पितम् ।

मा गा इति । हे उर्वि ? पातालं रसातलं मागा मा गच्छ । हे कुदैत्य ? पाटयमानः किमपरं स्फुरसि इदानीं पाटितएव मारित एवेत्यर्थः । हे बले ? त्रैलोक्यं पादेन चरणेपी नतः प्रथिमा वैपुल्यं यस्य तत् पादपीतप्रथिम जातम् । अत । एव अङ्घ्रेश्चरणादूनं

इत्युत्स्वप्नायमाने भुवनभृति शिशावङ्कसुप्ते यशोदा
पायाच्चक्राङ्कपादप्रणतिपुलकितस्मेरगण्डस्थला वः ॥"

मर्त्यः—"विधूः श्वश्रूस्थाने व्यवहरति पुत्रः पितृपदे
पदे रिक्ते रिक्ते विनिहितपदार्थान्तरमिति ।
नदीस्रोतोन्यायादकलितविवेकक्रमघनं
न च प्रत्यावृत्तिः प्रवहति जगत्पूर्णमथ च ॥"

पातालीयः—
"कर्कोटः कोटिकृत्वः प्रणमति पुरतस्तक्षके देहि चक्षुः
सज्जः सेवाञ्जलिस्ते कपिलकुलिकयोः स्तौति च स्वस्तिकस्त्वां ।
पद्मः सद्मैष भक्तेरवलगति पुरः कम्बलोऽयं बलोऽयं
सोत्सर्पः सर्पराजो व्रजतु निजगृहं प्रेष्यतां शङ्खपालः ॥"

---

न्यूनं नहि पूरयसि पूर्णं नहि करोसि। इतीत्थम्। उत्स्वप्नायमाने स्वप्नमाददाने सति। भुवनभृति त्रैलोक्यधारके अङ्कसुप्ते शिशौ श्रीकृष्णे। चक्राङ्कौ यौ पादौ तयोः प्रणतिसमये पुलकितं सरोमाञ्चं स्मेरम् ईषद्धासं गण्डयोः स्थलं यस्याः सा यशोदा वो युष्मान् पायात् रक्षेत्। अत्र यशोदाङ्कसुप्तः शिशुरपि भगवान् श्रीकृष्णः नृसिंहावतारीय वामनावतारीयविषयौ उत्स्वप्नवचसा निदर्शयन् दिव्यत्वमाविश्चकार।

वधूरिति। वधूः स्नुषा श्वश्रूस्थाने (गृहस्वामिनीपदे) व्यवहरति कार्य्यं सम्पादयति। पुत्रः पितृपदे व्यवहरति। एवं रिक्ते रिक्ते शून्ये शून्ये पदे स्थाने। विनिहितं यत्पदार्थान्तरं धृतवस्त्वन्तरमित्येवंरूपान्नदीस्रोतोन्यायात (एकं स्रोत आगच्छति अपरं गच्छति पुनरन्यत् इति गतागतप्रवाहपरम्परारूपो नदीस्रोतोन्यायः) विवेकस्य क्रमः विवेकक्रमः। अकलितोऽनुसन्धानरहितः विवेकक्रमस्य विचारपरिपाटयाः घनो विस्तारः परम्परेति यावत्। अथवा दार्ढ्यं यत्र तत् जगत् लोकः प्रवहति। न च तस्य प्रवाहीभूतस्य जगतः प्रत्यावृत्तिः पुनरावर्त्तनम्। अथच तथापि पूर्णं निरवच्छिन्नं च। अत्र मर्त्यलोकसम्भूतानां प्राणिनामयं व्यवहार इति दर्शितम्।

कर्कोट इति। कर्कोटः एतन्नामकः सर्पः कोटिकृत्वः। कोटिकृत्व इति पाठः समीचीनः। कोटिकुण्ठः इति तु अशुद्धः पाठः। अस्तु वा कोटिकुण्ठमिति पाठः। कोटिः कोटिसंख्या कुण्ठा अकिंचित्करा यस्मिन् कर्मणीति कोटिकुण्ठमिति प्रणतिक्रियाशेषणम्। अयं भावः। कर्कोटेन इयन्तः प्रणामाः सम्पादिता यद्गणनायां कोटिः संख्याऽपि अपास्ता। कोटिवारं प्रणमति। हे भगवन्? पुरतोऽग्रे स्थिते तक्षके एतन्नामके सर्पे चक्षुर्देहि। ते तुभ्यं तव कृते कपिलकुलिकयोः सर्पयोः सेवाञ्जलिः सेवार्थमंजलिः सज्जः। अथ च स्वस्तिकः सर्पः स्तौति। एष पद्मः सर्पः भक्तेः सद्म गृहम्। अयं वलो

मर्त्यपातालीयः—

"आर्द्रावले ? व्रज न वेत्स्यपकर्ण ? कर्णो द्विः सन्दधाति न शरं हरशिष्यशिष्यः।
तत्साम्प्रतं समिति पश्य कुतूहलेन मर्त्यैः शरैरपि किरीटिकिरीटमाथम्॥"

इहापि पूर्ववत्समस्तमिश्रभेदानुगमः। दिव्यपातालीयः—

"स पातु वो यस्य शिखाश्मकर्णिकं स्वदेहनालं फणपत्रसञ्चयम्।
विभाति जिह्वायुगलोलकेसरं पिनाकिनः कर्णभुजङ्गपङ्कजम्॥"

---

बलवान् कम्बलः पुरोऽवलगति। सर्पराजो वासुकिः सोत्सवं यथा तथा व्रजतु गच्छतु। शङ्खपालो निजगृहं प्रेष्यताम्। अत्र पातालोद्भवसर्पाणां वर्णनात्मकः पातालीयोऽर्थः।

आर्द्रावल इति। इयं च महाभारते कर्णार्जुनसङ्ग्रामे सर्पकर्तृकस्वस्यन्दनाकर्षणसमये सर्पान् प्रति कर्णस्योक्तिः। हे आर्द्रावले ? एतन्नामकसर्प ? व्रज गच्छ। हे अपकर्ण ? कर्णशून्यसर्प ? कर्णं मां न वेत्सि। अरे हरशिष्यशिष्यः पशुरामान्तेवासी। एतेन स्वस्यास्त्रादिविद्यायां प्रौढिः, सम्प्रदायशुद्धिः उच्चवंश्यता च ध्वन्यते। द्विः द्विवारं शरं वाणं न सन्दधाति न सन्धरति। तत्तस्मात् साम्प्रतं समिति युद्धे मर्त्यैरपि शरैः किरीटिसम्बन्धिनः किरीटस्य मुकुटस्य माथं मथनं पतनमिति यावत्। कुतूहलेन कौतुकेन पश्य।

अत्र कर्णसर्पविषयकार्थनिबन्धनतया मर्त्यपातालीयोर्थः।

इहापीति। इहापि मर्त्यपातालीयेऽपि पूर्ववत् दिव्यमानुषवत् समस्तानां सम्पूर्णानां मिश्रभेदानामनुगमो बोधः कार्यः। तद्यथा मर्त्यस्य पातालगमने, पातालीयस्य मर्त्यागमने इत्येको भेदः। मर्त्यस्य पातालीयत्वे पातालीयस्य मर्त्यत्वे इति द्वितीयः मर्त्यैतिवृत्तपरिकल्पनया तृतीयः। सतोपि पातालीयत्वे प्रभावाविर्भूतमर्त्यरूपतया चतुर्थः। उदाहरणानि तु समेषामेषां ग्रन्थान्तरेभ्य उह्यानि। अस्माभिस्तु ग्रन्थविस्तरभिया नोदाह्रियन्ते। दिव्यश्चासौ पातालीयश्चेति दिव्यपातालीयोर्थः।

स पात्विति। स पिनाकी शिवो वो युष्मान् पातु। यस्य पिनाकिनः कर्णभुजङ्गपङ्कजम् कर्णपार्श्वस्थितसर्परूपं कमलम् विभाति शोभते। कीदृशं कमलम् शिखाश्मकर्णिकम्। ये मणिसर्पत्वेन प्रसिद्धा नागास्तेषां शिखायां मणयः सम्भवन्ति। अत्राश्मपदेन लक्षणया मणिर्गृह्यते। शिखामणिरेव कर्णिका पद्मबीजकोशी। कर्णिका कर्णभूषणे। करिहस्ताङ्गुलो पद्मबीजकोश्याम्, इत्यमरः। यस्मिंस्तत्। पुनः कीदृशं स्वदेह एव नालं कमलदण्डो यस्मिंस्तत्। फण एव स्फटा एव पत्रसंचयो यस्मिंस्तत्। फणशब्दः पुंस्यपि स्फटायां तु फणा द्वयोरिति कोशप्रामाण्यात्। पुनः कीदृशं जिह्वायुगलोलकेसरम्। जिह्वयोर्युग एव लोलाश्चञ्चलाः केसरा यस्मिंस्तत्।

अत्र दिव्यः शिवः, पातालीयः सर्पः। उभयसम्बद्धोर्थो वर्णितः।

दिव्यमर्त्यपातालीयः—

> आस्तीकोऽस्ति मुनिः स्म विस्मयकृतः पारीक्षितीयान्मखा-
> त्त्राता तक्षकलक्ष्मणः फणभृतां वंशस्य शक्रस्य च।
> उद्वेल्लन्मलयाद्रिचन्दनलतास्वान्दोलनप्रक्रमे
> यस्याद्यापि सविभ्रमं फणिवधूवृन्दैर्यशो गीयते॥"

"सोऽयमित्थङ्कारमुल्लिख्योपजीव्यमानो निःसीमोर्थसार्थः सम्पद्यते इत्याचार्याः। अस्तु नाम निःसीमोर्थसार्थः। किन्तु द्विरूप एवासौ विचारितसुस्थोऽविचारितरमणीयश्च। तयोः पूर्वमाश्रितानि शास्त्राणि तदुत्तरं का-

---

आस्तीकोऽस्तीति। विस्मयकृतः आश्चर्यकारिणः पारीक्षितीयात् परीक्षित्सम्बन्धिनो मखाद्यज्ञात्। फणाभृतां सर्पाणां मध्ये तक्षकलक्ष्मणः तक्षकेति लक्षितस्य वंशस्य कुलस्य, शक्रस्येन्द्रस्य च त्राता रक्षक आस्तीक एतन्नामा मुनिरस्ति। उद्वेल्लन्त्यो या मलयाद्रिसमुद्भवाश्चन्दनलतास्तासु सञ्चलन्मलयाद्रिचन्दनवल्लीषु। आन्दोलनप्रक्रमे दोलाक्रीडासमारम्भे फणिवधूनां वृन्दैः समूहैः। अद्यापि यस्य यशः आस्तीकस्य कीर्तिः। सविभ्रमं सहावम्। विभ्रमो भ्रान्तिहावयोरिति हैमः। गीयते कीर्त्यते।

शक्रो दिव्यः, आस्तीकमुनिः मर्त्यः, सर्पाः पातालीयाः। एतत्त्रितयसम्बद्धार्थवर्णनादत्र दिव्यमर्त्यपातालीयोर्थः।

नन्वेवमर्थस्य निःसीमत्वं प्रसज्येत ततः को नाम गणयितुं शक्यते इयन्तोऽर्था इत्याशङ्क्यन्ते-सोयमिति। सोयमर्थात् इत्थंकारं उपर्युक्तप्रकारेण उल्लिख्य उट्टङ्क्य प्रतिभया प्रादुर्भाव्य उपजीव्यमानः संसेव्यमानः अर्थसार्थः अर्थसमूहः निःसीमः सम्पद्यते। इत्याचार्याः।

आचार्योक्तं स्वीकृत्य निःसीमत्वमर्थस्य परिहरति। नामेति। अस्त्विति स्वीकारार्थेऽव्ययं, क्रिया वा। अस्तु नाम भवतु नाम अर्थसार्थः निःसीमः।

किन्तु असावर्थः द्विरूपः एव। द्वे रूपे यस्यासौ। एको विचारितेऽपि सुस्थः स्थितिमासादयति क्षोदक्षम इति यावत्। अपरो विचारित एव रमणीयः सुन्दरः। आपातरमणीयः इत्यर्थः। तयोः विचारितसुस्थाविचारितरमणीययोर्मध्ये पूर्वं विचारितसुस्थं शास्त्राणि आश्रितानि। अस्मादुत्तरं विचारितसुस्थात्परमविचारितरमणीयं काव्यान्याश्रितानि। अयं भावः शास्त्रीयः पदार्थो यथा यथा विचार्यते तथा तथा नवीभवति क्षोदं सहते च। अतो विचारितसुस्थः। काव्यवर्णित, पदार्थ आपाततश्चमत्कृतिमुत्पादयति विचार्यमाणे तुषाणां कण्डनमिव पलालिधूततमिव वा भवति। अत आपातरमणीयः। इति औद्भटा, उद्भटश्लोकपाठिनः पण्डिताः।

व्यानि" इत्यौद्भटाः। यथा—

"अपां लङ्घयितुं राशिं रुचा पिञ्जरयन्नभः।
खमुत्पपात हनुमान्नीलोत्पलदलद्युतिः॥"

यथावा—"त आकाशमसिश्यामुत्पत्य परमर्षयः।
आसेदुरोषधिप्रस्थं मनसा समरंहसः॥"

यथा च—"तदेव वारि सिन्धूनां महत्स्थेमार्चिषामिति" इत्यादि॥

"न स्वरूपनिबन्धनमिदं रूपमाकाशस्य सरित्सलिलादेर्वा किन्तु प्रतिभासनिबन्धनम्। न च प्रतिभासस्तादात्म्येन वस्तुन्यवतिष्ठते, यदि तथा स्यात्सूर्याचन्द्रमसोर्मण्डले दृष्ट्या परिच्छिद्यमानद्वादशाङ्गुलप्रमाणे पुराणाद्याग-

---

अपामिति। हनुमान् मारुतिः। अपां राशिं समुद्रं लङ्घयितुं उत्प्लुत्य पारं यातुम्। नीलोत्पलदलद्युति नभ आकाशं रुचा कान्त्या पिञ्जरयन् पीतीकुर्वन्। पिञ्जरोऽश्वान्तरे पीते क्लीवं स्वर्णे च पीतने इति कोषः। खमाकाशमुत्पपात। अत्र नीलोत्पलदलस्येव द्युतिर्यस्येति वाचकलुप्तोपमा। रुचा नभसः पिञ्जरत्वोक्त्या स्वकीयनीलिमगुणत्यागेन हनुमतः पीतिमगुणग्रहणात्तद्गुणालङ्कारः। "तद्गुणः स्वगुणत्यागादत्युत्कृष्टगुणग्रहः" इति लक्षणात्।

अत्र नभसो नीलोत्पलद्युतिकथनं रुचा पिञ्जरीकरणत्वकथनमापातरमणीयम्। यतो नभसः शून्यरूपतया निरवयवत्वात् गुणानां च सावयवद्रव्याश्रितत्वात्।

त अकाशमिति। ओषधिप्रस्थं हिमालयम्। असिश्याममित्यत्र असिवच्छयामिति वाचकलुप्तोपमा। मनसा समरंहस इत्यत्र च पूर्णोपमा। अत्रापि असिश्याममिति पूर्ववत्। परमर्षीणां मनसा समरंहस्त्वं तु भवितुं युज्यते तपसोऽलौकिकमाहात्म्यात्।

तदेवेति। सिन्धूनां नदीनां तद् वारि एव। अर्चिषां तेजसां महद् विपुलं स्थेम स्थानम्।

न स्वरूपेति। आकाशस्य नदीजलादेर्वा इदमुपरिवर्णितं रूपं सौन्दर्यम्। "रूपं तु श्लोकशब्दयोः पशावाकाशे सौन्दर्ये नाणके नाटकादिके" इति हैमः, न स्वरूपनिबन्धनम् न तादृशरूपकथने स्वभाव एव कारणम्, किन्तु तादृशकथने प्रतिभास एव आभास एव कारणम्। यतो हि प्रतिभासः तादात्म्येन अभेदेन वस्तुनि द्रव्ये नावतिष्ठते यदि तथा स्यात् प्रतिभासस्तादात्म्येन वस्तुन्यवतिष्ठेत तर्हि दृष्टया चक्षुषा परिच्छिद्यमानं परिमितत्वेन ज्ञायमानं द्वादशाङ्गुलानां प्रमाणं ययोस्ते सूर्याचन्द्रमसोः चन्द्रसूर्ययोः मण्डले। पुराणादिभिरागमेन च निगदितं धरावलयं महीमण्डलं प्रमाणं ययोस्ते। प्रमाणे मात्रच्। पुराणाद्यागमनिवेदितधरावलयमात्रे न स्तः न स्याताम्। अयं भावः। पुराणादिषु सु-

मनिवेदितधरावलयमात्रे न स्तः इति यायावरीयः । एवं नक्षत्रादीनां सरित्सलिलादीनामन्येषां च । यथाप्रतिभासं च वस्तुनः स्वरूपं शास्त्रकाव्ययोर्निबन्धोपयोगि । शास्त्रे यथा—

"प्रशान्तजलभृत्पङ्के विमले वियदम्भसि ।
ताराकुमुदसम्बन्धे हंसायत इवोडुराट् ॥"

काव्यानि पुनरेतन्मयान्येव । "अस्तु नाम निःसीमार्थसार्थः । किन्तु रसवत एव निबन्धो युक्तो न नीरसस्य" इति आपराजितिः। यदाह—

"मज्जनपुष्पावचयनसन्ध्याचन्द्रोदयादिवाक्यमिह ।

---

र्याचन्द्रमसो मण्डलस्य धरावलयमात्रत्वमुक्तं किन्तु दृश्यते द्वादशाङ्गुलद्वयसन्। अथ यदि यथादर्शमनुमन्यते तर्हि पुराणागमादीनामसत्यत्वं स्यात्। तस्मान्नावतिष्ठते तादात्म्येन वस्तुनि प्रतिभासः । एवं सूर्यादिमण्डलवत्। अन्येषां पर्वतादीनां च प्रमाणादिविषये ज्ञेयम् । यथाप्रतिभासं चेति। अत्र चकार एवार्थः। यथाप्रतिभासमेव यथादर्शमेव वस्तुनो द्रव्यस्य स्वरूपं शास्त्रकाव्ययोरन्तराले निबन्धोपयोगि ग्रथनायोपयुज्यते ।

प्रशान्तेति । प्रशान्तः क्षीणः जलभृदेव मेघ एव। जातित्वादेकवचनम् । पंको यस्मिन् तस्मिन् पङ्कोऽस्त्रीशादकर्दमावित्यमरः । अत एव विमले अनाविले स्वच्छे । तारा एव कुमुदानि तेषां सम्बन्धो यस्मिँस्तस्मिन् । वियदम्भसि आकाशरूपे जले । उडुराट् चन्द्रः हंसायत इव ।हंससदृशाचरणं करोतीव । अत्र जलभृति पङ्कत्वारोपे तारासु कुमुदत्वारोपे सति वियति अम्भस्त्वारोपः । वियति अम्भस्त्वारोपे सति चन्द्रे हंससदृशविहाररूपाचरणकर्तृत्वारोपो युज्यते । इति मालारूपं भेदभाजि परम्परितं रूपकम् । तदुक्तं प्रकाशे ।

नियतारोपणोपायः स्यादारोपः परस्य यः
तत्परम्परितं श्लिष्टे वाचके भेदभाजि वा । इति

एवमत्र रूपकानुप्राणिते उपमोत्प्रेक्षे । एतयोश्च परस्परं भेदेन स्थितत्या संसृष्टिः ।

एतन्मयान्येव अविचारितरमणीयमयान्येव । रसवत एव सरसस्य अर्थस्य एव निबन्धो ग्रथनम् । आपराजितिरिति कश्चिद्ग्रन्थकारः । हेमचन्द्रकृतकाव्यानुशासने लोल्लटीयत्वेन यस्य पद्यस्योपन्यासः कृतः तदेव पद्यमनेन आपराजितीयत्वेन उपन्यस्तमतः सम्भाव्यते यदयम् अपराजितेरपत्यत्वाल्लोल्लटमापराजितिपदेन व्यवहरति । प्रकाशीकृतश्चायमाशयो यदाहेति कथनेन ।

मज्जनेति । मज्जनं च पुष्पावचयनं च सन्ध्या च चन्द्रोदयादिश्चेति सर्वेषामितरेतर-

सरसमपि नातिबहुलं प्रकृतरसानन्वितं रचयेत् ॥
यस्तु सरिदद्रिसागरपुरतुरगरथादिवर्णने यत्नः ।
कविशक्तिख्यातिफलो विततधियां नो मतः स इह ॥"

'आम्' इति यायावरीयः । अस्ति चानुभूयमानो रसस्यानुगुणो विगुणश्चार्थः, काव्ये तु कविवचनानि रसयन्ति विरसयन्ति च नार्थाः; अन्वयव्यतिरेकाभ्यां चेदमुपलभ्यते । तत्र सरिद्वर्णनरसवत्ता—

"एतां विलोकय तलोदरि ताम्रपर्णी-
मम्भोनिधौ विवृतशुक्तिपुटोद्धृतानि ।
यस्याः पयांसि परिणाहिषु हारमूर्त्या
वामभ्रुवां परिणमन्ति पयोधरेषु ॥"

अद्रिवर्णनरसवत्ता—

"एतास्ता मलयोपकण्ठसरितामेणाक्षि ? रोधोभुव-
श्चापाभ्यासनिकेतनं भगवतः प्रेयो मनोजन्मनः ।

---

योगद्वन्द्वः । तेषां वाक्यं सरसमपि प्रस्तुतरसानन्वितं प्रस्तुतरसासम्वद्धमतिवहुलं अतिप्रचुरं न रचयेत् कुर्यात् ।

यस्त्विवति । तु किन्तु योहि सरितो नद्याः । अद्रेः सागरस्य पुरस्य तुरगस्य रथादेश्च वर्णने यत्नः । स कवयितुः शक्तेः ख्यातिमात्रफलः अतो विततधियां बुद्धिमतां नो मतः सम्मतः ।

स्वीकृत्य संवदति ग्रन्थकारः—अस्त्विवति । कश्चिदर्थो रसस्यानुकूलः कश्चिदर्थस्तद्विपरीत इत्यनुभवसिद्धवार्त्ता । किन्तु अन्वयव्यतिरेकाभ्यामिदमुपलभ्यते यत् काव्ये कवीनां वाक्यानि एव सरसाणि विरसाणि वा भवन्ति । नार्थाः सरसाः विरसा वा । यतः प्रतिभासम्पन्नः कविः सामान्यभूतमकिञ्चित्करं तुच्छं । अर्थं सरसं वैचित्र्यावहं च सम्पाद्य दर्शयति प्रतिभाशून्यस्तु सरसमपि विकरोति ।

तत्रार्थेषु सरितो वर्णनस्य सरसत्वं दर्शयति—एतामिति । पद्यमेतद्व्याख्यातं प्राक् पञ्चमाध्याये। अत्र नदीवर्णनं प्रस्तुतं तत्र नदीजलानि वामभ्रुवां पयोधरेषु हारत्वेन परिणतानीति श्रृंगाररसोद्दीपनविभावोत्र स्वीकृतः ।

अद्रेर्वर्णनस्य रसवत्तां दर्शयति—एतास्ता इति । इयं च कस्यचित्कामुकस्य कामिनीं प्रत्युक्तिः । एणवत् चञ्चले अक्षिणी यस्यास्तत्सम्बुद्धौ हे एणाक्षि ? मृगनेत्रे ? एताः पुरो दृश्यमानास्ताः पूर्वानुभूता मलयस्य मलयाद्रेरूपकण्ठं समीपे याः सरितस्तासां रोधो भुवस्तीरभूमयो वर्त्तन्ते । या च भगवतो मनो-

यासु श्यामनिशासु पीततमसो मुक्तामयीश्चन्द्रिकाः
पीयन्ते विवृतोर्ध्वचञ्चु विचलत्कण्ठं चकाराङ्गनाः ॥"

सागरवर्णनरसवत्ता—

"धत्ते यत्किलकिञ्चितैकगुरुतामेणीदृशां वारुणी
वैधुर्यं विदधाति दम्पतिरुषां यच्चन्द्रिकार्द्रं नभः ।
यच्च स्वर्गसदां वयः स्मरसुहृन्नित्यं सदा सम्पदां
यल्लक्ष्मीरधिदैवतं च जलधेस्तत्कान्तमाचेष्टितम् ॥"

एवं पुरतुरगादिवर्णनरसवत्तापि । विप्रलम्भेप्यतिरसवत्ता—

---

जन्मनः कामस्य प्रेयः प्रियतरम् । चापाभ्यासस्य निकेतनं धनुर्विषयकविज्ञानदार्ढ्याय पुनः पुनरावृत्तेर्गृहम् वर्त्तते । यासु तीरभूमिषु श्यामनिशासु बहुलपक्षीयरात्रिषु चकोराङ्गनाः जीवंजीववध्वः कत्र्यः । पीतं तमो याभिस्ताः । मुक्ता एव मुक्तामय्यः । स्वरूपार्थे मयट् । मुक्तास्वरूपाः चन्द्रिकाः कर्मभूताः । विवृताः प्रसृता ऊर्ध्वं चञ्चवो यस्मिन् कर्मणि तत् । विचलन् कण्ठो यस्मिन् कर्मणि तत् । यथा तथा पीयन्ते पिबन्ति । पीङ् पाने इत्यस्मात्कर्त्तरि लट् । अत्रार्द्रैः शृंगाररसोद्दीपनविभावत्वेन वर्णिततया सरसत्वमाविष्कृतं पद्यस्य ।

धत्ते इति । यत् वारुणी मदिरा । एणीदृशां नायिकानां किलकिञ्चितैकगुरुतां किलकिञ्चितेषु अभीष्टतमवस्तुसंगमजन्यहर्षात् स्मितशुष्करुदितादीनां साङ्कर्येषु । किलकिञ्चितलक्षणं यथा—

स्मितशुष्करुदितहसितत्रासक्रोधश्रमादीनाम् ।
साङ्कर्यं किलकिञ्चितमभीष्टतमसंगमादिजाद्धर्षात् ॥

एकगुरुतां प्रधानाचार्यत्वं धत्ते स्थापयति । यच्च चन्द्रिकया आर्द्रं सरसं नभ आकाशं दम्पतिरूषां प्रणयकेलिकलहजनितानां जायापत्योः क्रोधानां वैधुर्यं क्षीणतां विदधाति करोति । यच्च स्वर्गसदां देवानां सदा त्रिकाले नित्यं ध्रुवमविनश्वरं स्मरसुहृत्कामायतनं वयोऽवस्था यच्च लक्ष्मीः सम्पदामधिदैवतम् । तत् सर्वं जलधेः समुद्रस्य कान्तं मनोहरमाचेष्टितम् कृत्यम् ।

अत्र जलधिवर्णनप्रस्तावे तदुत्पन्नवस्तूनां कामोद्दीपकतया संभोगशृङ्गारोऽनुभूयते सरसैः ।

पुरवर्णनरसवत्ता-यथा—

यत्रोन्मदानां प्रमदाजनानामभ्रंलिहः शोणमणीमयूखः ।
संध्याभ्रमं प्राप्नुवतामकाण्डेप्यनङ्गनेपथ्यविधिं विधत्ते ।

इदं पुरप्रासादीयशोणमणीनां सुरतोत्सवोपयुक्तवेषरचनाविधायकत्वाच्छृङ्गाररसा-

"विधर्माणो भावास्तदुपहितवृत्तेर्न धृतये
सरूपत्वादन्ये विहितविफलौत्सुक्यविरसाः ।
ततः स्वेच्छं पूर्वेष्वसजदितरेभ्यः प्रतिहतं
क्व हीनं प्रेयस्या हृदयमिदमन्यत्र रमताम् ॥"
कुकविर्विप्रलम्भेऽपि रसवत्तां निरस्यति ।
अस्तु वस्तुषु मा वा भूत्कविवाचि रसः स्थितः ॥

"यथा तथा वास्तु वस्तुनो रूपं, वक्तृप्रकृतिविशेषायत्ता तु रसवत्ता । तथा च यमर्थं रक्तः स्तौति तं विरक्तो विनिन्दति मध्यस्थस्तु तत्रोदास्ते" इति पाल्यकीर्त्तिः ।

---

नुकूलं पद्यम् ।

तुरगवर्णनस्य सरसता–यथा—

अलक्षितगतागतैः कुलवधूकटाक्षैरिव ।
क्षणानुनयशीतलैः प्रणयकेलिकोपैरिव ॥
सुवृत्तमसृणोन्नतै र्मृगदृशामुरोजैरिव
त्वदीयतुरगैरिदं धरणिचक्रमाक्रम्यते ।

अस्य तुरगाणां नायिकाकटाक्षादिसादृश्योद्भावनया शृंगाररसानुस्यूतत्वमिव पद्यस्यानुभूयते ।

रथवर्णनरसवत्ता—यथा

विच्छिन्ना रथचक्रपद्धतिरियं हेलाप्लुतैर्वाजिनां
मायान्तीव जवेन संमुखममी मार्गस्थिताः शाखिनः
खेदं पादतलाहतेरिव पुरो गन्तुं गतो नेहते
पादानामनुकूलमारुतभरोद्धूतोपि धूलिव्रजः ।

शाख्यादीनां जवात्संमुखमागमनादीनामुक्तेः विस्मयजनकतया अद्भुतरसोत्रानुभूयते ।

विधर्माण इति । तस्यां नायिकायामुपहिता दत्ता वृत्तिर्भावो येन तस्य नायकस्य कृते विधर्माणो प्रतिद्वन्द्विनो भावाः पदार्थाः धृतये धैर्याय नालम् । अन्ये तद्विपरीताः अर्थात् सधर्माणो भावाः । सरूपत्वात्तुल्यरूपत्वात् विहितं कृतं यद्विफलं फलशून्यमौत्सुक्यमौत्कण्ठयं तेन विरसा नीरसाः । ततः कारणात् पूर्वेषु विधर्मभावेषु स्वेच्छं निसर्गत एव असजत् सम्बन्धमकुर्वत् । इतरेभ्यः सधर्मभ्यः प्रतिहतं बहुलौत्सुक्यसम्पादकतया दुःखाधिक्यसंभवान्निवृत्तमिदं प्रेयस्या प्रियया हीनं मे हृदयं मानसं अन्यत्र जागतेषु पदार्थेषु क्व रमतां सुखं विश्रान्ति वा अनुभवतु लभताम्वा ।

"येषां वल्लभया समं क्षणमिव स्फारा क्षपा क्षीयते
तेषां शीततरः शशी विरहिणामुल्केव सन्तापकृत्।
अस्माकं न तु वल्लभा न विरहस्तेनोभयभ्रंशिना-
मिन्दू राजति दर्पणाकृतिरयं नोष्णो न वा शीतलः॥"

---

अत्र विप्रलम्भरसः परां परिपोषपदवीमाप्तः सहृदयैरनुभूयते।

विप्रलम्भे रसवत्ता आवश्यिकीति दर्शयितुं श्लोकमवतारयति—कुकविरिति। कुत्सितः कवयिता विप्रलम्भेऽपि रसवत्तां निरस्यति दूरीकरोति। वस्तुषु रसोऽस्तु वा मा वास्तु नात्र व्युद्यते। किन्तु कविवाचि रसो वर्त्तते इति तु निर्विवादसिद्धम्।

स्वमतसंवादकमन्यमतमवतारयति—यथा तथेति। वस्तुस्वरूपं कीदृगेवास्तु रसवत्ता तु कवयितुः स्वभावविशेषनिघ्ना। यतोहि अनुरक्तो जनः यमर्थविशेषं स्तौति प्रशंसति' तमेवार्थमन्यो विरक्तो विनिन्दति, मध्यस्थ उदासीनस्तत्रार्थे उदास्ते माध्यस्थमवलम्बते। इति पाल्यकीर्त्तेर्मतम्। पाल्यकीर्त्तिः कश्चिज्जैनसाधुरासीत। यस्य अभयचन्द्रवादीभसिंहप्रभृतयः शिष्या आसन्निति तयोर्ग्रन्थीयपद्यावलोकनेन ज्ञायते। तौ श्लोकाविमौ क्रमशः—

मुनीन्द्रमभिवन्द्याहं पाल्यकीर्त्तिं जिनेश्वरम्।
मन्दवुद्ध्यनुरोधेन प्रक्रिया संङ्ग्रहं ब्रुवे॥

इति प्रक्रियासंग्रहे अभयचन्द्रः।

कुतस्त्या तस्य सा शक्तिः पाल्यकीर्त्तेर्महौजसः
श्रीपदश्रवणं यस्य शाब्दिकान् कुरुते जनान्।

इति पार्श्वनाथचरित्रे वादीभसिंहः।

नाट्यविद्यासूत्रधारेण भगवता भरतेनापि सरसासरसवस्तुनिर्माणे कवयितुराधिपत्यमुद्घोषितम्—यथा—

अपारे काव्यसंसारे कविरेकः प्रजापतिः
यथास्मै रोचते विश्वं तथेदं परिवर्त्तते।
श्रृङ्गारी चेत्कविः काव्ये जातं रसमयं जगत्
स चेत्कविर्वीतरागो नीरसं व्यक्तमेव तत। इति

उपर्युक्तार्थोपष्टम्भकपद्यमवतारयति—येषामिति। येषां पुरुषाणां स्फारा दीर्घाऽपि क्षपा रात्रिः वल्लभया प्रेयस्या समं साकं क्षणमिव क्षीयते। तेषां कृते शशी चन्द्रः शीततरः। तथा विरहिणां कृते उल्केव स्फुलिङ्गमिव सन्तापकृत्। अस्माकं तु न वल्लभा प्रेयसी अस्ति। नच तदभावजन्यो विरहः। प्रतियोगी एव नास्ति कुतोऽभावः। तेन हेतुना उभयभ्रंशिनामस्माकं कृते तु इन्दुरयं दर्पणाकृती राजति शोभते। एवं च

"विदग्धभणितिभङ्गिनिवेद्यं वस्तुनो रूपं न नियतस्वभावम्" इति अवन्तिसुन्दरी। तदाह—

"वस्तुस्वभावोऽत्र कवेरतन्त्रो गुणागुणावुक्तिवशेन काव्ये।
स्तुवन्निबध्नात्यमृतांशुमिन्दुं निन्दंस्तु दोषाकरमाह धूर्त्तः॥"

"उभयमुपपन्नम्" इति यायावरीयः। स पुनर्द्विधा। मुक्तकप्रबन्धविषयत्वेन। तावपि प्रत्येकं पञ्चधा। शुद्धः, चित्रः, कथोत्थः, संविधानकभूः, आख्यानकवांश्च। तत्र मुक्तेतिवृत्तः शुद्धः। स एव सप्रपञ्चश्चित्रः। वृत्तेतिवृत्तः कथोत्थः। सम्भावितेतिवृत्तः संविधानकभूः। परिकल्पितेतिवृत्तः आख्यानकवान्। तत्र।

---

नोष्णः, न शीतलः।

तादृशमेवान्यमतं प्रदर्शयति—विदग्धेति। विदग्धानां भणितेः भङ्गिभिर्निवेद्यं चतुरोक्तिशैलीप्रतिपाद्यं वस्तुनो रूपं वर्त्तते न तु नियतस्वभावं एतादृगेवेति न निश्चितस्वरूपम्। इत्यवन्तिसुन्दर्या मतम्। इयं च चौहाणवंशोद्भवा राजशेखररमणीति अनुश्रूयते। तदाहेत्यनेन तदीय पद्यं निर्दिशति वस्त्विति।

अत्र लोके वस्तुस्वभावोऽतन्त्रः अनियतस्वभावः। काव्ये वस्तुगुणागुणौ कवेः कवयितुरुक्तिवशेति ज्ञेयौ। यतः स्तुवन् कविः तमेव प्रसिद्धमिन्दुममृतांशुरिति निबध्नाति। निन्दन् धूर्त्तः कविस्तमेवेन्दुं दोषाकर इति कथयति।

अधुना स्वमन्तव्यं प्रकाशयति—उभयमिति। पाल्यकीर्त्ति+अवन्ति सुन्दरीभ्यां यदुक्तं तदुपपत्तिमत्। स पुनर्द्विधेति। स सप्तप्रकारेणोक्तोर्थः द्विधा द्विप्रकारः। मुक्तकगतत्वेनैकः। प्रवन्धगतत्वेन द्वितीयः। तावपि मुक्तकप्रवन्धावपि एकैकं पंचप्रकारकौ। मुक्तं त्यक्तमितिवृत्तं यस्मिन्नसौ मुक्तेतिवृत्तः शुद्धः। स एव सप्रपञ्चः सविस्तरश्चित्रः। वृत्तं भूतमितिवृत्तं यस्मिन्नसौ वृत्तेतिवृत्तः कथोत्थः। सम्भावितं संघटितम् अर्थात घटनयाप्राप्तम्। घटना च क्रमकौटिल्यानुल्वणत्वोपपत्तियोगः। अस्यार्थः-इदं कृत्वा इदं कर्त्तव्यमिति क्रमः। कौटिल्यं वक्रता। अनुल्वणत्वम् अतिमात्रतया प्रतिभासाभावः। उपपत्तिः कथमेवमर्थः संगच्छत इत्यनुपपत्तिसमाधानौपयिकविशेषनिवेशनम्। तथाच क्रमेण कौटिल्येन अनुल्वणत्वेन उपपत्या अर्थस्य योगो घटना। अथवा उत्प्रेक्षितम् इतिवृत्तं यस्मिन्नसौ सम्भवितेतिवृत्तः संविधानकभूः। (संविधीयते भूर्यस्मिन्निति विग्रहात्) परिकल्पितं रचितमितिवृत्तं यस्मिन्नसौ परिकल्पितेतिवृत्तः अख्यानकवान्।

दिव्यादिसप्तविधार्थेषु मानुषमपहाय षण्णामुदाहरणानि मुक्तकप्रवन्धविषयाणि

मुक्तके शुद्धः—"सा पत्युः प्रथमापराधकरणे शिक्षोपदेशं विना
नो जानाति सविभ्रमाङ्गवलना वक्रोक्तिचित्रां गतिम्।
स्वच्छैरच्छकपोलमूलगलितैः पर्यस्तनेत्रोत्पला
बाला केवलमेव रोदिति लुठल्लोलोदकैरश्रुभिः॥"

चित्रः—"दूरादुत्सुकमागते विवलितं सम्भाषिणि स्फारितं

---

क्रमशः कुमारसंभवे भगवतोरुमामहेश्वरयोर्वर्णनायाम्, नैषधीयचरिते नलेन्द्रादीनां वर्णनायाम्, महाभारते पातालीयेतिवृत्तवर्णनायाम्, पातालविजये अर्जुनकर्तृकत-द्विजययात्राप्रसङ्गे, भागवते यशोदाप्रार्थितपुत्रानानेतुं गतवतस्य श्रीकृष्णस्य वर्णने, रामायणे रावणकृतपातालयात्रायां वैरोचनिरावणकालपुरुषाणां वाकोवाक्ये, अन्यत्र वा काव्येषु यथायथमुपलभ्यमानेषु यथा ज्ञानमूह्यानि। सुधीभिर्गवेषकैः अस्माभिस्तु ग्रन्थविस्तरभिया नोदाहृतानि।

तत्रार्थेषु मुक्तके शुद्धो यथा--

सा पत्युरिति। अमरूशतके काचित् नवोढायाः स्वप्रेयस्याः दुःखमसहमाना कांचित्प्रति वृत्तान्तं कथयति। सा बाला यस्याः पतिरन्याङ्गनासंसक्तः। पत्युः स्वामिनः न तु प्रियस्य। प्रियत्वे तु अपराधाऽयोगात्। प्रथमे आद्ये। प्रथमत्वेनात्यन्तासह्यता। द्वितीयादौ चातुर्यसंभवाद्वा प्रथमोक्तिः। अपराधकरणे। अपराधोऽन्याङ्गनासंगमरूपः। सख्येन सौहार्देन (करणेन) य उपदेशः। तं विना तदभावात्। सविभ्रमं सहावं यथा स्यात्तथा अङ्गस्य भ्रुकुट्यादेर्या वलना वक्रीकरणादिः याश्च वक्रोक्तयः अनृजुभणितयः ताभिः चित्रां नानाविधां गतिम् अर्थान्मानस्य प्रकाशनं नो जानाति वेत्ति। तर्हि किं करोति इत्यत आह—स्वच्छैरिति। लुठल्लोलोदकैः निमेषतया अद्धबद्धविन्दुजालतया लुठत् पतनशीलतया लोलमुदकं येषां तैः। अत एव अश्रूणां नैरन्तर्येण पतनशीलतया प्रथममेवोन्मृष्टकज्जलत्वात्स्वच्छैः। अथवा ईर्ष्यामानेऽप्यनुपन्यस्तवक्रोक्त्यादेर्नायिकायाः स्वच्छतानुमापकैः उपचारेणाश्रुभिरपि स्वच्छैः। अच्छयोरतिनिर्मलयोः कपोलयो मूलेन गलितैः। अञ्जनपत्रावलीनां गमनादश्रुकपोलयोः स्वच्छता, उत्तानशयनान्मूलेन गलनम्। अश्रुभिरिति इत्थंभूतलक्षणे तृतीया। अर्थादश्रुज्ञाप्यम्। केवलमेव रोदनं करोति। रोदनं हि अश्रुजनकीभूत आन्तरो व्यापारः। अश्रुभिरित्युक्तिः शब्दप्रयोगादिज्ञापकान्तर-व्यवच्छेदाय। कीदृशी बाला, पर्यस्ते परदर्शने लज्जया परितो विक्षिप्ते नेत्रोत्पले यया सा पर्यस्तनेत्रोत्पला।

अत्र केवलमितिवृत्तविनिर्मुक्तं नायिकाया वर्णनाच्छुद्धमुक्तकोदाहरणम्।

दूरादिति। अमरूकशतके निराकरणेन प्रसादनान्निवृत्तस्य नायकस्य पुनरागमे-जातभावाया मानिन्याश्चक्षुःक्रियावर्णनमिदम्। उत्सुकमित्यादिविशेषणानि चक्षुरित्य-

संश्लिष्यत्यरुणं गृहीतवसने कोपाञ्चितभ्रूलतम् ।
मानिन्याश्चरणानतिव्यतिकरे बाष्पाम्बुपूर्णेक्षणा
चक्षुर्जातमहो प्रपञ्चचतुरं जातागसि प्रेयसि ॥"

कथोत्थः—"दत्त्वा रुद्धगतिः खसाधिपतये देवीं ध्रुवस्वामिनीं
यस्मात्खण्डितसाहसो निववृते श्रीशर्मगुप्तो नृपः ।

---

नेनान्वियन्ति । तानि च प्रपञ्चचतुरं चक्षुर्जातमित्यस्योपपादकानि । जातम् आग अपराधो यस्मात् प्रसङ्गतस्तथाभूते न तु कृतागसि "मतोऽभून्नतु मया कृतम्" इति न्यायात् । अत एव प्रेयसि प्रीतिपात्रे न तु स्वामिमात्रे मानिन्या मानवत्या चक्षुः प्रपञ्चे विचित्रव्यापारबाहुल्ये चतुरं कुशलं जातम् । अहो इति चातुर्यदर्शनाद्विस्मये । प्रपञ्चचातुर्यमेव प्रपञ्चयति दूरादित्यादिना । दूराद् दृष्ट इति शेषः । सर्वसप्तम्यन्तानां प्रेयसीत्यत्र सम्बन्धः । उत्सुकम् इतोऽन्यत्र वा यातीति शंकया उत्कण्ठासूचकचेष्टाविशेषशालि । अथवा यदि तमपराधकारिणं पश्येयम् तदा शिक्षां ग्राहयामि इत्युत्पन्नकोपावेगेन दूरस्थे तस्मिन्नुत्सुकम् । आगते समीपं प्राप्ते विवलितं दूरतः पश्यन्त्या मम औत्सुक्यमनेन ज्ञातमिति लज्जया तिर्यक्कृतम् । अथवा पूर्वनिराकरणलज्जया संकुचितम् अथवा अवधीरणयाऽन्यतो नीतम् । संभाषिणि वक्तुं प्रवृत्ते निराकरणेपि अवैमुख्येन अपूर्वालापेन वा हर्षोदयात् स्फारितम् । अथवा अद्यापि निःशङ्को वदन्वर्त्तत इत्याक्षेपबुद्ध्या स्फारितम् । संश्लिष्यति चाटु विनैव आलिङ्गितुमुपनते अरुणं रक्तम् । अप्रसाद्यैव स्पर्शमिच्छसि इति क्रोधाविर्भावादरुणम् । अत एव सविधं त्यक्त्वा स्थानान्तरं गच्छन्त्याः गृहीतवसने धृतवस्त्रे कोपाञ्चितभ्रूलतम् । अञ्चितेत्यस्य कुटिलीकृतत्वमर्थः । तथाभावश्च चाटुकरणं विनैवोत्तरोत्तरं तत्तच्चेष्टाप्रवृत्तिजन्यासूयोदयात् । अत्रारुणतासकाशादञ्चितभ्रूलतत्वस्योद्भटत्वेन सर्वेष्वपि भावेषु कोपहेतुकेषु सत्स्वपि विशेषतः कोपाञ्चितेत्यमुना कोपशब्दप्रयोगेण बहुमानरोष एव पोषं प्रापितः । चरणयोरानतिः प्रणामः । तस्य व्यतिकरः सम्बन्धः समूहो वा यस्य तथाभूते । त्वया एवमाचरितं मया कठिनया तत्सोढमित्येवंरूपप्रसादोदयाद्बाष्पाम्बुना ततः पूर्वमसूयाभिः कठिने चेतसि द्रवीभावाभावात् । अश्रुजलेन पूर्णमीक्षणं यस्य तथाभूतम् । अम्बुपदं बाहुल्यसूचनाय । ईक्षणपदं गोलकाधिष्ठानतेजःपरम् । गोलकस्याश्रुपूर्णतयैव तत्पूर्णत्वोपचारः । चक्षुः पदं गोलकपरम् । अतो भेदात् बहुब्रीहिसङ्गतिः । अथवा विपरीतं । आद्ये बाष्पाम्बुपूर्णत्वं परम्परया बोध्यम् । अन्त्ये औत्सुक्यादीनां तेजसि सत्वं परम्परया बोध्यम् । बाष्पाम्बुपूर्णं क्षणादिति तु सुगमः पाठः ।

कथोत्थमुदाहरति—दत्वेति । खण्डितं साहसं यस्यासौ खण्डितसाहसः । अत एव रुद्धगतिः श्रीशर्मगुप्त एतन्नामको नृपो राजा देवीं महिषीं ध्रुवस्वामिनीं ध्रुवदेवीम् ।

तस्मिन्नेव हिमालये गुरुगुहाकोणक्वणत्किन्नरे
गीयन्ते तव कार्त्तिकेयनगरस्त्रीणां गणैः कीर्त्तयः ॥"

संविधानकभूः—

"दृष्ट्वैकासनसंस्थिते प्रियतमे पश्चादुपेत्यादरा-
देकस्या नयने निमील्य विहितक्रीडानुबन्धच्छलः।
ईषद्वक्रितकन्धरः सपुलकः प्रेमोल्लसन्मानसा-
मन्तर्हासलसत्कपोलफलकां धूर्तोऽपरां चुम्बति ॥"

यथा च—"कुवत्यां कुङ्कुमाम्भः कपिशितवपुषं यत्तदा राजहंसीं

---

या चन्द्रगुप्तापरपर्यायविक्रमादित्यस्य पत्नी कुमारगुप्तस्य माता वर्त्तते। तां खसाधिपतये चन्द्रगुप्ताय दत्वा यस्मात् हिमालयात् निववृते पराभूय निवृत्तः। तस्मिन्नेव हिमालये कार्तिकेयस्वामिकस्य नगरस्य याः स्त्रियोऽङ्गनाः। तासां गणैः समूहैः। तव कीर्त्तयो गीयन्ते। कीदृशे हिमालये गुर्वीणां गुहानां कोणेषु प्रान्तदेशेषु क्वणन्त किन्नरा यस्मिन् तस्मिन्। चन्द्रगुप्तस्य कथामनुरुध्य तच्चाटूक्तौ पद्यमेतद्विनिर्मितम्।

संविधानकभुवमुदाहरति—दृष्ट्वेति। एकं च तदा सनमेकासनं तस्मिन् संस्थिते उपविष्टे द्वे प्रियतमे प्रेयस्यौ दृष्ट्वा। एका नायिका, अपरा नायिका तत्सखी प्रच्छन्ननायकप्रेमपात्रं तेनैकासनसंगतिः। तदनुरञ्जनमेव जीवितसर्वस्वमिति मन्यमानस्य तत्र युगपत्प्रवृत्तिश्च। पश्चात् पृष्ठदेशम् आदरात् निभृतपदन्यासतया सप्रयत्नम् उपेत्यागत्य। विहितक्रीडानुबन्धव्याजः एकस्या नयने निमील्य पिधाय। निभृतपदन्यासो भूत्वा युगपत्कराभ्यां नयनपिधानं लोकप्रसिद्धः केलिः। ईषद् वक्रिता कन्धरा ग्रीवा येनासौ। ईषदिति कन्धरामात्रं यथा चलते न तु शरीरमपि। अन्यथा चलनज्ञाने नायिकायाः कषायभावः स्यादिति प्रतीयते। सपुलकः प्रच्छन्नरागोन्मुद्रणात्सरोमाञ्चः। धूर्तः वञ्चनाचातुर्य्येण स्वमनीषितसम्पादको वञ्चकः। प्रेम्णा स्वगोचरलोकोत्तरत्वाभिमानरूपया प्रीत्या उल्लसत् तत्तदनेकभावोर्मिभिरान्दोलत् मानसं चेतो यस्याः सा ताम्॥ अन्तर्हासेन साधुवञ्चनमपि नेयं जानातीत्याभिप्रायिकसपत्नीगतधिक्कारभावनया निभृतहासेन लसन्तौ शोभमानौ कपोलफलकौ गण्डस्थले यस्याः सा ताम्। अपरां चुम्बति। अत्र पश्चादुपेत्यादरादिति क्रमः। विहितक्रीडानुबन्धच्छल इति उपपत्तिः। एकासने संस्थितयोरेकस्या नयनमीलनकर्मणा वञ्चनम्। अन्यस्या वदनचुम्बनेन रञ्जनमिति कौटिल्यम्। ईषद्वक्रितकन्धरः सपुलकः इत्यादि अनुल्वणत्वम्।

कुर्वत्येति। हे दयित ? यत् तदा क्रीडाकाले राजहंसीं। राजहंसास्तु ते चञ्चूचरणैर्लोहितैः सिताः इत्यमरः। कुंकुमाम्भसा कुङ्कुमजलेन कपिशितं कृष्णपीनीकृतं वपुः

क्रीडाहंसो मयासावजनि विरहितश्चक्रवाकीभ्रमेण ।
तस्यैतत्पाप्मनो मे परिणमति फलं यत्पुरे प्रेमबन्धा-
देकत्रावां वसावो न च दयित दृशाऽप्यस्ति नौ सन्निकर्षः ॥"

आख्यानकवान्—

"अर्थिजनार्थधृतानां वनकरिणां प्रथमकल्पितैर्दशनैः ।
चक्रे परोपकारी हैहयजन्मा गृहं शम्भोः ॥"

---

शरीरं यस्यास्ताम् । कुर्वत्या सम्पादयत्या मया असौ क्रीडाहंसः चक्रवाकीभ्रमेण वि-रहितो वियोजितोऽजनि । कपिशितवपुष्ट्वात् चक्रवाकीयमिति भ्रान्त्या क्रीडाहंसेन हंसी परित्यक्तेति भावः । तस्य दम्पतीवियोजनजन्यस्य मे मम पाप्मनः पापस्य एतत्फलं परिणमति । यद् आवाम् । प्रेमबन्धात् एकत्र पुरे वसावः । चः किन्त्वोरर्थे । किंन्तु हे दयित ? दृशापि चक्षुषापि न नौ आवयो सन्निकर्षः सम्बन्धो नास्ति । पूर्वत्रोदाहरणे घटनयानुस्यूतमितिवृत्तम् अत्र उत्प्रेक्षितमितिवृत्तम् । इति विशेषः ।

अर्थिजनार्थीति । अर्थिजनार्थधृतानां याचकजनकृते वद्धानां वनकरिणां वनहस्ति-नां प्रथमकल्पितैः दशनै रदनैः परोपकारी हैहयजन्मा सहस्रार्जुनः शम्भोर्गृहं चक्रे ।

स्तिमितिविकसितानामिति । मालती माधवे मकरन्दं प्रति मालतीकर्तृकं स्वविषयकं हावहेलादिकं माधवो वर्णयति । पूर्वत्र "अत्रान्तरे किमपि वाग्विभवातिवृत्तवैचि-त्र्यमुल्लसितविभ्रममायताक्ष्याः । इति पद्येन हावो वर्णितः । सम्प्रति "हेला हावा-त्समुत्थिता इति भरतमतानुसारेण हावानन्तरम् ।

नारीणां प्रियसम्भोगलज्जासाध्वसकौतुकैः ।
स्वभावाविष्कृतो वेगो हेलेति परिकीर्तितः ॥

इत्युक्तलक्षणां हेलां प्रकाशीकरोति ।

ततोऽनन्तरं तस्या मालत्या आलोकितानां सहसा दर्शनानां विविधं पात्रं भा-जनं ( योग्यभाजनयोः पात्रम् इत्यमरः ) अहमभूवम् वृत्तोऽस्मि ।

सहसा दर्शनं यत्स्यात्तदालोकितमुच्यते इति भरतः ।

आलोकितानि विशिनष्टि–स्तिमितानामुन्मीलनानन्तरमेव पुरोवर्त्तिनि मयि निपत्य तत्रैव दर्शनलोभेन निश्चलानाम् । अनेन स्तिमितं नाम दृग्विकार उक्तः ।

स्वगोचरान्न चाल्येत यत्तत्स्तिमितमुच्यते । इति ।

ततो विकसितानां विषयगताशेषविशेषग्राहिणाम् । अनेन विकसिताख्यो दृ-ग्विकार उक्तः । यथा—

विकसितं यद्विषये विशेषमवगाहते । इति ।

निबन्धे शुद्धः—"स्तिमितविकसितानामुल्लसद्भ्रूलतानां
मसृणमुकुलितानां प्रान्तविस्तारभाजां।
प्रतिनयननिपाते किञ्चिदाकुञ्चितानां
सुचिरमहमभूवं पात्रमालोकितानाम् ॥"

---

इयं च स्तिमितविकसिता दृष्टिरद्भुतेति नाम्ना व्यपदिश्यते। तदुक्तम्—

समाकुञ्चितपक्ष्माग्रा विस्मयोद्भूततारका।
सौम्या विकसितान्ता च दृष्टिः स्याददद्भुताभिधा। इति।

अतः परं विषयास्वादजन्मानन्दभावनया उल्लसन्तो चपला भ्रूर्लतेव येषु तेषाम्। अनेन कान्ता शृंगारदृष्टिः प्रदर्शिता–तदुक्तम्—

हर्षप्रसादजनिता कान्तात्यर्थं समन्मथा।
विचलद्भ्रूकटाक्षा च शृंगारे दृष्टिरिष्यते इति।

अतः परं मसृणानामनुरागपेशलानाम्। अनेन मसृणो दृग्विकारः प्रकटितः। तदुक्तम्—

मसृणं तत्तु विज्ञेयमनुरागकषायितम्। इति।

ततः सुखपारवश्यान्मुकुलितानामनुन्मीलितानाम्। अनेन मुकुलिता दृष्टिरुक्ता। तद्यथा—

स्फुरिताश्लिष्टपक्ष्माग्रा मुकुलोर्ध्वपुटोच्छ्रिता।
सुखोन्मीलिततारा च मुकुला दृष्टिरिष्यते ॥ इति।

ततः पुनर्दर्शनस्पृहया प्रान्तेऽपाङ्गदेशे विस्तारभाजां विसृत्वराणाम्। सम्यगाश्लिष्टविषयाणामिति यावत्। अपाङ्गदृष्टिर्हि तत्रैव निपतन्ती सम्यग्विषयं परिच्छिनत्ति एतेन विस्तारी सस्पृहश्चेति विकारद्वया दृष्टिराविःकृता। तयोर्लक्षणं यथा—

येनाश्लिष्टो हि विषयस्तद्विस्तारीति कथ्यते।
भूयोभूयः स्पृहा यत्र दृष्टेस्तत्सस्पृहं भवेत ॥ इति।

ततः प्रतिनयनस्य तदवलोकनाय प्रहितस्य मन्नेत्रस्य निपात आभिमुख्येन युगपदुपस्थाने लज्जया किञ्चिदाकुञ्चितानाम्। ईषन्मुद्रितानाम्। दृष्टिरियमाकुंचिता नाम। तल्लक्षणं यथा—

अनाकुञ्चितपक्ष्माग्रा पुटैराकुञ्चितैस्तथा।
संनिकुञ्चिततारा च कुञ्चिता दृष्टिरुच्यते ॥ इति।

आलोकितानां बहुत्वाभिधानेन धारावाहिकन्यायेन प्रवृत्तिप्रतीतेः लोलाख्यो दृग्विकार उक्तः।

धारावाहिकसंचारो यस्य तल्लोलमुच्यते। इति।

विविधपदेन अन्यानपि मधुरप्रसन्नचतुरसाभिलाषोत्कुण्ठितसोत्सुकसमन्मथविक्कृ-

चित्रः—"अलसवलितमुग्धस्निग्धनिष्पन्दमन्दै-
रधिकविकसदन्तर्विस्मयस्मेरतारैः ।
हृदयमशरणं मे पक्ष्मलाक्ष्याः कटाक्षै-
रपहृतमपविद्धं पीतमुन्मूलितं च ॥"

---

णितप्रणयिप्रेमगर्भविकोचललितकोमलशंकितमुखान् दृष्टिविकारविशेषान् संगृह्णाति। लक्षणानि एषां नाट्यशास्त्रे विलोकनीयानि। विस्तरभयादनपेक्षितत्वाच्च न लिखितानि।

अलसवलितेति। पक्ष्मले अतिसान्द्रपक्ष्ममाले अक्षिणी यस्यास्तस्याः कटाक्षैः। "अपाङ्गे तार आक्षेपः कटाक्ष इति कथ्यत" इत्युक्तलक्षणैः दृष्टिविशेषैः पूर्वोक्तैः मे हृदयमशरणं सत्तदा मम पारवश्येनाकिंचित्करत्वादन्येन च रक्षणस्याशक्यत्वात् शक्याभावाच्च रक्षितारमलभमानं सत् अपहृतं बलादाच्छिद्य गृहीतम्। कटाक्षाणां मनोहरत्वात्तदा मनः शून्य इवाभवत्। चोरितप्रज्ञत्वात्ततस्तैरपहृत्य तदपविद्धम् अतितीक्ष्णत्वात्तेषां नाराचैरिव विक्षतम्। निशितशलाकाप्रकृतरन्ध्रमिव व्यथामन्वभूदित्यर्थः। ततः सततमदननाराचकल्पत्वात्तेषां तदपवेधेन द्रवीभूय तत्रैव धाराजलन्यायेन विलीनत्वात्तैः पीतमिव। यथा पीतं सलिलादिकं पातुरन्तर्विलीयते, एवं कटाक्षेषु मन्मनो विलीनम्। ततश्च मदीयहृदयालवाले लीनस्यापि मनसः पुनरंकुरोदयशंकया तन्मूलितमुत्खातमूलं कृतम्। अपुनरुद्भवयोग्यं कृतमित्यर्थः। एतेन मनसः अतीव परवशता सूचिता। कीदृशैः कटाक्षैरलसवलितमुग्धस्निग्धनिष्पन्दमन्दैः अलसाः प्रथमपातिताः। पुरतः प्रसारिताः। पुरोवर्तिनि मयि निपातिताः। पश्चाद्विभाव्य व्रीडयेव प्रतिनिवृत्ताः। अलसादयः शृङ्गारदृष्टिविकाराः—अलसं तदभीष्टार्थाद्व्रीडाद्यैर्तन्निवर्त्तते। इति। ततो वलिताः पुनर्दर्शनोत्कण्ठया तिर्यगुदञ्चिताः। वलितलक्षणं यथा—वलितं तन्निवृत्तस्य भूयस्त्र्यस्रावलोकितम्। त्र्यस्तं तिर्यगुदञ्चितम्—इति त्र्यस्त्रलक्षणम्। ततो मुग्धाः सव्याजभावगर्भस्वभावाः। मुग्धा लक्षणं यथा—स्वभावालोकितं मुग्धं भावगर्भमपि च्छलात्। इति। ततः स्निग्धाः स्नेहप्रायरतिभावानुविद्धाः अनेन दृष्टेः स्निग्धत्वमुल्लिखितम्। तल्लक्षणं यथा—स्निग्धं यद्रतिभावेन स्नेहप्रायेण संयुता। अथवा।

किंचित्सहासेव सविस्मयेव सभ्रूसमुत्क्षेपकटाक्षयुक्ता।
स्निग्धा निकामं प्रमदेव निष्ठा शृंगारजा दृष्टिरिह प्रदिष्टा॥

ततो निष्पन्दा विषयादन्यत्र क्वापि न चलन्तः। निष्पन्दं यथा—निष्पन्दं तद्यदन्यत्र दृष्टान्ते स्पन्दते क्वचित्। इति। ततो मन्दा विषयान्तरे गमनानुद्युक्ताः। एतेन दृष्टेः मान्थर्यं सूचितम्—यथा मन्थरा मन्दसंचारा इत्युक्तेः। अधिकम् आश्चर्यकारिवस्तु-

कथोत्थः—"अभिलाषमुदीरितेन्द्रियः स्वसुतायामकरोत्प्रजापतिः।
अथ तेन निगृह्य विक्रियामभिशप्तः फलमेतदन्वभूत्॥"
संविधानकभूः—"क्रोधं प्रभो संहर संहरेति यावद्गिरः खे मरुतां चरन्ति।
तावत्स वह्निर्भवनेत्रजन्मा भस्मावशेषं मदनं चकार॥"
आख्यानकवान्—
पत्युः शिरश्चन्द्रकलामनेन स्पृशेति सख्या परिहासपूर्वम्।
सा रञ्जयित्वा चरणौ कृताशीर्माल्येन तां निर्वचनं जघान॥"

---

दर्शनरूपादुद्दीपनाद्विस्तृतं यथातथा विकसत् रसभावोन्मुखत्वमुपनयन्। अन्तः करणे यो विस्मयः अद्भुतरसस्थायी तेन स्मेरा स्फुरत्पक्ष्मपङ्क्तिभिरुत्फुल्लतारा येषां ते तथोक्ताः। एतेन दृशः स्मेरत्वमाविष्कृतम्। तद्यथा "प्रस्फुरत्पक्ष्मतारं यत्तत्स्मेरमिति कथ्यते। इति उभयत्र शृंगारो रसः परिकरश्चालङ्कारः। पूर्वत्र निबन्धगतः शुद्धोर्थः। उत्तरत्र दृष्टिव्यापाराणां सप्रपञ्चतानिर्देशात् चित्रोर्थः।

कथोत्थमभिलक्ष्ययति—अभिलाषमिति। कुमारसम्भवे कामस्य हरलोचनार्चिःशलभत्वप्रापकहेतुबोधिकामाकाशवाणीं कविः कथयति। उदीरितेन्द्रियः कामेन प्रेरितेन्द्रियः प्रजापतिर्ब्रह्मा स्वसुतायां सरस्वत्यामभिलाषमनुरागमकरोत्। अथ तेन प्रजापतिना विक्रियाम् इन्द्रियविकारं निगृह्य निरुध्य अभिशप्तः। तस्य अभिशापस्य एतद् दाहात्मकं फलं स्वकर्मफलम् अन्वभूत्।

संविधानकभुवमुदाहरति। क्रोधं प्रभोरिति। अयमपि तत्रैव तपसो विगमतया विवृद्धमन्योः विषमलोचनस्य तृतीयनयनात्कामोपरि कृशानोः पतनोत्तरं देवानामुक्तिरूपः श्लोकः। हे प्रभो? हे स्वामिन्? कोपं संहर संहर निवर्त्तय निवर्त्तय इत्येवं रूपा मरुतां देवानां वाचो वाण्यः खे व्योम्नि यावच्चरन्ति प्रवर्त्तन्ते। तावत्तत्कालमेव भवस्य नेत्राज्जन्म यस्य स भवनेत्रजन्मा स वह्निः मदनं कामं भस्ममात्रमवशेषो यस्य तं भस्मावशेषं चकार ददाहेत्यर्थः।

आख्यानकवन्तमुदाहरति—पत्युरिति। अयमपि तत्रैव सप्तमसर्गे पार्वत्याः चरणयोः लाक्षया रञ्जितीकरणोत्तरं प्रसाधिकायाः सख्याः तां प्रति परिहासोक्तिः। सख्या प्रेयस्या कर्त्र्या। चरणौ रञ्जयित्वा लाक्षारसाक्तौ सम्पाद्य ततः अनेन रञ्जितचरणेन। यद्यपि पूर्वं चरणाविति द्वित्वोक्त्या इदंशब्देनापि तयोः द्वयोरेव परामर्शो नितरामुचितः तथापि ताडनकर्मणि औचित्यादनेनेति एकवचनोक्तिः। रञ्जनकर्मणि च एकस्योपयोगोऽत्यन्तमनुचितः शृङ्गारविघातकतया इति चरणाविति द्वित्वोक्तिः। पत्युरीश्वरस्य शिरश्चन्द्रकलाम् सुरतसमये ललाटेन्दुकलां स्पृश ताडयेति परिहासपूर्वं कृताशीः प्रयुक्ताशीर्वादा सा पार्वती तां सखीं माल्येन मालया निर्वचनं यथा स्यात्तथा तूष्णीमिति भा-

किञ्च। संस्कृतवत्सर्वास्वपि भाषासु यथासामर्थ्यं यथारुचि यथाकौतुकं चावहितः स्यात्। शब्दार्थयोश्चाभिधानाभिधेयव्यापारप्रगुणतामवबुध्येत।

तदुक्तम्—

एकोऽर्थः संस्कृतोक्त्या स सुकविरचनः प्राकृतेनापरोऽस्मिन्
अन्योऽपभ्रंशगीर्भिः किमपरमपरो भूतभाषाक्रमेण।
द्वित्राभिः कोऽपि वाग्भिर्भवति चतसृभिः किञ्च कश्चिद्विवेक्तुं
यस्येत्थं धीः प्रपन्ना स्नपयति सुकवेस्तस्य कीर्त्तिर्जगन्ति॥

---

वः। जघान ताडयामास। निर्वचनमित्यनेन विहृताख्यः श्रृंगारानुभावः प्रादुर्भावितः। यथाचोक्तं-प्राप्तकालं तु यद् ब्रूयात्कुर्याद्वा विहृतं तु तत् इति।

एवं संस्कृते अर्थविषयकानुशासनं विस्तरशो दृष्टान्तैरुपदर्श्य अन्यभाषाविषये तदनुजानाति। किञ्चेति। संस्कृतवत् यथा संस्कृते तथा सर्वास्वपि निखिलास्वपि भाषासु यथासामर्थ्यं शक्तिमनतिक्रम्य यथारुचि स्वेच्छं यथाकौतुकं कुतूहलानुसारि विरचयेत् किन्तु अप्रमत्तः स्यात्। शब्दार्थयोः अभिधानाभिधेयव्यापारप्रगुणतां वाच्यवाचकनिष्ठसम्बन्धप्रौढिम् अवबुध्येत अवजानीयात्। तदुक्तम्।

एकोर्थ इति। अस्मिन् पद्ये एकः कश्चिदर्थः संस्कृतोक्त्या संस्कृतवाण्या सुकवे रचनाविषयीभूतः। अपरोर्थः प्राकृतेन प्राकृतवाण्या सौरसेनीमागधीप्रभृतिभाषया। सुकवीति समानं पूर्वेण। किमपरं वक्तव्यम्। अपरोर्थः भूतभाषाक्रमेण पिशाचभाषाशैल्या सुकविरचनो भवति।

किञ्चेति। किञ्च कोपि द्वित्राभिः द्वौ त्रयो वा द्वित्रास्ताभिः वाणीभिः। कोपि चतसृभिः वाग्भिः विवेक्तुं भवति यस्य सुकवेरित्थं पूर्वोक्तप्रकारेण धीर्बुद्धिः प्रपन्ना जाता तस्य सुकवेः भावकस्य च कीतिर्जगन्ति स्नपयति स्नानं कारयति।

उक्तं चान्यत्रापि—

संस्कृतेनैव कोप्यर्थः प्राकृतेनैव वापरः
शक्यो रचयितुं कश्चिदपभ्रंशेन जायते।
पैशाच्या सौरसेन्यान्यो मागध्याऽन्यो निबध्यते
द्वित्राभिः कोपि भाषाभिः सर्वाभिरपि कश्चन॥

अस्तीदं तथापि—

नात्यन्तं संस्कृतेनैव नात्यन्तं देशभाषया।
कथां गोष्ठीषु कथयंल्लोके बहुमतो भवेत्॥
न म्लेच्छितव्यं यज्ञादौ स्त्रीषु नाप्राकृतं वदेत्।
संकीर्णं नाभिजातेषु ना प्रबद्धेषु संकृतम्॥

इत्थङ्कारं घनैरर्थैर्व्युत्पन्नमनसः कवेः ।
दुर्गमेऽपि भवेन्मार्गे कुण्ठिता न सरस्वती ॥
॥ इति राजशेखरकृतौ काव्यमीमांसायां कविरहस्ये प्रथमेऽधिकरणे
अर्थानुशासने ( अर्थव्याप्तिः ) नवमोऽध्यायः ॥

## दशमोऽध्यायः

# कविचर्या राजचर्या च ।

गृहीतविद्योपविद्यः काव्यक्रियायै प्रयतेत । नामधातुपारायणे, अभिधा-

---

ततः कथं कुत्र व्यवहर्त्तव्यम् तत्रोच्यते

देवाद्याः संस्कृतं प्राहुः प्राकृतं किन्नरादयः
पैशाचाद्यं पिशाचाद्याः मागधं हीनजातयः ॥

अध्यायोक्तविषयं संहरति । इत्थंकारमिति । घनैर्विपुलैरर्थैः व्युत्पन्नमनसः । कवेः सरस्वती वाग्देवी दुर्गमेऽपि अतिविषमेऽपि मार्गे सरणौ कुंठिता अवरुद्धा न भवति न जायते ।

इति साहित्याचार्यहिताग्निश्रीमधुसूदनशर्मणः कृतौ मधुसूदनीविवृतौ
अर्थानुशासनं नाम नवमोऽध्यायः पूर्णः ।

* श्रीः *

कलयामि कलानिधिचन्द्रमसं परिभासितलोकपदं शुभदम् ।
विवृणोमि कवेर्नृपतेश्चर्यां कविराजहिताय सुनिर्ग्रथिताम् ॥

अथ पूर्वस्मिन्नध्याये काव्येषु वर्णनीयार्थानामनुशासनं विधाय संप्रति दर्शितसरण्या काव्यं कर्त्तुं प्रवृत्तस्य कवेः चर्यामाचरणं प्रथमतो निबध्नाति । अर्थात् कविना कुत्र, कदा, कथं स्थातव्यम् , व्यवहर्त्तव्यम् कस्यां परिस्थित्यां कीदृशी पद्धतिनुसर्त्तव्या, पार्श्वानुचराः कीदृशाः सखायः कीदृशाः, आत्मनोऽवेक्षणं च कर्तव्यमित्यादीनि आचरणानि कवयित्रे अनुशासितुमध्यायविषयोपसंग्राहकं सूत्रमाचिनोति—कविचर्येति । गृहीते विद्योपविद्ये येनासौ ( विद्या च उपविद्या चेति विद्योपविद्ये ) गृहीविद्योपविद्यः । काव्यस्य क्रिया तस्यै काव्यं कर्त्तुं प्रयतेत प्रयत्नवान् भवेत् । ननु पूर्वमुक्तं गृहीतविद्योपविद्यः काव्यक्रियायै प्रयतेतेति--तत्र का नाम विद्या काश्च उपविद्या इत्यत आह--नामधातुपारायणमिति। नाम च धातुश्च नामधातू तयोः पारायणम् । "द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकमभिसम्बध्यते" इति न्यायात्पारायणस्य नामधातुभ्यामुभाभ्यां सम्बन्धः । तेन नामपरायणम् धातुपारायणम् ।

नकोशः, छन्दोविचितिः, अलङ्कारतन्त्रं च काव्यविद्याः । कलास्तु चतुःषष्टि-

---

अर्थात् प्रातिपदिकमुद्दिश्य सुबादिप्रत्ययानां साकल्येनान्वाख्यापकम् । धातुमुद्दिश्य तिङादिप्रत्ययानां साकल्येनान्वाख्यापकम् । साकल्यासङ्गवचने पारायणतुरायणे-इत्यमरः । व्याकरणमिति निष्कर्षः सिद्धान्तकौमुद्यादिकम् । अभिधानानां शब्दानां कोशः संग्रहः अमरादिप्रणीतः । छन्दसां विचितिः छन्दःसंग्रहः वृत्तरत्नाकरप्रभृति । अलङ्कारस्य तन्त्रं शास्त्रम् काव्यप्रकाशादिकम् ।

तन्त्रं कुटुम्बकृत्ये स्यात् सिद्धान्ते चौषधोत्तमे ।
प्रधाने तन्तुवाये च शास्त्रभेदे परिच्छदे । इति मेदिनी ।

चकारोऽनुक्तसंग्राहकः । तेन प्रमाणविद्ययोः शिक्षाकल्पनिरुक्तज्योतिषां च ग्रहणम् । एवं विद्याः प्रदर्श्य उपविद्या दर्शयति-कलास्त्विवति । चतुःषष्टिः कला उपविद्याः ।

यास्ताश् चतुःषष्टिः कला उपविद्येति कीर्तिताः
ता उद्धरामि क्रमतो बालानां स्वस्य बुद्धये ।
गानशिक्षा गायकत्वं तालरागस्वरज्ञता
स्वरादिमेलनमिति गीताख्या षड्विधा कला ॥ १ ॥
ततं वीणादिकं ज्ञेयमानद्धं मुरजादिकम् ।
वंशादिकं च सुषिरं कास्यतालादिकं घनम् ।
वाद्येष्वेतेषु वाद्याख्या गीतवत्षड्विधा कला ॥ २ ॥
अङ्गविक्षेपणं नृत्यं षोढा प्राग्वच्च तत्कला ।
भट्टोजिदीक्षितेनैतन्नृत्तरूपमुदाहृतम् ॥ ३ ॥
नटक्रिया नाट्यकला नाटकाभिनयात्मिका ।
वाक्यार्थाभिनयो नाट्यमिति भेदो न दीक्षितात् ॥ ४ ॥

उक्तवत इति शेषः ।

चित्राणां पुस्तकानां च लेख आलेख्यजा कला ॥ ५ ॥
विशेषकच्छेद्यकला स्तनादौ कुङ्कुमादिभिः ।
मत्स्याद्याकाररचना तिलकस्य विधिस्तथा ॥ ६ ॥
पूजाप्रकरोदिकला कुसुमैस्तण्डुलादिभिः ॥ ७ ॥
शय्यादे रचना पुष्पादिभिरास्तरणे कला ॥ ८ ॥
दशने वसनेऽङ्गे च रञ्जनं रागजा कला ॥ ९ ॥
पाण्डवादिसभातुल्यमणिभूरचना कला ।
विलायते गोलमेजप्रभृते रचना यथा ॥ १० ॥
मञ्चकादिकनिर्माणं कला शयनकल्पना ॥ ११ ॥

जलस्तम्भो जले यानं जलवाद्यं च तत्कला ॥ १२ ॥
चित्रयोगकलानेकाद्भुतदर्शनवेदिता ॥ १३ ॥
पुष्पैर्हारादिरचना माल्यग्रथनजा कला ॥ १४ ॥
पुष्पादिभिः कला तद्वत् शेखरापीडयोजने ॥ १५ ॥
नेपथ्यस्य कला भूषावस्त्राद्यैरङ्गसंस्कृतिः ॥ १६ ॥
कर्णादौ पत्रभङ्ग्यादिनिर्मितिस्तत्कला मता ॥ १७ ॥
सुगन्धियोजनभूकला पटवासादिषु स्मृता ॥ १८ ॥
भूषादियोजनकला स्वर्णकारक्रिया भवेत् ॥ १९ ॥
ऐन्द्रजालकला ख्याता मृदादेः स्वर्णतादिका ॥ २० ॥
कुचुमारर्षिकथिता कौचुमारकलात्र तु ।
धारणं भूरिवेषाणां पटूनामपि मोहनम् ॥ २१ ॥
शरादौ वस्तुगुप्त्यादौ हस्तलाघवजा कला ॥ २२ ॥
सूदशास्त्रं चित्रशाकापूपभक्ष्यादिकृत्कला ॥ २३ ॥
पानकादिकला नानापेयमद्यादियोजना ॥ २४ ॥
स्यूतिर्वानं चित्रकृतिरित्यादिः सूचिजा कला ॥ २५ ॥
सूत्रक्रीडा कलासूत्रैः पुत्तल्यादिकचालनम् ॥ २६ ॥
वीणा डमरुवाद्यादिकला तद्यन्त्रनिर्मितिः ॥ २७ ॥
प्रहेलिका कला कूटवाक्यार्थज्ञानिता यथा ।
पानीयं पातुमिच्छामि त्वतः कमललोचने ।
यदि दास्यसि (दासी असि) नेच्छामि नो दास्यसि पिवाम्यहम् ।२८।
प्रतिमानां कला नानाप्रतिमानां विनिर्मितिः ।
छायया चित्रनिर्माणमिति केचित्प्रचक्षते ॥ २९ ॥
दुर्वंचककला दुष्टलोकानां वञ्चनं यथा ।
उपाया दुर्वचास्तावदिति केचित्प्रचक्षते ॥ ३० ॥
पुस्तकवाचनकला शीघ्रं पुस्तकवाचनम् ।
यद्वा दृष्ट्वा हस्तचेष्टां लिखतोक्षरवाचनम् ॥ ३१ ॥
नाटकाख्यायिकादीनां निर्माणं तत्कला स्मृता ॥ ३२ ॥
समस्यापूरणकला श्लोकपादादिपूरणम् ।
पूरितं केनचिद्यथा शतचन्द्रं नभस्तलम् ॥
व्रतेन कर्शितो गङ्गां शतनिश्रेणितोऽतरत् ।
दृष्टमारोहणे पाताच्छतचन्द्रं नभस्तलम् ॥ ३३ ॥
पट्टिकावेत्रवाणादिकला तद्रचना भवेत ॥ ३४ ॥

तर्कुकर्मकला सूत्रैर्नानावस्त्रादिनिर्मितिः ॥ ३५ ॥
तक्षणस्य कला काष्ठादिभिः स्तम्भादिकल्पनम् ॥ ३६ ॥
वास्तुविद्याकला गेहप्रासादादिविनिर्मितिः ॥ ३७ ॥
सुवर्णरूप्यरत्नादेः परीक्षायाः कला स्फुटा ॥ ३८ ॥
धातुवादकला ख्याता ताम्रादेः स्वर्णकारिका ॥ ३९ ॥
मणिरागज्ञानकला रत्नरञ्जनकौशलम् ॥ ४० ॥
आकरस्य कला स्वर्णरत्नादिखनिभूज्ञता ॥ ४१ ॥
वृक्षरक्षाचिकित्सादिर्वृक्षायुर्वेदजा कला ॥ ४२ ॥
मेषकुक्कुटलावादियुद्धरीतिस्तु तत्कला ॥ ४३ ॥
शुकसारिकयोः पाठकला तच्छिक्षणे विधिः ॥ ४४ ॥
उत्सादनकला शत्रोर्मन्त्रैरुच्चाटना विधिः ।
उद्वर्त्तनं शरीरस्य संस्कारमपरे जगुः ॥ ४५ ॥
स्यात्केशमार्जनकला रचना मार्जनादिका ॥ ४६ ॥
लुप्ताक्षराणां मुष्टिस्थवस्तूनां कथने कला ॥ ४७ ॥
म्लेच्छितादिकला तत्तद्भाषाशास्त्रेषु कौशलम् ॥ ४८ ॥
देशभाषाकला तत्तद्देशभाषणकौशलम् ॥ ४९ ॥
कला पुष्पशकटयाख्या सदसत्फलधोस्ततः ॥ ५० ॥
पूजायन्त्रादिनिर्माणं कलास्याद्यन्त्रमातृका ।
हीरकादेरवेध्यस्य वेध्यादिरपि सा मता ॥ ५१ ॥
मातृका संवाच्यकला नानाभाषाविनिर्मितिः ॥ ५२ ॥
परचित्तार्थकविता कला मानसकाव्यजा ॥ ५३ ॥
कलाभिधानकोशस्य बहुकोशप्रवीणता ॥ ५४ ॥
छन्दोज्ञानकला नानाच्छन्दोविषयनैपुणम् ॥ ५५ ॥
नानोपायैरेकवस्तु भूरीण्येकेन कर्मणा ।
कुर्यात्क्रिया विकल्पाख्या सा कला भूरिपाटवा ॥ ५६ ॥
कला छलितयोगाख्या चोरणावञ्चनादिका ॥ ५७ ॥
वस्त्रगुप्तिकला तूलवस्त्रादौ पट्टतादिका ॥ ५८ ॥
सा हि द्यूतकला यत्र क्रीडनं शारिकादिभिः ॥ ५९ ॥
यत्र दूरस्थवस्तूनामाकर्षैः क्रीडनं भवेत ।
कर्षक्रीडाख्यातकला नामतः सन्निदर्शिता ॥ ६० ॥
बालक्रीडाकला स्पष्टा क्रीडनं कन्दुकादिभिः ॥ ६१ ॥
वैनायिकी कला भूतचेटादेर्मन्त्रसाधनम् ॥ ६२ ॥

रूपविद्याः । सुजनोपजीव्यकविसन्निधिः, देशवार्ता, विदग्धवादो, लोकयात्रा, विद्वद्गोष्ठ्यश्च काव्यमातरः पुरातनकविनिबन्धाश्च । किञ्च—

स्वास्थ्यं प्रतिभाभ्यासो भक्तिर्विद्वत्कथा बहुश्रुतता ।
स्मृतिदार्ढ्यमनिर्वेदश्च मातरोऽष्टौ कवित्वस्य ॥

अपि च । नित्यं शुचिः स्यात् । त्रिधा च शौचं वाक्शौचं, मनः–शौचं,

---

कला वैजयिकी यत्र वादादौ ज्ञायते जयः ॥ ६३ ॥
वैतालिकी कला सिद्ध्यै वेतालादेरुपासनम् ॥ ६४ ॥

विंशत्याद्याः सदैकत्वे सर्वाः संख्येयसंख्ययोरितिवचनात् कलानां बहुत्वेऽपि चतुःषष्टिरित्येकवचनम् । एवमुपविद्याः प्रदर्श्य प्रसङ्गात् काव्यस्यातीवोपकारकं विषयं संगृह्णाति–सुजनेति । सुजनैर्महद्भिर्भावकैर्विद्वद्भिर्वा उपजीव्यस्य सेव्यस्य कवेः सन्निधिः । तेन संगत्य तदुपदेशग्रहणम् । देशवार्त्ता समाचारपत्रादिभिर्देशगतं राजनैतिकं सामाजिकं वैज्ञानिकं भाषासम्बद्धं चित्रानुस्यूतं वृत्तं परिज्ञेयमित्यर्थः। विदग्धवादः। विदग्धानां विचक्षणानां वादः यस्येदानीन्तनी संज्ञा शास्त्रार्थं इति । स च मुखतो लेखतश्चेति द्विधा । वादे वादे जायते तत्वचिन्ता इतिनीत्या तत्राऽवश्यमनुप्रवेष्टव्यम् । लोकयात्रा लोकव्यवहारः । सर्वशास्त्राणामपि लोकव्यहारानुगतत्वात्काव्ये तु विशिष्यलोकव्यवहारस्यैवोपनिवद्धत्वाल् लोकव्यवहारोऽवश्यन्तया परिचेतव्यः। विदुषां गोष्ठयः । पुरातनकविनिबन्धाश्च पुरातनैः कालिदासादिभिः कथमुपवर्णितोऽयमर्थं इति बुद्ध्या तेषां निबन्धाः अवश्यं द्रष्टव्याः । "तत्प्रतिभासाय परप्रबन्धेष्ववदधीत । तदवगाहने हि तदकयोनयोऽर्थाः पृथक् पृथक् प्रथन्ते" "तत्रत्यानामर्थानां छायया परिवृत्तिः फलम्" "महात्मनां हि संवादिन्यो बुद्धयः एकमेवार्थमुपस्थापयन्ति तत्परित्यागाय तानाद्रियेत" इत्याद्युक्तेश्च । काव्यमातरः यथा माता वत्समुज्जीवयितुं पोषयितुं सौन्दर्यमाधातुम् उत्कर्षयितुं कांस्कान् प्रयत्नान् करोति तथैव सुजनोपजीव्यकविसन्निधिप्रभृतिरपि काव्यस्य तांस्तानुपकारान् करोति ।

किञ्चेति पूर्वार्थोपष्टम्भकं प्रावादुकपद्यमवतारयति–स्वास्थ्यमिति । स्वस्मिन् निजप्रकृतौ तिष्ठति स्वस्थः तस्य भावः स्वास्थ्यम् । शारीरिकसौख्यम् । प्रतिभा शब्दग्राममर्थसार्थमलङ्कारतन्त्रमुक्तिमार्गमन्यदपि तथाविधमधिहृदयं प्रभासयित्री । अभ्यासः अविच्छेदेन शीलनम् । भक्तिः पूज्येष्वनुरागः । विद्वत्कथा विद्वद्गोष्ठी । बहुश्रुतता बहुज्ञता व्युत्पत्तिरित्यर्थः । स्मृतिदार्ढ्यम् स्मरणशक्तेः स्थैर्यम् । अनिर्वेदः विरक्त्यभावः उत्साह इति पारमार्थिकं तत्वम् । इति स्वास्थ्याद्यष्टौ कवित्वस्य काव्यस्य मातरः मातृवदुपजीव्याः ।

अपि चेत्यतः आचरणमनुशास्ति । नित्यं सर्वदा शुचिः शुद्धः । वाचो वाण्याः

कायशौचं च। प्रथमे शास्त्रजन्मनी। तार्तीयीकं तु सनखच्छेदौ पादौ, सताम्बूलं मुखं, सविलेपनमात्रं वपुः, महार्हमनुल्बणं च वासः, सकुसुमं शिरः इति। शुचि शीलनं हि सरस्वत्याः संवननमामनन्ति। स यत्स्वभावः कविस्तदनुरूपं काव्यम्। यादृशाकारश्चित्रकरस्तादृशाकारमस्य चित्रमिति प्रायो वादः। स्मितपूर्वमभिभाषणं, सर्वत्रोक्तिगर्भमभिधानं, सर्वतो रहस्यान्वेषणं, परकाव्यदूषणवैमुख्यमनभिहितस्य अभिहितस्य तु यथार्थमभिधानम्।

---

शौचं शुद्धिः। मनसः शौचं कायस्य शौचम्। प्रथमे वाक्शौचमनःशौचे शास्त्रजन्मनी। शास्त्राज्जन्म ययोस्ते तथा। शास्त्रपठनेन वाङ्मनसयोः शुद्धिर्भवतीति भावः। तार्तीयीकं कायशौचं तु नखानां छेदेन सहितौ पादौ ताम्बूलेन सहितं मुखम्। विलेपनस्य मात्रा विलेपनमात्रा। विलेपनामात्रया सहितम्। सविलेपनमात्रम् अल्पविलेपनसहितम्। भाले बाह्वोरुरसि च विलेपनम् न सर्वत्रेति भावः। समालम्भो विलेपनम्, अथ गात्रानुलेपनी वर्त्तिर्वर्णिका स्याद्विलेपनम्। इत्यमरः। अथवा विलेपन एव विलेपनमात्रम् तेन सहितम्। यथा स्वार्थिकः कन्प्रत्ययो निजप्रकृत्यर्थमेव अनुवदति तथायं मात्रशब्दः निजपूर्वपदार्थमेव अनुवदन्ति। तथा चोक्तं हेमेन—

मात्रं त्ववधृतौ स्वार्थे मात्रा कात्स्न्र्ये परिच्छदे।
अक्षरावयवे द्रव्ये मानेऽल्पे कर्णभूषणे। इति।

"प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा" इत्यत्रापि तादृश एव मात्रशब्दः। महार्हं बहुमूल्यम्। उल्बणं स्फुटं स्वच्छमित्यर्थः। स्पष्टं स्फुटं प्रव्यक्तमुल्बणम् इत्यमरः। अनुल्वणमिति पाठे तु न विद्यमानमुल्वणं यस्मादिति बहुव्रीहिराश्रयणीयः अनुत्तम इति वत्। नञोऽस्त्यर्थानां वाच्यो वा चोत्तरपदलोपः। इति समासलोपौ। वासो वस्त्रम्। सकुसुमं सपुष्पं शिरः शीर्षम्। उत्तमाङ्गं शिरः शीर्षं मूर्धा ना मस्तकोऽस्त्रियाम्। इत्यमरः।

शुचित्वं प्रशंसति—शुचीति। शुचिशीलनं हि शुद्धस्वभावोहि सरस्वत्याः वाग्देव्याः सम्वननं वशीकरणम्। वशक्रिया सम्वननमित्यमरः। आमनन्ति कथयन्ति। सङ्क्रमयति—स यदिति। स कविः यत्स्वभावः यादृशस्वभावात्मकः तदनुरूपं तादृशं काव्यम्। आभाणकेन सम्वदति—यादृशेति। यादृशाकारवान् चित्रकर्त्ता तादृशमस्य चित्रकर्त्तुः चित्रमालेख्यम्। प्रायोवादः प्रसिद्धिः। पूर्वं स्मितं विधाय आलापः कर्त्तव्यः। सर्वत्रालापेषु उक्तिगर्भं वक्रोक्तिमध्यं कथनम्। सर्वतः सर्वस्मात् रहस्यस्य अन्वेषणं गवेषणम् उच्चारणे गमने कर्त्तव्ये सर्वत्रैव कर्मणि वस्तुषु च गोपनीयवस्तुगवेषणा कर्त्तव्या परकाव्येषु दूषणेभ्यो वैमुख्यम्। अनभिहितस्य अनुक्तस्य। अभिहितस्य तु यथार्थं कथनम्। मत्काव्ये यानि दूषणानि भवेयुस्तानि निर्देश्यनीति यदा कश्चित्कथये-

तस्य भवनं सुसंमृष्टं, ऋतुषट्कोचितविविधस्थानम्, अनेकतरुमूलक्लिपतापाश्रयवृक्षवाटिकं, सक्रीडापर्वतकं, सदीर्घिकापुष्करिणीकं, ससरित्समुद्रावर्त्तकं, सकुल्याप्रवाहं, सबर्हिणहरिणहारीतं, ससारसचक्रवाकहंसं, सचकोरक्रौञ्चकुररशुकसारिकं, घर्मक्लान्तिचौरं, सुभू(ति)मिधारागृहयन्त्रलतामण्डपकं, सदोलाप्रेङ्खं च स्यात् । काव्याभिनिवेशखिन्नस्य मनसस्तद्विनि-

---

त्तर्हि यथास्थितं दूषणमुद्घाटनीयम्, अन्यथा विमुखीभावः समाश्रणीय इति भावः ।

तस्य कवेः भवनं गृहं सुमम्मृष्टं परितः शुद्धम् । ऋतुषट्के उचितानि योग्यानि विविधानि स्थानानि यस्मिंस्तत् । अनेकेषु तरुमूलेषु कल्पिता रचिता अपाश्रया आश्रयरहिता चतुरश्रिकाफलकादिशून्या वृक्षवाटिका यस्मिन् । वाटी वास्तौ गृहोद्याने-त्कटयोरिति हैमात् गृहार्थकोऽत्र वाटीशब्दः । ततश्च वृक्षस्य मौला ( मूले भवा मौला ) वृक्षमौला । वृक्षमौला चासौ वाटी च । वृक्षवाटी । "शाकपार्थिवादीनां च" इति वार्तिकेन उत्तरपदस्य मौलस्य लोपः । ततश्च बहुव्रीहौ कप् । केण इति ह्रस्वे । अनेकतरुमूलकल्पितापाश्रयवृक्षवाटिका । वृक्षवाटिकेति अखण्डपदस्वीकारे तु अमात्यगणिकागेहोपवने वृक्षवाटिका इति कोषादमात्यगणिकासम्बन्धिनोः गेहोपवनयोः संज्ञा स्यात् सा चात्राननुकूलेति बोध्यम् । क्रीडार्थे पर्वतस्तेन सहितं बहुव्रीहौ कप् । दीर्घिकाभिः वापीभिः । पुष्करिणीभिः समचतुरस्रखातैः । पुष्करिण्यां तु खातं स्यात् इति कोषः । सहितम् । सरितां नदीनां समुद्राणां च आवर्त्तनेन जलानां भ्रमणेन सहितम् ससरित्समुद्रावर्त्तकम् । स्यादावर्त्तोऽम्भसां भ्रमः इत्यमरः । कुल्यायाः कृत्रिमस्वल्पनद्याः प्रवाहेण सहितम् । कुल्याल्पा कृत्रिमा सरित् इत्यमरः । बर्हिणश्च हरिणश्च हारीतश्चेति समाहारद्वन्द्वः । तेन सहितम् मयूरमृगहारीतसहितम् सारसश्च चक्रवाकश्च हंसश्चेति समाहारद्वन्द्वः तेन सहितम् । चकोरश्च क्रौञ्चश्च कुररश्च शुकश्च सारिका चेति समाहारद्वन्द्वः, अत्र पदत्रये विभाषा वृक्षमृगतृणधान्यव्यंजनपशुशकुन्यश्ववडवपूर्वापराधरोत्तराणामिति सूत्रेण समाहारे वैकल्पिक एकवद्भावः । घर्मस्य क्लान्तिं चोरयतीति तत् । भूत्या सहितौ सभूती सौन्दर्याधायकोपकरणसहितौ । धारागृहस्य यन्त्रं धारागृहयन्त्रम् । लताभिर्निर्मितो मण्डपः लतामण्डपः अनयोः समाहारः । सुभूती धारागृहयन्त्रलतामण्डपौ यस्मिन् तत् । दोलायाः प्रेंखा संचालनम् । तया सहितम् काव्ये अभिनिवेशेन खिन्नं यन्मनस्तस्य विरागदूरीकरणाय आज्ञायां मूकाः का आज्ञा किं कर्त्तव्यम् कथयन्तु किमवशिष्यते इत्यादिरीत्या अज्ञाप्रापणे अवाचः परिजना यस्मिंस्तत् । विनिर्गता जना यस्मात्तत् विजनं निर्माक्षिकं वा तस्य कवेः स्थानं सदनम् । भृत्यसमुदायः अपभ्रंशभाषणे प्रवणः प्रह्वः विनीतः शिक्षित इतियावत् । प्रवणः क्रमनिम्नोर्व्यां प्रह्वे ना तु चतुष्पथे । इत्यमरः । मागधभाषया सहितेऽपभ्रंशभाषणेऽ-

वेदच्छेदाय आज्ञामूकपरिजनं विजनं वा तस्य स्थानम्। अपभ्रंशभाषणप्रवणः परिचारकवर्गः, समागधभाषाभिनिवेशिन्यः परिचारिकाः। प्राकृतसंस्कृतभाषाविद आन्तःपुरिका, मित्राणि चास्य सर्वभाषाविन्दि भवेयुः।

सदःसंस्कारविशुद्ध्यर्थं सर्वभाषाकुशलः, शीघ्रवाक्, चार्वक्षर, इङ्गिताकारवेदी, नानालिपिज्ञः, कविः, लाक्षणिकश्च लेखकः स्यात्। तदसन्निधावतिरात्रादिषु पूर्वोक्तानामन्यतमः। स्वभवने हि भाषानियमं यथा प्रभुर्विदधाति तथा भवति।

श्रूयते हि मगधेषु शिशुनागो नाम राजा; तेन दुरुच्चारानष्टौ वर्णानपास्य

---

भिनिविष्टं शीलं यासां ता समागधभाषाभिनिवेशिन्यः परिचारिकाः दास्यः। अन्तःपुरे भवा अन्तः पुरचारिण्यः प्राकृतसंस्कृतभाषयोर्विदः। सर्वा भाषा विदन्ति तानि सर्वभाषाविन्दि मित्राणि सुहृदः।

सदसः सभायाः यः संस्कारस्तस्य विशुद्ध्यर्थं विशोधनाय सर्वासु भाषासु कुशलः प्रवीणः। शीघ्रं वक्तीति शीघ्रवाक्। चारुणि मनोहराणि अक्षराणि यस्य स चार्वक्षरः। इङ्गितस्य चेष्टितस्य आकारस्य च वेदी। नाना संस्कृतहिन्दीयावनी + आङ्गलप्रभृतीनां लिपिं लिविं। लिखिताक्षरविन्यासे लिपिर्लिविरुभे स्त्रियौ इत्यमरः। जानातीति नानालिपिज्ञः। कविः कवियता लाक्षणिकः लक्षणज्ञो लेखकः ( इदानीं क्लर्क इति प्रसिद्धः ) लिपिंकरः स्यात्। लिपिंकरोक्षरचणोऽक्षरचुञ्चुश्च लेखके इत्यमरः। अतिरात्रवेलायां तदसन्निधौ लेखकासन्निधौ पूर्वोक्तानां परिचारक परिचारिकाऽऽन्तःपुरिकाणां मध्ये अन्यतमो भवतु। अयं भावः। लेखकादीनां नियत समयस्थायितया नाधिकरात्रौ तेषां स्थितिः। अभिनिवेशिनश्च कवेः यदि अतिरात्र एव काव्यादिषु इच्छा अभिनिवेशो वा समुदीयात्तदा को नाम लेखकत्वं सम्पादयेत। इत्यत उक्तं यत् तत्समये तत्समयोपस्थितैः परिचारकादिभिरेव लेखककृत्यं सम्पादनीयमिति। अत्र "अन्यतरः" इति पाठोऽशुद्धः। यतोहि डतरच् प्रत्ययस्तत्रैव भवति यत्र द्वयोरेकस्य निर्धारणं कर्त्तव्यं चेत्। तथा च पाणिनेरनुशासनं "किं यत्तदोर्निर्धारणे द्वयोरेकस्य डतरच्। इति अत्र तु पूर्वोक्तानामिति वहूक्त्या बहूनां मध्ये एकस्य निर्धारणं कर्त्तव्यमतो डतमचा भाव्यं न डतरचा। यथा च पाणिनिमुनेरनुशासनम् "वा बहूनां जातिपरिप्रश्ने डतमच्"। तस्मादन्यतमः साधुः अन्यतरः इति पाठोऽसाधुः। स्वभवने हि निजगेहे प्रभुः स्वामी यथा यादृशं भाषानियमं प्राकृतादिभाषायन्त्रणं करोति तथा तादृशमन्ये व्यवहरन्तीति भावः।

दुरुच्चारान् दुःखेन उच्चारयितुं शक्यान्। अष्टौ वर्णान् अष्टाक्षरान्। अपास्य त्यक्त्वा। स्वान्तः पुर एव नान्यत्रेत्यर्थः। के ते दुरुच्चारा अष्टौ वर्णा इत्यत आह-टकारादय

स्वान्त पुर एव प्रवर्त्तितो नियमः टकारादयश्चत्वारो मूर्द्धन्यास्तृतीयवर्जमूष्माणस्त्रयः क्षकारश्चेति।

श्रूयते च सूरसेनेषु कुविन्दो नाम राजा; तेन परुषसंयोगाक्षरवर्जमन्तः पुर एवेति समानं पूर्वेण।

श्रूयते च कुन्तलेषु सातवाहनो नाम राजा; तेन प्राकृतभाषात्मकमन्तः पुर एवेति समानं पूर्वेण।

श्रूयते चोज्जयिन्यां साहसाङ्को नाम राजा; तेन च संस्कृतभाषात्मकमन्तः पुर एवेति समानं पूर्वेण।

तस्य सम्पुटिका सफलकखटिका, समुद्गकः, सलेखनीकमषीभाजनानि ताडिपत्राणि भूर्जत्वचो वा, सलोहकण्टकानि तालदलानि, सुसम्मृष्टाः भित्तयः, सततसन्निहिताः स्युः। "तद्धि काव्यविद्यायाः परिकरः" इति आचार्याः। "प्रतिभैव परिकरः" इति यायावरीयः।

कविः प्रथममात्मानमेव कलयेत्। कियान्मे संस्कारः, क्व भाषाविषये

---

इति। मूर्द्धन्याः मूर्धनि भवाः टठडढाः चत्वारः चतुःसंख्याकाः। तृतीयं शल्प्रत्याहारे ऊष्मसंज्ञके शषसहेत्यात्मके सकारं वर्ज्जयित्वा शषहेतित्रयः। क्षकारश्च। ठटडढ शषहक्षान् वर्णान् अपास्य अन्ये ककारादयो वर्णाः सर्वैः प्रयोक्तव्याः, इत्येवं रूपो नियमः मगधराजेन शिशुनागेन स्वान्तः पुरे प्रवर्त्तितः। परुषः कठोरः संयोगो येषां तानि परुषसंयोगानि। तानि च तानि अक्षराणि वर्जयित्वा परुषसंयोगाक्षरवर्जम्। ये वर्णाः संयुक्ताः सन्तः परुषा भवन्ति ते त्यक्तव्या इति भावः। प्राकृतभाषात्मकं प्राकृतभाषामयम्। संस्कृतभाषामयम्।

तस्य कवेः एते पदार्थाः सततं सन्निहिताः निरन्तरं सन्निधानाः स्युः। के ते इत्यत आह–सफलकेति। फलकेन काष्ठपट्टेन सहिता खटिका कठिनी "खडिया मट्टी" इति प्रसिद्धा। समुद्गकः संपुटकः। दोना इति प्रतीतः। सलेखनीकं मष्याः स्याहीतिप्रसिद्धायाः भाजनं पात्रम्। दावात इति ख्याता। ताडयाः पत्राणि। भूर्जस्य त्वचः। लोहकण्टकेन आल्पिन इति प्रसिद्धेन पिनद्धानि तालदलानि। सुसम्मृष्टा सम्यक् परिशोधिता भित्तयः कुडयः। अत्र आचार्यसम्मतिं दर्शयति—तद्धीति। तत्पूर्वोक्तं सर्वं काव्यविद्यायाः साहित्यस्य परिकरः सामग्री। स्वमतेनापवदति—प्रतिभेति। प्रतिभैवैका परिकरः यतो हि अन्येषां सद्भावेऽपि प्रतिभादरिद्रस्य कवित्वादर्शनात्। सप्रतिभस्य अन्येषामसत्तायामपि काव्यस्य दर्शनात् इत्यन्वयव्यतिरेकाभ्यां प्रतिभैव काव्यविद्यायाः परिकरः नान्यः।

अथ कविना कथं स्थेयमिति दर्शयति—कविरिति। प्राग् कवयिता स्वमेव विरच-

शक्तोऽस्मि, किंरुचिर्लोकः, परिवृढो वा कीदृशि गोष्ठ्यां विनीतः, कास्य वा चेतः संसजत इति बुद्ध्वा भाषाविशेषमाश्रयेत" इति आचार्याः। "एकदेशकवेरियं नियमतन्त्रणा, स्वतन्त्रस्य पुनरेकभाषावत्सर्वा अपि भाषाः स्युः" इति यायावरीयः। देशविशेषवशेन च भाषाश्रयणं दृश्यते। तदुक्तम्—

"गौडाद्याः संस्कृतस्थाः परिचितरुचयः प्राकृते लाटदेश्याः
सापभ्रंशप्रयोगाः सकलमरुभुवष्टक्कभादानकाश्च।
आवन्त्याः परियात्राः सह दशपुरजैर्भूतभाषां भजन्ते
यो मध्येमध्यदेशं निवसति स कविः सर्वभाषानिषण्णः॥
जानीयाल्लोकसाम्यत्यं कविः कुत्र ममेति च।
असम्मतं परिहरेन्मतेऽभिनिविशेत च॥
जनापवादमात्रेण न जुगुप्सेत चात्मनि।
जानीयात्स्वयमात्मानं यतो लोको निरङ्कुशः॥

---

येत्। आत्मानमेव संस्कुर्यात्। कल्पनाप्रकारं वक्ति–कियानिति। कियान् किंपरिमाणकः मे संस्कारः लक्षणाभिज्ञत्वम्। कस्मिन् भाषाविषये समर्थोस्मि। लोकः कीदृशे वस्तुनि कृतरुचिकः। कीदृश्यां गोष्ठ्यां सभायां प्रभुः। विनीतः शिक्षितः। क अस्य लोकस्य चेतः संसजते संलग्नं भवति इति सर्वं ज्ञात्वा भाषाविशेषं सौरसेनी मागध्यावन्तीकादीः समाश्रयेत्। यो हि एकदेशी कविः तस्य कृते इयं नियमकृता तन्त्रणा अधीनता स्वतन्त्रस्य स्वाधीनस्य एकभाषायास्तुल्यं सर्वा अपि भाषाः स्युरिति समन्वयः।

गौडाद्या इति। गौडो देश आद्यो तेषां ते गौडाद्याः वांगाः अपिशब्दात् कलिङ्गा अङ्गा वा ग्राह्याः। संस्कृतस्थाः। लाटदेश्या लाटदेशोद्भवाः प्राकृते परिचितरुचयः। परिचिता रुचिर्येषां ते। कृतप्रेमाणः। सकलमरुभूमिसमुत्पन्नाः। अपभ्रंशभाषाया प्रयोगं कुर्वाणाः टकारक्ककारभकारान् आददति। आवन्त्याः उज्जैनीनिवासिनः, पारियात्राः पारियात्रोद्भवाः दशपुरोत्पन्नैः सह भूतभाषां पैशाचीं भजन्ते उच्चारयन्ति। योहि मध्यदेशे निवसति स कविः सर्वासु भाषासु निषण्णः निपुण इति परमार्थः।

जानीयादिति। कविः लोकस्य साम्मत्यं अविरोधं जानीयात्। अथ च स्वस्य कुत्र साम्मत्यं वर्त्तते इति जानीयात्। असम्मतं विरुद्धं परिहरेत्परित्यजेत्। मते अनुमोदितेऽर्थेऽभिनिविशेत।

जनापवादेति। जनस्य लोकस्य अपवादमात्रेण तिरस्कारेणैव आत्मनि न जुगुप्सेत स्वावमाननं न कुर्यात्। आत्मानं स्वं स्वयं जानीयात्, स्वैनैव वस्तुनो याथात्म्यं वोध्यम्,

गीतसूक्तिरतिक्रान्ते स्तोता देशान्तरस्थिते।
प्रत्यक्षे तु कवौ लोकः सावज्ञः सुमहत्यपि॥
प्रत्यक्षकविकाव्यं च रूपं च कुलयोषितः।
गृहवैद्यस्य विद्या च कस्मैचिद्यदि रोचते॥

इदं महाहासकरं विचेष्टितं परोक्तिपाटच्चरतारतोऽपि यत्।
सदुक्तिरत्नाकरतां गतान्कवीन् कवित्वमात्रेण समेन निन्दति॥

वचः स्वादु सतां लेह्यं लेशस्वाद्वपि कौतुकात्।
बालस्त्रीहीनजातीनां काव्यं याति मुखान्मुखम्॥
कार्यावसरसञ्जानां परिव्राजां महीभुजाम्।
काव्यं सद्यः कवीनां च भ्रमत्यह्ना दिशो दश॥

---

यतः कारणात् लोकोयं निरङ्कुशः। स्वच्छन्दचारी। उक्तं च जनानने कः करमर्पयिष्यति।

प्रत्यक्षे त्विति। प्रत्यक्षे तु सुमहत्यपि कवौ अतिप्रशंसनीयेऽपि कवयितरि लोकः सावज्ञः निन्दाकारी इदं काव्यं सुन्दरं सुभाषितं वा इत्यादि काव्येषु तदा एव जायेत यदा कवयिता लोकान्तरगतो मृतो भवेत् अथवा देशान्तरगतः स्तोता वैदेशिकः समालोचकः प्रशंसको वा भवेत्।

प्रत्यक्षेति। प्रत्यक्षकवेः काव्यं, कुलयोषितः कुलस्त्रियो रूपम्। गृहवैद्यस्य गृहचिकित्सकस्य विद्या च। एतत्त्रयं यदि रोचेत तर्हि कस्मैचिदेव रोचेत न सर्वेभ्यः।

इदमिति। इदमतीवहास्यास्पदं विचेष्टितम् यत् परोक्तीनां परभणितीनां पटच्चरतायां तस्करतायां।

चौरिकागारिकस्तेनदस्युतस्करमोषकाः।
प्रतिरोधिपरास्कन्दिपाटच्चरमलिम्लुचाः॥ इत्यमरः

रतोपि अनुरक्तोपि सन् सदुक्तिषु विषये रत्नाकरतां गतान् प्राप्तान् महतः कवीन् समेन कवित्वमात्रेण केवलं काव्येनैव निन्दति।

वचःस्वादु इति। वचसि स्वादु उच्चारणे मनोहरं काव्यं सतामपि लेह्यं भवति। लेशस्वाद्वपि अल्पमनोहरमपि काव्यं कौतुकात् बालस्त्रीहनिजातीनां मुखात् मुखं याति।बालकाः स्त्रियः क्षुद्रा अपि प्रेम्णा तत्काव्यमुद्घोषयन्ति।

कार्यावसरेति। कार्यस्यावसरे यदा कार्यं तदैव सज्जानां काव्यकर्तृणाम्, परिव्राजां भ्रमत्संन्यासिनां, महीभुजां राज्ञां सद्यःकवीनाम् आशुकवीनां काव्यं अह्ना दिवसेनैव दश दिशो भ्रमति गौरवमपि प्राप्नोति। अह्नेति अपवर्गे तृतीया।

पितुर्गुरोर्नरेन्द्रस्य सुतशिष्यपदातयः ।
अविविच्यैव काव्यानि स्तुवन्ति च पठन्ति च ॥"

"किञ्च नार्द्धकृतं पठेदसमाप्तिस्तस्य फलम्" इति कविरहस्यम् । न नवीनमेकाकिनः पुरतः । स हि स्वीयं ब्रुवाणः कतरेण साक्षिणा जीयेत । न च स्वकृतिं बहु मन्येत । पक्षपातो हि गुणदोषौ विपर्यासयति । न च दृप्येत् । दर्पलवोऽपि सर्वसंस्कारानुच्छिनत्ति । परैश्च परीक्षयेत् । यदुदासीनः पश्यति न तदनुष्ठातेति प्रायो वादः । कविमानिनं तु छन्दोऽनुवर्त्तनेन रञ्जयेत् । कविम्मन्यस्य हि पुरतः सूक्तमरण्यरुदितं स्याद्विप्लवेत च । तदाह—

"इदं हि वैदग्धरहस्यमुत्तमं पठेन्न सूक्तिं कविमानिनः पुरः ।
न केवलं तां न विभावयत्यसौ स्वकाव्यबन्धेन विनाशयत्यपि ॥"

---

पितुरिति । पितुः काव्यानि सुताः गुरोः शिष्या नरेन्द्रस्य पदातयः अविविच्यैव अविचार्यैव स्तुवन्ति पठन्ति च ।

कवयित्रे अन्यनियमानादिशति–किंचेति । अर्द्धंकृतं काव्यम् अर्थात् पादैकं पादद्वयं पादत्रयं वा कृत्वा कस्यचन पुरस्तात् न पठेत्, असमाप्तिस्तस्य पठनस्य फलम् । इति कवीनां गूढं तत्त्वम् । नवीनं प्रत्यग्रं काव्यमेकाकिन एकलस्य । एकाकी त्वेक एकलय इत्यमरः । पुरतः न पठेत् एकाकिनोऽग्रे पठितस्य दोषमुद्भावयति । एकस्य यस्याग्रे श्लोकः पठितः स कदाचित्तं श्लोकं स्वीयं ब्रूयात् इयं मदीया कृतिरिति कथयेत्तर्हि कतरेण साक्षिणा प्रतिभुवा जीयेत जेतुं शक्येत । नापि स्वकृतिं स्वरचनां बहु मन्येत प्रशंसां कुर्यात् । बहुमानने दोषं कथयति–पक्षपातो हि गुणदोषौ विपर्यस्तौ करोति । गुणो दोषतां गच्छति दोषस्तु नितरां दोष एव अथवा गुणतां व्रजति । न च दृप्येत् दर्पं कुर्यात् । दर्पलेशोऽपि सर्वान् संस्करान् समुच्छिन्नान् करोति । उदासीनः मित्रत्वशत्रुत्वशून्यः यत्काव्यं पश्यति तत्काव्यं नानुतिष्ठति इति बाहुल्येन प्रसिद्धिः। कविमानिनं स्वं कविं मन्तारं छन्दसः अभिप्रायस्य । छन्दोऽभिप्राय आशय इत्यमरः । अनुवर्त्तनेन रञ्जयेत् प्रवणयेत् । रञ्जनाभावे हि कविम्मन्यस्य पुरतः सूक्तं सुभाषितम् अरण्यरुदितं स्यात् अरण्यरोदनतुल्यं स्यात् अथ च विप्लवेत उपद्रुतं नष्टमिति यावत् च स्यात् ।

तदाहेति स्वोक्तं प्रमाणयति—इदं हीति । इदमेतदुत्तमं श्रेष्ठं वैदग्ध्यरहस्यं चातुर्यमूलं कवित्वरहस्यमित्यर्थः । यत् कविमानिनः कविम्मन्यस्य पुरः सूक्तिं सुभाषितं पठेत् नोच्चारयेत् । असौ कविमानी तां सूक्तिं केवलं न विभावयति न पर्यालोचयति इति न प्रत्युत स्वकाव्ये बन्धेन विनाशयति ।

अनियतकालाः प्रवृत्तयो विप्लवन्ते तस्माद्दिवसं निशां च यामक्रमेण चतुर्द्धा विभजेत् । स प्रातरुत्थाय कृतसन्ध्यावरिवस्यः सारस्वतं सूक्तमधीयीत । ततो विद्यावसथे यथासुखमासीनः काव्यस्य विद्या उपविद्याश्चानुशीलयेदाप्रहरात् । न ह्येवंविधोन्यः प्रतिभाहेतुर्यथा प्रत्यग्रसंस्कारः । द्वितीये काव्यक्रियाम् । उपमध्यान्हं स्नायादविरुद्धं भुञ्जीत च । भोजनान्ते काव्यगोष्ठीं प्रवर्त्तयेत् । कदाचिच्च प्रश्नोत्तराणि भिन्दीत । काव्यसमस्याधारणा, मातृकाभ्यासः, चित्रा योगा इत्यायामत्रयम् । चतुर्थ एकाकिनः परिमितपरिषदो

---

अनियतकालाः समयव्यवस्थारहिताः प्रवृत्तयः विप्लवन्ते उपद्रुता भवन्ति । अतः अहर्निशयोः यामक्रमेण प्रहरपरिपाटया चतुःप्रकारेण विभागं कुर्यात् ।

अथ दिवसनिशे यामक्रमेण विभजति-स प्रातरिति । स कविः प्रातः अहर्मुखे उत्थाय कृते ( सध्या च वरिवस्या चेति ) संध्यावरिवस्ये संधिकर्मनमस्ये येनासौ तथा सारस्वतं सरस्वती-सम्बन्धि सूक्तं स्तोत्रमधीयीत पठेत् । ततः सन्ध्यादिकरणानन्तरं विद्याया अवसथे विद्यालये यथासुखं सुखपूर्वकमासीनः स्थितिं कुर्वन् काव्यस्य विद्याः अलंकारकोशछन्दःप्रभृतयः उपविद्याः कलाः आप्रहरात प्रहरपर्यन्तमनुशीलयेदभ्यसेत् । न हि एवंविधः एतादृशः अन्यः कश्चित्प्रतिभाहेतुः प्रतिभासमुत्तेजकं कारणम् वर्त्तते यथा यादृशः प्रत्यग्रसंस्कारः नवीनः संस्कारः उद्धरणिः गुणनिकेति यावत् । यथाचोक्तं तत्प्रायम् ।

हेतुः परिचयस्थैर्यं वक्तुर्गुणनिकैव सा । इति ॥

द्वितीये प्रहरे काव्यक्रियामनुशीलयेदिति शेषः काव्यरचनाभ्यासं कुर्यादित्यर्थः । उपमध्याह्नं मध्याह्नात्प्रागेव द्वितीयप्रहरपूरणात्पूर्वमेव स्नायात्, अविरुद्धं प्रकृतिसात्म्यं यथा स्यात्तथा भुञ्जीत भोजनं कुर्यात् ।

भोजनोत्तरं तृतीयप्रहरे काव्यविषये कवीनां गोष्ठीं सभां कारयेत् । काव्यगोष्ठयाः कर्त्तव्यं निर्धारयति-कदाचिच्चेति । कदाचित् प्रश्नानामुत्तराणि कुर्यात्, उत्तरेभ्यश्च प्र- । एतदेव प्रश्नोत्तरभेदनं नाम । काव्ये या समस्या पूर्त्तिजिज्ञासा कविशक्तिपरीक्षार्थमपूर्णतयैव पठ्यमानेति तत्वम् । तस्याः धारणा ग्रहणम् । मातृकाभ्यासः सुन्दराक्षिरलेखने पुनरावृत्तिः । चित्रा योगाः । इत्यायामत्रयं प्रहरत्रयं यापयेत् । चतुर्थे तु प्रहरे एकाकिनः एकलस्य परिमितपरिषदो वा परिगणितसदसो वा कृत्यानां कर्त्तरि वेति षष्ठी ।

समज्या परिषद्गोष्ठी सभासमितिसंसदः । आस्थानी क्लीवमास्थानं स्त्री नपुंसकयोः सदः । इत्यमरः

वा पूर्वाह्णभागविहितस्य काव्यस्य परीक्षा। रसावेशतः काव्यं विरचयतो न च विवेक्त्री दृष्टिस्तस्मादनुपरीक्षेत। अधिकस्य त्यागो, न्यूनस्य पूरणम्, अन्यथास्थितस्य परिवर्त्तनं, प्रस्मृतस्यानुसन्धानं चेत्यहीनम्।

सायं सन्ध्यामुपासीत सरस्वतीं च। ततो दिवा विहितपरीक्षकस्याभिलेखनमाप्रदोषात्। यावदार्त्ति स्त्रियमभिमन्येत। द्वितीयतृतीयौ साधु शयीत। सम्यक्स्वापो वपुषः परमारोग्याय। चतुर्थे सप्रयत्नं प्रतिबुध्येत। ब्राह्मे मुहूर्त्ते मनः प्रसीदत्ताँस्तानर्थानध्यक्षयतीत्याहोरात्रिकम्।

चतुर्विधश्चासौ। असूर्यम्पश्यो, निषण्णो, दत्तावसरः, प्रायोजनिकश्च। यो गुहागर्भभूमिगृहादिप्रवेशान्नैष्ठिकवृत्तिः कवते, असावसूर्यम्पश्यस्तस्य सर्वे

---

पूर्वाह्णे दिवसस्य पूर्वभागे। द्वितीये काव्यक्रियामित्युक्त्या द्वितीये प्रहरे इत्यर्थः। विहितस्य कृतस्य काव्यस्य कवितायाः परीक्षा पर्यालोचनम्। ननु कुतो विवेचनं कर्तव्यम् यतो विविच्यैव काव्यं कृतम् इत्याशङ्कायामाह—रसावेशेति। रसावेशात् रसाभिनिवेशात् कवयितुः दृष्टिर्न विचारशीला इति काव्यरचनामनु परीक्षां विदध्यात्। ततः अधिकस्य निष्प्रयोजनस्य अविवक्षितस्य वा त्यागः। न्यूनस्य अनुपात्तस्य किन्तु विवक्षितस्य पदस्य वाक्यस्य अर्थस्य पूरणम् योजनम्। अन्यथा विपर्यासेन स्थितस्य पदस्य वाक्यस्य अर्थस्य वा परिवर्त्तनम्। प्रस्मृतस्य विस्मृतस्य अनुसन्धानम् अन्वीक्षणम्। इत्यहीनं चतुर्थयामपूरणम्।

सायं सान्ध्यं कर्म कुर्यात् सरस्वतीं च स्तुतिनुतिद्वारा उपतिष्ठेत्। तत उपासनानन्तरम्। विहिता परीक्षा यस्य तस्य विहितपरीक्षकस्य आप्रदोषम् रात्रेः प्रथमप्रहरपर्यन्तम् अभिलेखनम्। अभिमन्येतेति अभिरमेत। द्वितीयतृतीयौ प्रहरौ साधु सम्यक् शयीत शयनं कुर्यात्। शयनस्यावश्यकतां द्योतयति—सम्यगिति। सम्यक् स्वापः साधुशयनं वपुषः शरीरस्य परमारोग्यप्रदम्। चतुर्थे प्रहरे सप्रयत्नं जागृतिकारकघटीयन्त्रेण अन्येन केनाप्युपायेन वा प्रतिबुध्येत जागृयात्। यतो ब्राह्मे मुहूर्ते प्रसीदत्स्वच्छं मनः तांस्तानलौकिकानर्थान् पदार्थान् अध्यक्षयति प्रत्यक्षीकरोति।

तदुक्तं—

चतुर्थयामिनीयामात् प्रसादमिव चेतना। इति।

इतिः समाप्तो। आहोरात्रिकम् अहोरात्रगोचरं वृत्तम्।

चतुर्विधेति। असौ कविः चतुर्विधः चतुः प्रकारः। यः पुमान् गुहाया गर्भः। भूमेर्गृहम्। गुहागर्भश्च भूमिगृहं च गुहागर्भभूमिगृहे ते आदी येषां ते गुहागर्भभूमिगृहादयः तेषु प्रवेशस्तस्मात्। तेषु प्रवेशाद्धेतोः नैष्ठिका निश्चला वृत्तिर्यस्यासौ नैष्ठिकवृत्तिः

कालाः। यः काव्यक्रियायामभिनिविष्टः कवते न च नैष्ठिकवृत्तिः, स निषण्णस्तस्यापि त एव कालाः।

यः सेवादिकमविरुन्धानः कवते, स दत्तावसरस्तस्य कतिपये कालाः। निशायास्तुरीययामार्द्धः, स हि सारस्वतो मुहूर्त्तः। भोजनान्तः, सौहित्यं हि स्वास्थ्यमुपस्थापयति। व्यवायोपरमः, यदार्त्तिविनिवृत्तिरेकमेकाग्रतायनम्।

---

समाहितमनाः सन्। काव्यकर्मणि समाधिः परं व्याप्रियते इत्युक्तत्वात्। कवते कवितां करोति असौ कविः असूर्यम्पश्यः। तस्य असूर्यम्पश्यस्य कवयितुं सर्वे कालाः यदेच्छेत्तदैव समय इति भावः। यः पुमान् काव्यक्रियायां काव्यकर्मणि अभिनिविष्टः सन् अर्थात् यदा अभिनिवेशः तदा कवते न तु नैष्ठिकवृत्तिर्भूत्वा ते असूर्यम्पश्यवत् गुहागर्भभूमिगृहादिषु प्रवेशकरणात्समाहितमनीभूय कवितां करोति स निषणाख्यः कविः। तस्य निषण्णनाम्नः कवेरपि त एव पूर्वोपदिष्टाः अर्थात् सर्वे कालाः।

यः पुरुषः सेवादिकम्, आधुनिकरीत्यो स्कूलकालेजपाठशालादिषु वेतनं गृहीत्वा पाठनादिकम् अविरुन्धानः विरोधमनाचरन् तत्कृतनियमतन्त्रणादिषु। यथाविहितं कुर्वन्नित्यर्थः। कवितां कुरुते स कविः दत्तावसरः प्राप्तावसर इत्यर्थः। तस्य दत्तावसरस्य कवेः कतिपये कालाः यदा अवसरः तदा समयः।

ननु दत्तावसरस्य कतिपये काला इत्युक्तं तत्र के तावत्काला इत्याकांक्षायां तान् कालान्निर्दिशति-निशाया इति। निशाया रात्रेः तुरीययामार्द्धः। तुरीयश्चासौ यामः तुरीययामः चतुर्थप्रहरः। तस्यार्द्धः खण्डः। भित्तं शकलखण्डे वा पुंस्यर्द्धः इत्यमरः। तुरीयो यामार्द्ध इति तु दुष्पाठः। यतः असमस्तपाठे हि तुरीयस्य अर्द्ध विशेषणतया निशीथकालः आपतति। अयं भावः। अहर्दिवसयोः अष्टौ यामाः। तत्र चत्वारो दिवसस्य चत्वारो रात्रेः। एवं रात्रेः चतुर्णां यामानां अर्द्धे २ क्रियमाणे अष्टौ अर्द्धा भवन्ति। एवं रीत्या निशायास्तुरीयो यामार्द्धः निशीथकाल एव। स च सर्वेषां स्वापसमयः भुक्तस्यान्नादेः परिणामसमयश्च, अतो नायं सारस्वतो मुहूर्त्तः एवं च न स काव्यकरणसमयः, अनुभवविरुद्धत्वात् चतुर्थाद् यामिनीयामात् प्रसादमिव चेतनेति प्राचीनोक्तिविरुद्धत्वाच्च। इति। सहि तुरीययामार्द्धोहि सारस्वतो मुहूर्त्तः। अयमेव मुहूर्त्तोऽन्यै ब्राह्म इत्युच्यते यथा च लक्षणसंवादः द्वौदण्डौ रात्रिशेषे तु ब्राह्मं मुहूर्त्तकं विदुरिति। अस्मिन् मुहूर्त्ते भगवती वाग्देवी प्रसन्ना स्मर्त्तुः सर्वानर्थानुपस्थापयति इत्यागमरहस्यम्। अतोऽयं काव्यकरणकालः।

भोजनस्य अन्तः चरमम्। अन्तो जघन्यं चरममन्त्यपाश्चात्यपश्चिमम्। इत्यमरः। भोजनान्तः भोजनोत्तरम् काव्यकरणसमयः। भोजनान्तस्य काव्यकालत्वे हेतुं वदति-सौहित्यमिति। हि यतः सौहित्यं तृप्तिः। सौहित्यं तर्पणं तृप्तिरित्यमरः। स्वास्थ्यं

याप्ययानयात्रा, विषयान्तरविनिवृत्तं हि चित्तं यत्र यत्र प्रणिधीयते तत्र तत्र गुडूचीलागं लगति। (अथवा) यदा यदा चात्मनः क्षणिकतां मन्यते स स काव्यकरणकालः।

यस्तु प्रस्तुतं किञ्चन सम्विधानकमुद्दिश्य कवते, स प्रायोजनिकस्तस्य प्रयोजनवशात्कालव्यवस्था। बुद्धिमदाहार्यबुद्ध्योरियं नियममुद्रा। औपदेशिकस्य पुनरिच्छैव सर्वे कालाः, सर्वाश्च नियममुद्राः।

---

चित्तस्थैर्यं शान्तिम् एकतानतामिति यावत् उपस्थापयति करोति। अथवा व्यवायोपरमः व्यवाय इति आर्तिमात्रोपलक्षणम्। तेन येन येन कारणेन मनसोऽस्थैर्यं भवति सर्वेषां तेषां विरामकालः काव्यकरणकालः। तत्र हेतुं दर्शयति–यदिति। यद्यस्मात्कारणात् आर्तेः चित्तोद्वेगजनिकायाः पीडायाः विनिवर्त्तनम् एकं मुख्यम्। एके मुख्यान्यकेवलाः इत्यमरः। एकाग्रतायतनम् अनन्यवृत्तेः स्थानम्। अथवा याप्ययानयात्रा याप्ये प्राप्तव्ये स्थाने यद् यानं गमनम्। यानं स्यात् वाहने गतौ इतिमेदिनी। तदुद्देश्येन या यात्रा प्रस्थानम्। यात्रा व्रज्याभिनिर्याणं प्रस्थानं गमनं गम इत्यमरः। अथवा याप्यैरधमैं र्वाह्यं यानं याप्ययानम् शिविका याप्यमानं स्यादित्यमरः। तेन यात्रा गमनम्। तदपि काव्यकरणकालः। अयं भावः। यात्रोद्यतं गन्तव्यस्थानप्राप्तेः प्राक् अन्तरालवर्त्तिनि समये विषयान्तरव्यासक्त्यभावाच् चेतसः समाहिततया काव्यं कर्त्तुं प्रभवेत, समाधिः काव्यकर्मणि परं व्याप्रियते इत्युक्तेरिति। एनमर्थं हेतुना विशदीकरोति विषयान्तरेति। हि यस्माद्धेतोः विषयान्तरेभ्यः अन्यान्यविषयेभ्यः विनिवृत्तं चित्तं यत्र यत्र स्वेष्टविषयेषु प्रणिधीयते प्राप्यते। प्राप्तप्रणिहिते समे इत्यमरः। स्थाप्यते इति यावत् तत्र तत्र विषयेषु गुडूचीलागं लगति, यथामृता (गुड्ची) रसायनं राजयक्ष्मिणोऽपि सर्वान् रोगान् निराकृत्य स्वास्थ्यं सम्पादयति तथेदं विषयान्तरविनिवृत्तं चित्तं ताँस्तान् लोकोत्तरचमत्कारजनकान् अर्थान् अध्यक्षयति। इति भावः। अत्र याप्ययान इति पदं स्वसदृशस्थितिकारकयानोपलक्षकम्। तेन धूम्रशकटीये प्रथमश्रेणिके वा द्वितीयश्रेणिके वा द्वितीयेतर (इन्टर) श्रेणिके वा डयने (डब्बा) स्वस्थानादन्यतो गच्छन् सावधानमनाः काव्यं कुर्यात्। यतः तदानीं सेवादिभ्यः कार्येभ्यः प्राप्तावसरः। एवं विशेषकालान् निर्दिश्य उपसंहारदिशा सामान्यकालं संकेतयति—यदा यदेति। यदा यदा यस्मिन् यस्मिन् समये आत्मनः स्वस्य क्षणिकतां प्राप्तावसरतां मन्यते अवगच्छति स स काव्यविरचनसमयः।

चतुर्थं कविं लक्षयति–यस्त्विति। यस्तु पुरुषः प्रस्तुतं प्राकरणिकं किञ्चन किमपि संविधानकं सम्भावितेतिवृत्तम् उद्दिश्य लक्ष्यीकृत्य कवते कवितां करोति

पुरुषवत् योषितोऽपि कवीभवेयुः। संस्कारो ह्यात्मनि समवैति, न स्त्रैणं पौरुषं वा विभागमपेक्षते। श्रूयन्ते दृश्यन्ते च राजपुत्र्यो महामात्रदुहितरो गणिकाः कौतुकिभार्याश्च शास्त्रप्रहतबुद्धयः कवयश्च।

सिद्धं च प्रबन्धमनेकादर्शगतं कुर्यात्। यदित्थं कथयन्ति—

"निक्षेपो विक्रयो दानं देशत्यागोऽल्पजीविता।
त्रुटिको वह्निरम्भश्च प्रबन्धोच्छेदहेतवः॥

---

स प्रायोजनिकः। तस्य प्रायोजनिकस्य कवेः समयव्यवस्था प्रयोजनानुसारेण ज्ञेया। संप्रति चतुर्थाध्यायोक्तान् कवीन् संगमयति-बुद्धिमानिति। इयं पूर्वोक्ता नियममुद्रा नियमतन्त्रणेति यावत्। बुद्धिमतः आहार्यबुद्धेश्च कृते निर्दिष्टा। बुद्धिमान् आहार्यबुद्धिश्च असूर्यम्पश्यः निषण्णः दत्तावसरः प्रायोजनिकश्च भवेत्, अथ च तयोरेव कृते सर्वकालस्य, कतिपयकालस्य प्रयोजनवशात्कालस्य च व्यवस्था वर्त्तते। औपदेशिकस्य पुनः इच्छैव सर्वे कालाः यदैव काव्यं कर्त्तुमीहा प्रादुर्भवेत् तदव काव्यं करोतु। न तत्कृते कालकृता नियमकृता वा मुद्रा वर्त्तते।

अथेदानीं कवित्वस्य व्यापकताम्, पुरुषत्वावच्छेदेन कवित्वं न तु स्त्रीत्वावच्छेदेन कवित्वमिति विशेषावच्छेदकशून्यतां वा दर्शयति-पुरुषवदिति। यथा पुरुषाः तथा योषितोऽपि स्त्रियोऽपि कवीभवेयुः काव्यकर्त्र्यः स्युः। सहेतुकं विवेचयति संस्कार इति। कवित्वं संस्कारविशेषजन्यम्। संस्कारश्च आत्मनि समवैति समवायसम्बन्धेन वर्त्तते न स्त्रिया शरीरे वर्त्तते। अतश्च अयं स्त्रीत्वावच्छिन्नः अयं पुंस्त्वावच्छिन्न आत्मा इत्येवं रूपेण स्त्रिया आगतं स्त्रैणं पुरुषादागतं पौरुषं विभागं न अपेक्षते। दृष्टान्तेन उपपादयति-श्रूयन्त इति। श्रूयन्ते कर्णाभ्यामिति शेषः। नहि श्रुतमात्रे सत्यता इत्यतो दार्ढ्यायोच्यते-दृश्यते चक्षुर्भ्यामिति शेषः। राज्ञां सुताः। महामात्राणाम् अमात्यसचिवादिकानां कन्यका। गणिकाः वेश्याः कौतुकीनां नटानाम् ऐन्द्रजालिकानां वा भार्याः, अथवा कौतुकिन्यो भार्याश्च। शास्त्रेषु प्रहताः क्षुण्णाः अथवा शास्त्रद्वारा प्रहता संमार्जिता उभयथापि निर्मला इत्यर्थः बुद्धयो यासां ताः शास्त्रप्रहतबुद्धयः। अथ च कवयः कवयित्र्यः।

इदानीं काव्यस्य अविच्छिन्नत्वं कथं भवेदिति वक्तुमुपक्रमते सिद्धमिति। सिद्धं निष्पन्नं प्रबन्धम् अनेकादर्शगतं कुर्यात् समाचारपत्रादिषु प्रहिणुयात्। अनेकादर्शगताकरणे दोषान्निदर्शयति-यद् यस्मात् जनाः इत्थमेवं कथयन्ति-निक्षेपः न्यासः। धरोहर इतिख्यातः। विक्रयः विपणः। विपणो विक्रय इत्यमरः। दानं स्वस्वत्वनिवृत्तिपूर्वकपरस्वत्वोत्पादनम्। देशत्यागः विदेशगमनम्, न जाने तत्र कीदृशी चित्तवृत्तिः अवस्था च कीदृशी, परिस्थितिर्वा अनुकूला प्रतिकूला भवेत् ततो विदेशगम-

दारिद्र्यं व्यसनासक्तिरवज्ञा मन्दभाग्यता ।
दुष्टे द्विष्टे च विश्वासः पञ्च काव्यमहापदः ॥"

पुनः समापयिष्यामि, पुनः संस्करिष्यामि, सुहृद्भिः सह विवेचयिष्यमीति कर्तुराकुलता राष्ट्रोपप्लवश्च प्रबन्धविनाशकारणानि ।

"अहर्निशाविभागेन य इत्थं कवते कृती ।
एकावलीव तत्काव्यं सतां कण्ठेषु लम्बते ॥
यथा यथाभियोगश्च संस्कारश्च भवेत्कवेः ।
तथा तथा निबन्धानां तारतम्येन रम्यता ॥
मुक्तके कवयोऽनन्ताः सङ्घाते कवयः शतं ।
महाप्रबन्धे तु कविरेको द्वौ दुर्लभास्त्रयः ॥"

---

नमपि। अल्पजीविता स्वल्पायुष्यम् । अर्द्धं काव्यं कृतं मध्ये मृतः कविस्ततः सापि। त्रुटिकः स्वार्थे कन अल्पता पूर्त्यकरणमित्यर्थः। वह्निः । जलम् । एते सर्वे प्रबन्धस्य उच्छेदे नाशे हेतवः कारणानि ।

दारिद्र्यमिति । दारिद्र्यं दरिद्रभावः । व्यसनासक्तिः कुकर्मसंलग्नम् । अवज्ञा किमेतेन व्यर्थायासेनेति एवंरूपस्तिरस्कारः । मन्दभाग्यता सर्वतः सुन्दरे काव्ये कृतेऽपि न तत्कश्चिच्छृणोति न पठति नादरं करोति इत्येवंरूपं दौर्भाग्यम् । दुष्टे खले विश्वासः । द्विष्टे शत्रौ विश्वासः । एते पञ्च पञ्चसंख्याकाः काव्ये महत्य आपदः।

पुनरिति । पुनः समापयिष्यामि पूरयिष्यामि, पुनः संस्कारिष्यामि शुद्धं करिष्यामि, एतत्काव्यं सुहृद्भिर्मित्रैः सह विवेचयिष्यामि विचारयिष्यामि इत्येवंरूपा कर्तुराकुलता व्यग्रता राष्ट्रोपप्लवः राज्यविनाशश्च प्रबन्धस्य विनाशे कारणानि।

उपसंहरति–अहरिति । यः कृती इत्थं दर्शितप्रकारेण अहर्निशयोः विभागं पार्थक्यं कृत्वा काव्यं करोति। तस्य काव्यं एकावलीव मौक्तिकमालेव सतां विदुषां कण्ठेषु लम्बते ।

इत्थंकारं कुर्वतः कवेरुत्तरोत्तरमुत्कर्षं साधयति यथेति । यथा यथा यादृशो यादृशः कवेः अभियोगः अभिनिवेशः अथच संस्कारः परिमार्जनम् भवेत् जायते । तारतम्येन-तथा तादृशी एव प्रबन्धानां निबन्धानां रम्यता सौन्दर्यम् ।

तारतम्यं दर्शयति मुक्तेति । मुक्तके इतिवृत्ते इतिवृत्तरचनायामित्यर्थ । कवयः अनन्ता अपरिमिताः । सङ्घाते प्रबन्धे कवयः शतम् । महाप्रबन्धनिर्माणे तु कविरेकः द्वौ वा, त्रयस्तु दुर्लभाः ।

अत्राह स्म—

"बह्वपि स्वेच्छया कामं प्रकीर्णमभिधीयते ।
अनुज्झितार्थसम्बन्धः प्रबन्धो दुरुदाहरः ॥
रीतिं विचिन्त्य विगणय्य गुणान्विगाह्य
शब्दार्थसार्थमनुसृत्य च सूक्तिमुद्राः ।
कार्यो निबन्धविषये विदुषा प्रयत्नः
के पोतयन्त्ररहिता जलधौ प्लवन्ते ॥
लीढाभिधोपनिषदां सविधे बुधाना
मभ्यस्यतः प्रतिदिनं बहुदृश्वनोऽपि ।
किञ्चित्कदाचन कथञ्चन सूक्तिपाका
द्वाक्तत्त्वमुन्मिषति कस्यचिदेव पुंसः ॥

---

उक्तार्थमन्येन संवदति—अत्राहस्मेति । का(१)मं निश्चितम् यत् स्वेच्छया आत्ममनीषया शास्त्राहित्येनेत्यर्थः प्रकीर्णं सङ्गतिरहितम् असमञ्जसम् बह्वपि घनमपि अभिधीयते । किन्तु अनुज्झितोऽपरित्यक्तः अर्थसम्बन्धः पदार्थसङ्गतिः यत्र स प्रबन्धः सन्दर्भः दुरुदाहरः दुःखेन वक्तुं शक्यः । उक्तं च—

अर्थवच्च विचित्रं च न शक्यं बहुभाषितुम् । इति ।

रीतिमिति । रीतिं वैदर्भीप्रभृतिं, गुणान् माधुर्यौजःप्रसादान् विगणय्य गणयित्वा, शब्दसमूहम् पदार्थसमूहं च विगाह्य आलोड्य, सूक्तिमुद्राः सुभाषितमुद्राः अनुसृत्य अनुगत्य निबन्धविषये काव्यरचनायां विदुषा यत्नः कार्य्यः । यतो हि पोतयन्त्ररहिता नावं विना के जना जलधौ प्लवन्ते समुद्रस्य पारं गच्छन्ति ।

लीढेति । लीढा लेह्यवद् हृदये स्थापिता अभिधोपनिषत् । अभिधानम् अभिधा नामधेयम् । आख्याह्वे अभिधानं च नामधेयं नाम च इत्यमरः । तस्या उपनिषत् रहस्यम् यैस्तेषां बुधानां सविधे समीपे स्थित्वेति शेषः प्रतिदिनं प्रत्यहम् काव्यकरणाभ्यासं कुर्वतः बहुदृश्वनोऽपि बहुश्रुतस्यापि । बहुदृश्वा बहुश्रुतः इति कोषः । कस्यचिदेव पुंसः न तु सर्वस्य सूक्तिपाकात् सुभाषितपरिणामात कदाचन न तु सर्वदा कथञ्चन कृच्छ्रात् किञ्चिदल्पं वाक्तत्वं वचसः परमरहस्यमुन्मिषति उदयति ।

---

(१) इदम् वलदेवेन लाकुटिन्यायेनोक्तं मया तु नीतिशास्त्रान्वितमभिधीयत इत्याभिप्रायवद् उद्धवप्रतिवाक्यरूपं माघीयं पद्यं स्वीयानुकूलेर्थे संयोजितम् ।

इत्यनन्यमनोवृत्तेर्निःशेषेऽस्य क्रियाक्रमे ।
एकपत्नीव्रतं धत्ते कवेर्देवी सरस्वती ॥
सिद्धिः सूक्तिषु सा तस्य जायते जगदुत्तरा ।
मूलच्छायां न जानाति यस्याः सोऽपि गिरां गुरुः ॥"

राजा कविः कविसमाजं विदधीत। राजनि कवौ सर्वो लोकः कविः

---

उक्तंच मङ्खकेन—

पञ्चश्लोकान् स्तोकाननुदिवसमभ्यस्य ननु ये ।
चतुष्पादीं कुर्युर्बहव इह ते सन्ति कवयः ॥
अविच्छिन्नोद्गच्छज्जलधिलहरीरीतिसुहृदः ।
सुहृद्या वैशद्यं दधति किल केषांचन गिरः ॥ इति ।

अभियुक्तस्य प्राशस्त्यं बोधयति—इतीति । इतीत्थम् अनन्या मनसो वृत्तिर्यस्य तस्यास्य कवेः निःशेषे सकले क्रियाक्रमे देवी सरस्वती एकः कविरेव पतिर्यस्या सा एकपत्नी तस्या व्रतं नियमं धत्ते धारयति ।

सिद्धिरिति । तस्य एवमभियोगेनाभ्यस्यतः कवेः सूक्तिषु काव्येषु सा जगदुत्तरा सिद्धिः निष्पत्तिर्जायते भवति । यस्याः सूक्तेर्मूलच्छायां सो गिरां गुरुरपि बृहस्पतिरपि न जानाति नावगच्छति ।

अथ एवमुपवर्णितदिशा बहुलायासेन निष्पादितमपि काव्यं यावद्भावकैर्नाभिनन्दितम् राज्ञां सभासु वा न प्रशंसास्पदमभूत् प्रदेशान्तरेषु न नीतं न वा तैरुद्घुष्टम् न वा विकृतीकृतम् ।

यथाचोक्तम्—

काव्येन किं कवेस्तस्य तन्मनोमात्रवृत्तिना ।
नीयन्ते भावकैर्यस्य न निबन्धा दिशो दश इत्यादि ॥

तावद्वैयर्थ्यमेव तस्य काव्यस्य, महद्वैशसं च तस्य कवेः इत्यतः भावकस्य ।

स्वामी मित्रं च मन्त्री च शिष्यस्त्वाचार्य एव च ।
कवेर्भवति ही चित्रं किं हि तद्यन्न भावकः ।

इत्युक्तदिशा नितरामावश्यकतामनुगृणन्—

राजाश्रयेण च गताः कवयः प्रसिद्धिं ।
राज्ञा समोऽस्ति न कवेः परमोपकारी । इति ।

चाकलयन् राज्ञो भावकत्वं निर्दिदिक्षुर्ग्रन्थकारस्तत्वबोधनेच्छया सूत्रमातनोति—राजचर्येति । राज्ञो नृपतेश्चर्या आचरणं प्रतिपाद्यते । कथं राज्ञा वर्त्तितव्यम् कथं वा सभा कर्त्तव्या कुत्र के स्थापितव्या इत्यादीनुपदेक्ष्यामः ।

राजेति । राजा नृपतिः कविः सन् कवीनां समाजं वृन्दं विदधीत समुत्पादयेत् ।

स्यात् । स काव्यपरीक्षायै सभां कारयेत् । सा षोडशभिः स्तम्भैश्चतुर्भिर्द्वारैरष्टभिर्मत्तवारणीभिरुपेता स्यात् । तदनुलग्नं राज्ञः केलिगृहम् । मध्येसभं चतुःस्तम्बान्तरा हस्तमात्रोत्सेधा समणिभूमिका वेदिका । तस्यां राजासनम् । तस्य चोत्तरतः संस्कृताः कवयो निविशेरन् । बहुभाषाकवित्वे यो यत्राधिकं प्रवीणः स तेन व्यपदिश्यते । यस्त्वनेकत्र प्रवीणः स सङ्क्रम्य तत्र तत्रोपविशेत् । ततः परं वेदविद्याविदः प्रामाणिकाः पौराणिकाः स्मार्त्ता भिषजो मौहूर्त्तिका अन्येऽपि तथाविधाः । पूर्वेण प्राकृताः कवयः; ततः परं नटनर्त्तकगायन

---

कथं राजा कविवृन्दसम्पादक इत्यत आह-राजनीति । राजनि कवौ सति सर्वो लोको जनः स्वयमेव कविः स्यात् भवेत् । अयं भावः । सर्वारम्भास्तण्डुलप्रस्थमूलाः । वृत्त्या समा नास्ति शरीरपोषणा । इत्याद्यभियुक्तोक्त्या सर्वेषां जीवानां सर्वाः प्रवृत्तयः पठनपाठनादयो धर्मस्याद्यसाधनभूतशरीररक्षाकृतिकायै वृत्त्या एव । सा हि वृत्तिश्च राजाश्रया । तस्मात् वृत्त्यर्थं राजाश्रये कर्त्तव्ये यथा राजा तथा प्रजा इति नियमोप्यनुसर्त्तव्यः स्यात् सर्वैरिति । सहि राजा काव्यतत्वपरीक्षायै सभां कारयेत् स्वानुचरैः । सा-सभा षोडशसंख्याकैः स्तम्भैः, चतुर्भिः चतुः संख्याकैः द्वारैः अष्टभिः उन्मत्तकरेणुभिरुपेता युक्ता कर्त्तव्या । तदनुलग्नं सभायाः समीप एव राज्ञः केलिगृहं क्रीडावेश्म । यतः सभात उद्विग्नं चेतः केलिगृहे विनोदयेत् । काव्यपरीक्षार्थकृतायाः सभाया मध्ये चतुःस्तम्वानां चतुर्गुल्मानाम् । "अप्रकाण्डे स्तम्बगुल्मौ" इत्यमरः । अन्तरा मध्ये । हस्तमात्रः करप्रमाण उत्सेध उच्छ्रायः "नगाद्यारोह उच्छ्राय उत्सेधश्चोच्छ्रयश्च सः" इत्यमरः । यस्या सा । मणयः प्रत्युप्ता यस्यां सा मणिप्रत्युप्ता । तादृशी या भूमिः । मध्यमपदलोपी समासः । मणिभूम्या सहिता या सा समणिभूमिका वेदिका । तस्यां वेदिकायां राजासनम् राज्ञः सिंहासनम् । तस्य राजासनस्य उत्तरत उत्तरस्यां दिशि संस्कृताः संस्कृताभिज्ञाः कवयः निविशेरन् । बहुभाषाकवित्वे सति यः पुमान् यत्र यस्मिन् भाषाकवित्वेऽधिकमत्यन्तं प्रवीणो निपुणः स कविः तेन काव्येन व्यपदिश्यते संज्ञाप्यते । यस्तु कविः अनेकत्र अनेकभाषासु निपुणः स सत्यवसरे सङ्क्रम्य गत्वा तत्र तत्र तेषु तेषु भाषाकविषु उपविशेत् । स्थितिं कुर्यात् । ततः परं कावभ्य उत्तरं वेदविद्यवेत्तारः । प्रामाणिका मैमांसिकाः,तार्किका । पौराणिकाः । स्मार्त्ताः धर्मशास्त्रिणः । भिषजो वैद्याः । मौहूर्तिका ज्यौतिषिकाः । अन्येपि तथाविधाः । मान्त्रिकाः तान्त्रिका तथा ऐन्द्रजालिकप्रभृतयः । पूवण सिंहासनापेक्षया पूर्वतः । प्राकृताः प्राकृतवेदिनः । कवयः । ततः परं प्राकृतवेदिनां कवीनां मुत्तरम् । नटः शैलूषः । वाक्यार्थाभिनयरूपनाट्यकारी नटो भवति । नर्त्तकः स्त्रीवेषधारी पुरुषः । पदार्थाभिनयरूपनृत्यकारी गात्रविक्षेपमात्ररूपनृत्तकारी च नर्त्तको भवति ।

वादकवाग्जीवनकुशीलवतालापचरा अन्येऽपि तथाविधाः । पश्चिमेनापभ्रंशिनः कवयः; ततः परं चित्रलेप्यकृतो माणिक्यबन्धका वैकटिकाः स्वर्णकारवर्द्धकिलोहकारा अन्येऽपि तथाविधाः । दक्षिणतो भूतभाषाकवयः; ततः परं भुजङ्गगणिकाः प्लवकशौभिकजम्भकमल्लाः शस्त्रोपजीविनोऽन्येऽपि तथाविधाः ।

तत्र यथासुखमासीनः काव्यगोष्ठीं प्रवर्त्तयेत् भावयेत्परीक्षेत च । वासु-

---

गायनः कर्त्तरिल्युट् । गायकः इत्यथः । वादकः वीणादिवंशादिमुरजादिकांस्यतालादिवादित्रोपजीवकः अथवा तेषां वादने प्रवीणः । वैणिकः वैणविकः मौरजिकः इत्यर्थः । वाचा वाण्या जीवतीति वाग्जीवनः कथकः । कुशीलवः चारणोवन्दिविशेषइत्यर्थः । चारणास्तु कुशीलवाः इत्यमरः । तालापचरः तालापचरेति पाठः ननु तालावचरेति । कांस्यनिर्मितवाद्योपजीवकः, करतलगमनशीलो नटनिशेषो वा । करतालिकावादनोपजीवको वा पाणिवादकः इत्यर्थः ।

तालः करतलेऽङ्गुष्ठमध्यमाभ्यां च सम्मिते ।
गीतकालक्रियामाने करस्फाले द्रुमान्तरे ॥
वाद्यभाण्डे च कांस्यस्य त्सरौ, ताली जटोषधौ
क्लीबं तु हरिताले स्यात् । इतिमेदिनी ॥

अन्येपि तथाविधा नटसदृशा उपविशेरन् । पश्चिमेन अपभ्रंशभाषाविषयककविताकारिणः । ततः परम् अपभ्रंशिकविनामुत्तरम् चित्रकृतः रङ्गाजीवाः आलेख्यकाराः । रङ्गाजीवश्चित्रकरः इत्यमरः । लेप्यकृतः पलगण्डाः सुधया भवनलेपकर्त्तारः पलगण्डस्तु लेपकः इत्यमरः । माणिक्यवन्धकाः रत्नप्रत्युप्तिकारिणः । वैकटिका जौहरी इति प्रसिद्धाः । स्वर्णकारः प्रसिद्धः । वर्द्धकिः तथा वढई इति प्रसिद्धः । तक्षा तु वर्द्धकिस्त्वष्टा रथकारश्चकाष्ठतट् । इत्यमरः । लोहकारः व्योकारः लुहार इति प्रसिद्धः । व्योकारो लोहकारकः । इत्यमरः । दक्षिणतः दक्षिणस्यां दिशि सिंहासनात् । भूतभाषाविदः कवयः ततः परं भुजङ्गो विटः । गणिका वेश्या । प्लवकः सन्तरणोपजीवी, खड्गधारादिनर्त्तको वा चाण्डालो वा इति शब्दकल्पद्रुमः । शौभिकः ऐन्द्रजालिकः । शौभिकस्त्वैन्द्रजालिकः । इति कोषः । जम्भकः दन्तोपजीवी । दन्ताजीवो जम्भकः स्यादिति कोषः । मल्लः प्रसिद्धः। शस्त्रोपजीविनः असिधावकप्रभृतयः ॥

एवमुपदर्शितरीत्या सभास्वरूपं निर्दिश्य सभाकार्यं प्रस्तौति । तत्रेति । तत्र सभायां यथासुखमासीनः स्थितः काव्यगोष्ठीं साहित्यपरिषदं कारयेत् प्रवर्त्तयेत्, भावयेत् पुनः पुनरनुसंदध्यात् । परीक्षेत च समालोचयेच्च । वासुदेवप्रभृतीन् सर्वान् सभापतीन् दानेन मानेन सत्कारेण च अनुकुर्यात् अनुलोमान् विदध्यात । तुष्टाः प्रस-

देवसातवाहनशूद्रकसाहसाङ्कादीन्सकलान्सभापतीन्दानमानाभ्यामनुकुर्यात् । तुष्टपुष्टाश्चास्य सभ्या भवेयुः- स्थाने च परितोषिकं लभेरन् । लोकोत्तरस्य काव्यस्य च यथार्हा पूजा कवेर्वा । अन्तरान्तरा च काव्यगोष्ठीं शास्त्रवादाननुजानीयात् । मध्वपि नानवदंशं स्वदते । काव्यशास्त्रविरतौ विज्ञानिष्वभिरमेत । देशान्तरागतानां च विदुषामन्यद्वारा सङ्गं कारयेदौचित्याद्यावस्थिति पूजां च । वृत्तिकामांश्चोपजपेत् । सङ्गृह्णीयाच्च । पुरुषरत्नानामेक एव राजोदन्वान्भाजनम् । राजचरितं च राजोपजीविनोऽप्यनुकुर्युः । राज्ञ एव ह्यसावुपकारो यद्राजोपजीविनां संस्कारः ।

महाननागरेषु च काव्यशास्त्रपरीक्षार्थं ब्रह्मसभाः कारयेत् । तत्र परीक्षो-

---

ष्टाः पुष्टाः समृद्धाः अस्य राज्ञः सभ्याः सदस्याः स्युः स्थाने च समये च पारितोषिकं परितोषजनकं द्रव्यं लभेरन् लोकोत्तरस्य अलौकिकस्य काव्यस्य कवितायाः कवे र्वा यथार्हा यथायोग्या पूजा अर्चा कर्त्तव्या । अन्तरा २ मध्ये २ काव्यगोष्ठीं साहित्य परिषदं शास्त्रवादान् शास्त्रचर्चाः अनुजानीयात तत्कृतेऽनुज्ञां दद्यात् ।

ननु—

प्रस्यन्दते यदि मधुद्रवमुक्तिगोष्ठी (काव्यगोष्ठी)
स्त्रक्सौमनस्यपि न पुष्यति सौमनस्यम्
तच्छास्त्रवादविषये तु कथैव केति
जिज्ञास्यपूरणकृते वदतीह(१)मध्वम् ।

मधु अपि मधुरमपि अनवदंशं रुचिजनकभक्षणं विना न स्वदते न स्वादु भवति । अतः काव्यविरतौ शास्त्रेऽभिरमेत । उभयविरतौ विज्ञानिषु वैज्ञानिकेषु सङ्गच्छेत् । देशान्तरेभ्यः आगतानां विदुषाम् । अन्यैः सङ्गं कारयेत् सम्पादयेत् । औचित्यात योग्यतया । यावती स्थितिः यावत्स्थिति । यावदवधारणे इत्यव्ययीभावः अर्थात् स्वभवने तान् उपवेशयेत् । पूजां च कारयेत् । वृत्तिकामान् उपजपेत् अन्यराजा अपिणास्तान् स्वाश्रस्थातुं प्रेरयेत् । संगृह्णीयात् स्वाश्रये स्थापयेत् । पुरुषा एव रत्नानि तेषाम् । एकं केवलं । राजा एव उदन्वान् राजोदन्वान् राजसमुद्रः एव भाजनं पात्रम् । राजचरितं नृपतिवृत्तं राजोपजीविनः राजाश्रयिणः अपि अनुकुर्युः तथैव आचरेयुः । राजोपजीविनामनुकरणं प्रशंसति—राज्ञ एवेति । यदयं राजोपजीविनां संस्कारः परिशुद्धिः असौ राज्ञो नृपतेरेव उपकारो लाभः ।

महानगरेषु वाराणसीसदृशेषु जनपदेषु काव्यपरीक्षार्थं शास्त्रपरीक्षार्थं च ब्रह्मस-

---

(१) मध्वमिति मध्वपीत्यस्य एकदेशमनुकृत्य कृतमिति बोध्यम् ।

त्तीर्णानां ब्रह्मरथयानं पट्टबन्धश्च। श्रूयते चोज्जयिन्यां काव्यकारपरीक्षा—

"इह कालिदासमेण्ठावत्रामररूपसूरभारवयः।
हरिचन्द्रचन्द्रगुप्तौ परीक्षिताविह विशालायाम्॥"

श्रूयते च पाटलिपुत्रे शास्त्रकारपरीक्षा—

"अत्रोपवर्षवर्षाविह पाणिनिपिङ्गलाविह व्याडिः।
वररुचिपतञ्जली इह परीक्षिताः ख्यातिमुपजग्मुः॥"

इत्थं सभापतिर्भूत्वा यः काव्यानि परीक्षते।
यशस्तस्य जगद्व्यापि स सुखी तत्र तत्र च॥

॥ इतिराजशेखरकृतौ काव्यमीमांसायां कविरहस्ये प्रथमेऽधिकरणे
कविचर्या राजचर्या च दशमोऽध्यायः॥

---

भाः ब्राह्मणानां गोष्ठीः कारयेत्। इदानीं तु प्रायः सर्वत्र भारते विदेशीयानां अज्ञात-भारतीयसमाचराणामाङ्ग्लानामनुकरणतत्परा अधिकारिणः पण्डिताश्च अवसरनियमेन एकदैव परीक्षां कारयन्ति सर्वेषां सहस्रावधिछात्राणां पण्डितानां च। अस्तु श्रूयते गायकवाडवडौदा-प्रान्ते सभास्थाः पण्डिता साक्षाद्भूताः परीक्षन्ते छात्रान्। तत्र ब्रह्मसभायां परीक्षोत्तीर्णानां परीक्षायामुत्कृष्टानां कृते ब्रह्मरथेन यानम्। पट्टस्य परीक्षोत्तीर्णतासूचकराजादिशासनमय क्षौमदुकूलस्य बन्धो धारणम्। श्रूयत इति। उज्जयिन्यामवन्तीदेशीयनगर्यां काव्यकाराणां कवीनां परीक्षा।

इहेति। निगदव्याख्यातम्। विशाला उज्जयिनी।

पाटलिपुत्रे इदानी "पटना" इति प्रसिद्धे नगरे शास्त्रकाराणां शास्त्रप्रणेतॄणां परीक्षा। अत्रेति। निगदव्याख्यातम्।

मन्यते परीक्ष्यापि ज्ञायते च अत्रत्यः कियानपि स्वल्पः पाठः एकादशेऽध्याये ग्रन्थस्य जीर्णत्वहेतुकास्तव्यस्तया मुद्रापितः स्यादिति।

संहरति इत्थमिति यो राजा इत्थं पूर्वोक्तप्रकारेण सभापतिः समितेः प्रधानाधिकारी भूत्वा काव्यानि परीक्षते आलोचयति। तस्य राज्ञो यशो जगद्व्यापि। तथा स सर्वत्र सुखी भवति।

इति साहित्याचार्याहिताग्निश्रीमधुसूदनशास्त्रिणः कृतौ मधुसूदनीविवृतौ
दशमोऽध्यायः समाप्तः।

## एकादशोऽध्यायः

# शब्दार्थहरणोपायाः कविविशेषाः ।

## तत्र शब्दहरणोपायाः ।

परप्रयुक्तयोः शब्दार्थयोरुपनिबन्धो हरणम् । तद्द्विधा परित्याज्यमनुग्राह्यं च । तयोः शब्दहरणमेव तावत्पञ्चधा पदतः, पादतः, अर्द्धतः, वृत्ततः, प्रबन्धतश्च । "तत्रैकपदहरणं न दोषाय" इति आचार्याः । "अन्यत्र द्व्यर्थप-

---

॥ श्रीः ॥

नत्वा श्रीसंकटापादं शब्दार्थहरणे वृतिम् ।
वक्ष्ये कविविशेषान् प्राक कथ्यते शब्दहारणम् ॥

अथातः सामान्यतः काव्यरचनाशैलीं समुपदिदिक्षुः । प्रायः प्रवृत्तवचनः पौरस्त्यानां प्राचां मध्ये अन्यतमस्य कस्यचित्कवेः छायां पद्यप्रतिकृतिं गृहीत्वा काव्यरचनाभ्यासं करोति स सेविता" इत्युक्तलक्षणः कविः कथं परप्रतिकृतिं गृह्णीयादिति मिषेण अध्यायमुपक्रमते । यस्येदमाद्यं सूत्रमेकादशद्वादशत्रयोदशाध्यायत्रयोपात्त विषयोपसंग्राहकं शब्दार्थहरणोपायाः । द्वितीयं च सूत्रं कविविशेषाः । शब्दश्च अर्थश्चेति शब्दार्थौ । तयोर्हरणम् । तस्योपाया अस्माभिर्निर्देष्टव्याः । तथा शब्दार्थोपहारकस्य: सेवितुः कवेः विशेषा भेदाश्च निर्देष्टव्याः । तत्र एकादशाध्याये शब्दहरणस्य उपाया वक्तव्याः । ननु शब्दार्थ हरणोपाया इति सूत्रे कस्तावद्धरणशब्दार्थः इत्याकांक्षायां हरणशब्दं व्याख्याति—परप्रयुक्तेति । परेण प्रयुक्तौ यौ शब्दार्थौ । तयोः स्वकाव्य उपनिवन्धः उपनिवेशः ग्रहणमिति यावत् हरणम् । तद्धरणं द्विधा द्विप्रकारः। एकं हरणमेतादृशं यत् परित्याज्यम् अग्राह्यम् भवति, द्वितीयं च अनुग्राह्यं स्वीकर्त्तव्यम् अर्थादनुमोदयितुं शक्यम् । तयोरिति तयोः शब्दार्थयोर्मध्ये शब्दहरणमेव पदहरणेन, पादहरणेन, श्लोकार्द्धहरणेन छन्दोहरणेन, सम्पूर्णश्लोकहरणेन च तावदादौ पंचप्रकारम् ।

कविकण्ठाभरणेतु हरणविषये इत्थमुक्तं —

छायोपजीवी पदकोपजीवो पादोजीवी सकलोपजीवी ।
भवेदथ प्राप्तकवित्वजीवी स्वोन्मेषतो वा भुवनोपजीव्यः ॥ इति ।

अत्र अचार्याणां सम्मतिं प्रकटीकरोति—तत्रेति । तत्र हरणोपायेषु एकस्य पदस्य हरणं न दोषाय ।

आचार्योक्ते किंचिद् विप्रतिपत्या स्वानुकूलतां दर्शयति-अन्यत्रेति । द्वौ अर्थौ यस्य

दात्" इति यायावरीयः। तत्र श्लिष्टस्य श्लिष्टपदेन हरणम्—

"दूराकृष्टशिलीमुखव्यतिकरान्नो किं किरातानिमा-
नाराद्व्यावृतपीतलोहितमुखान्किं वा पलाशानपि।
पान्थाः केसरिणं न पश्यत पुरोप्येनं वसन्तं वने
मूढा रक्षत जीवितानि शरणं यात प्रियां देवताम् ॥"

---

तद् द्व्यर्थम्। द्व्यर्थं च तत्पदं द्व्यर्थपदम्। तस्मात् द्व्यर्थपदादन्यत्र अर्थात् द्व्यर्थं पदं परित्यज्य एकपदहरणं न दोषाय द्व्यर्थपदहरणे तु दोष एव। इति यायावरीयो ग्रन्थकारः।

उदाहरति-तत्रेति। तत्र शब्दहरणेषु श्लिष्टस्य पदस्य। जातित्वादेकवचनमतो वक्ष्यमाणोदाहरणे शिलीमुखकिरातपदयोर्द्वयोर्हरणमपि संगच्छते। श्लिष्टपदद्वारा हरणं यथा—

दूराकृष्टेति। हे पान्थाः पथिका दूरत आकृष्टः शिलीमुखानामलीनां वाणानां च। "अलिवाणौ शिलीमुखौ" इत्यमरः। व्यतिकरः समूहो यैस्तान्। इमान् सन्निकृष्टान्। इदमस्तु सन्निकृष्टे समीपतरवर्त्ति चैतदो रूपम्। इति कोषः। किरातान् भूनिम्बतरून् म्लेच्छभेदांश्च।

किरातो म्लेच्छभेदे स्याद्भूनिम्बेऽल्पतनावपि।
स्त्रियां चामरवाहिन्यां कुट्टनीदुर्गयोरपि। इति मेदिनी॥

किं ? नो पश्यत। किं वा आरात् समीपे। आराद्दूर समीपयोरित्यमरः। व्यावृतानि प्रकटीकृतानि पीतानि लोहितानि मुखानि यैस्तान् पलाशान् किंशुकान् राक्षसांश्च।

पलाशः किंशुकः शटी—
हरिद्वर्णो राक्षसश्च पलाशं छदने मतम्। इति मेदिनी।

किं ?नो पश्यत। पुरोपि अग्रेपि वनेऽरण्ये वसन्तं स्थितम्। एनं समीपतरवर्त्तिनं केसरिणं नागकेशरं सिंहं च।

केसरी तुरगे सिंहे पुंनागे नागकेसरे इति मेदिनी।

नो पश्यत। हे मूढाः ? हे मूर्खाः जीवितानि प्राणानि रक्षत प्रियां वल्लभारूपां देवताम्, अन्यत्र इष्टदेवतां शरणं यात रक्षित्रीं प्रापयत। एवं कामोद्दीपके अथच किरातादिभिर्भयावहे काले जीवितार्थिभिर्भवद्भिर्नात्र चिरं स्थेयम्, किन्तु स्वीयामिष्टां देवतामाश्रयत शरणतया रक्षत चायमात्मेति भावः।

अस्मिन् पद्ये शिलीमुख-किरात-पलाश-केसरि-पदानि श्लिष्टानि। तेषु शिलीमुखकिरातपदयोः हरणं कृत्वा केनचित् कविना मागा इति पद्यं विनिर्मितम्। यथा-

यथा च—"मा गाः पान्थ प्रियां त्यक्त्वा दूराकृष्टशिलीमुखम्।
स्थितं पन्थानमावृत्य किं किरातं न पश्यसि॥"

श्लिष्टपदैकदेशेन हरणम्—

"नाश्चर्यं यदनार्याप्तावस्तप्रीतिरयं मयि।
मांसोपयोगं कुर्वीत कथं क्षुद्रहितो जनः॥"

यथा च—"कोपान्मानिनि किं स्फुरत्यतितरां शोभाधरस्तेऽधरः
किं वा चुम्बनकारणाद्दयित नो वायोर्विकारादयम्।
तस्मात्सुभ्रु सुगन्धिमाहितरसं स्निग्धं भजस्वादरा-
न्मुग्धे मांसरसं ब्रुवन्निति तया गाढं समालिङ्गितः॥"

---

चेति तदुद्धृतपदकं पद्यं दर्शयति। मागा इति। हे पान्थ? पथिक? प्रियां वल्लभां त्यक्त्वा मा गाः मा गच्छ। भोः कथं निषेधयसि इत्यत आह—दूरेति। दूरात् आकृष्टाः शिलीमुखाः अलयः वाणाश्च येन तम्। पन्थानं मार्गमावृत्य अवरुद्ध्य स्थितं किरातं किंशुकं पक्षे राक्षसं च किं न पश्यसि।

एवं कामोद्दीपके अथ च लुब्धकाक्रान्तमार्गे समये प्रियां देवीं विहाय कथं ते रोचते मनसि गन्तुम्। इति भावः।

श्लिष्टेति। श्लिष्टस्येति पदमनुषञ्जनीयम् श्लिष्टो यः पदैकदेशस्तेन हरणम्।

नाश्चर्यमिति। यदयं जनः। अनार्येण दुष्टेनाप्तौ सङ्गते सति मयि आर्ये अस्तप्रीतिः गतप्रेमाऽजनि। इत्यत्र आश्चर्यं न वर्त्तते इति शेषः। आश्चर्यकारणाभावं श्लेषजन्यदृष्टान्तमुखेन दर्शयति—सेति। यत इत्यध्याहृत्य वाक्यं पूरणीयम्। यतः क्षुद्राणां हितो हितकरो जनः मा माम् उत्कृष्टं सोपयोगं कार्यान्वितं कथं कुर्वीत—पक्षे क्षुधा रहितो जनः मांसस्य उपयोगं साङ्गत्यं कथं कुर्वीत। यथा क्षुधा रहितो जनः। मांसस्य उपयोगं न करोति तथा क्षुद्रहितो जनः उत्कृष्टं जनं सोपयोगं न करोति। इति भावः।

अत्रत्यमांसोपयोगेति पदस्य एकदेशं मांस—इति हृत्वा काव्यकरणं यथा—कोपादिति। हे मानिनि? कोपने? अयं शोभां धरतीति शोभाधरः सुन्दरस्तेऽधरः किं कोपाद्धेतोरतितरामत्यन्तं स्फुरति। किम्बा चुम्बनकारणात् अतितरां स्फुरति। एवं नायकेन पृष्टे नायिकोत्तरति—दयितेति। हे दयित? वल्लभ? भवता यथोच्यते तथा न किन्तु वायोः पवनस्य विकारात् स्फुरति। पुनर्नायको वदति तस्मादिति। तस्मात्कारणात् हे सुभ्रु? हे मुग्धे? हे वाले? सुगन्धिम् शोभनो गन्ध आमोदो

श्लिष्टस्य यमकेन हरणम्—

"हलमपारपयोनिधिविस्तृतं प्रहरता हलिना समराङ्गणे।
निजयशश्च शशाङ्ककलामलं निरवधीरितमाकुलमासुरम्॥"

यथा च—"दलयता विशिखैर्बलमुन्मदं निरवधीरितमाकुलमासुरम्।
दशसु दिक्षु च तेन यशः सितं निरवधीरितमाकुलमासुरम्॥"

श्लिष्टस्य प्रश्नोत्तरेण हरणम्—

"यस्यां भुजङ्गवर्गः कर्णायतेक्षणं कामिनीववदनं च॥"

---

यस्मिँस्तं। गन्धो गन्धक आमोदे लेशे सम्बन्धगर्वयोरिति कोशः आमोदो हर्षगन्धयोरिति च मेदिनी। सानन्दमित्यर्थः। आहितः कृतो रसः शृंगारो येन तम्। स्निग्धं प्रेयसं सरसं सरागं माम्।

रसो गन्धरसे स्वादे तिक्तादौ विषरागयोः।
शृङ्गारादौ द्र वेवीर्यं देहधात्वम्बुपारदे॥
रसा तु शल्लकी पाठजिह्वाधरणिकङ्गुषु। इति विश्वः।

पक्षे सुगन्धिम् घ्राणतर्पणम्। सुरभिर्घ्राणतर्पणम्। इष्टगन्धः सुगन्धिः स्यादित्यमरः। आहितरसं सस्वादं स्निग्धं वृष्यं मांसरसम्। आदरात् प्रेम्णा भजस्वेति ब्रुवन् दयितया गाढं सान्द्रं समालिङ्गितः।

श्लिष्टस्येति। श्लिष्टस्य द्व्यर्थस्य पादस्य यमकेन यमकालङ्कारद्वारा हरणम्। हलमिति। अपरश्चासौ पयोनिधिस्तद्वत् विस्तृतं प्रसृतं हलम्। समराङ्गणे युद्धभूमौ प्रहरता मारयता हलिना बलरामेण आकुलं व्यग्रम्, आसुरं असुरसम्बन्धि बलम् निरवधि अवधिरहितं यथा स्यात्तथा ईरितं कम्पितम्। तथा शशांकश्चन्द्रस्तस्य कलावदमलं शुभ्रं निरवधि विपुलं निजं यशश्च आकुलं कुलाचलपर्यन्तं भूम्याम्। दिवि च आसुरं लक्षणाया सुरलोकपर्यन्तम्। ईरितम् प्रेरितम् प्रापितम्। इत्यर्थः।

दलयतेति। विशिखैः वाणै र्दलयता तेन विष्णुना उन्मदं सगर्वम्। आकुलम्। कुलमभिव्याप्य कुलसहितं व्यग्रं वा आसुरमसुराणां सम्बन्धि वलं सैन्यं निरवधि अवधिरहितं यथास्यात्तथा ईरितं कम्पितम्। तथा तेन दशसु दिक्षु सितं शुभ्रं निरवधि विपुलं यशश्च आकुलं कुचाचलपर्यन्तम्। आसरं सुरलोकपर्यन्तमीरितं प्राप्तितम्। अत्र पूर्वश्लोकीयः श्लिष्टः निरवधीत्यादिकः पादः उपहृत्य यमकालङ्कारविधया नियोजितः।

श्लिष्टस्येति। श्लिष्टस्य पदस्य प्रश्नोत्तरविधया उपनिवेशः।

यस्यामिति। यस्यां पुर्यां भुजङ्गवर्गः क्षणं मुहूर्त्तं कर्णायते कर्णवदाचरति दानी

यथा च—

"किं करोति कियत्कालं वेश्यावेश्मनि कामुकः ।
कीदृशं वदनं वीक्ष्य तस्याः कर्णायतेक्षणम् ॥"

यमकस्य यमकेन हरणम्—

"वरदाय नमो हरये पतति जनोऽयं स्मरन्नपि न मोहरये ।
बहुशश्चक्रन्द हता मनसि दितिर्येन दैत्यचक्रं दहता ॥"

यथा च—

चक्रं दहतारं चक्रन्द हतारं खड्गेन तवाजौ राजन्नरिनारी ।

एवमन्योन्यसमन्वयेऽन्येऽपि भेदाः । नन्विदमुपदेश्यमेव न भवति ॥

---

भवतीत्यर्थः । कामिनीवदनं नायिकामुखं च कर्णायतेक्षणं कर्णपर्यन्तमायते विस्तृते ईक्षणे नेत्रे यस्मिंस्तत् ।

किं करोतीति । कामुकः लम्पटः वेश्यावेश्मनि वेश्यागृहे तस्याः वेश्यायाः कीदृशं वदनं मुखं वीक्ष्य कियत्कालं किं करोति । इति प्रश्नः । तस्योत्तरम् । कर्णायतेक्षणम् । अर्थश्च प्राग्वत् ।

अत्र पूर्वपद्यीयं कर्णायतेक्षणमिति द्व्यर्थकं पदं प्रश्नोत्तरप्रकारेण उपनिवेशितम् ।

यमकस्य यमकालङ्कारजनकस्य पदस्य तथैव हरणम् ।

वरदायेति । वरदाय अभीष्टदात्रे हरये विष्णवे नमः । यं स्मरन्नपि किमुत साक्षात्कुर्वन् जनः । मोहरये मोहवेगे न पतति । दैत्यानां चक्रं मण्डलं दहता दग्धं कुर्वता येन विष्णुना मनसि हता दितिः दैत्यजननी बहुशो बहुप्रकारं चक्रन्द रुरोद ।

चक्रमिति । हे राजन् ? आजौ युद्धे आरं शात्रवं चक्रं मण्डलं दहता तव खड्गेन हता अरिनारी अरमलं रलयोरभेदात् । चक्रन्द रुरोद ।

अत्र प्रथमपद्यीयं चक्रन्दहतेति पदद्वयं यमकालङ्कारबीजभूतं तथैव आरम्, अरमिति कुर्वन् निविवेशयांचक्रे ।

एवमुपदर्शितभिदानामन्योन्यं परस्परं समन्वये क्रियमाणे अन्येपि दर्शितव्यतिरिक्ता अपि भेदाः सम्भवन्ति । तद्यथा-पदपादयोः, पदार्द्धयोः पदवृत्तयोः, पदप्रबन्धयोः पदार्धयोः, पादवृत्तयोः, पादप्रबन्धयोः, अर्द्धवृत्तयोः अर्द्धप्रबन्धयोः हरणेन । उदाहरणानि तु ग्रन्थविस्तरभिया नोदाह्रियन्ते सुधीभिरन्वेषकैर्जिज्ञासुभिर्वा स्वयमन्विष्य बोध्यानि ।

ननु इदं वर्त्म उपदेष्टुमेव योग्यं नास्ति यद्यस्मात् जना इत्थं कथयन्ति ब्रुवन्ति । पुंस इति । कालस्य समयस्य अतिपातेन अतिक्रमणेन अन्यद् वस्त्वादिविषयकं

यदित्थं कथयन्ति—

"पुंसः कालातिपातेन चौर्यमन्यद्विशीर्यति ।
अपि पुत्रेषु पौत्रेषु वाक्चौर्यं च न शीर्यति ॥"

"अयमप्रसिद्धः प्रसिद्धिमानहम्, अयमप्रतिष्ठः प्रतिष्ठावानहम्, अप्रक्रान्तमिदमस्य सम्विधानकं प्रक्रान्तं मम, गुडूचीवचनोऽयं मृद्वीकावचनोऽहम्, अनादृतभाषाविशेषोऽयमहमादृतभाषाविशेषः, प्रशान्तज्ञातृकमिदं, देशान्तरितकर्त्तृकमिदम्, उच्छन्ननिबन्धनमूलमिदं, म्लेच्छितकोपनिबन्धमूलमिदमित्येवमादिभिः कारणैः शब्दहरणेऽर्थहरणे चाभिरमेत" इति अवन्तिसुन्दरी।

चौर्यं शीर्यति जीर्यति । तु किन्तु वाक्चौर्यं पुत्रेषु पौत्रेष्वपि न शीर्यति शीर्णतामेति।

इदं पूर्वोक्तं हरणविषयकं वर्त्मापि उपदेश्यं भवति अतः हरणीयमिति भावेन अवन्तिसुन्दरी चौहाणवंशोद्भवा राजशेखरस्य ग्रन्थकर्त्तुः प्रेयसी समर्थयति—अयमिति । इत्येवमादिभिः कारणैः हेतुभिः शब्दस्य हरणे अर्थस्य हरणे च अभिरमेत मनो निदध्यात्। इतीति किम्। अयं यस्यैतद्धरणीयपदपादादिकं काव्यं वर्त्तते स कविरप्रसिद्धः । भुवि अस्य विश्रुतिर्नास्ति अहं च अतिविश्रुतः । यद्यहं हरेयं तर्हि सति सम्वादे प्रसिद्धेः मामकीनमेव तत्पदादिकं जनाः कथयेयुः प्रत्युत तमेव निन्दयेयुरतः प्रसिद्धिमता पुरुषेण अप्रसिद्धस्य कवेः पदादीनां हरणे कृतेऽपि न दोषावहमिति भावः । अयमप्रतिष्ठः अयं कविरनास्पदः, अहं च प्रतिष्ठावान् । अयं भावः । मम च दैनंदिनसाप्ताहिकमासिकपत्रिकाप्रभृतीनि कविताप्रकाशनसाधनानि आस्पदानि वर्त्तन्ते, अस्य च नैतानि । एवं च एतत्कृतकाव्यात् पदानि अपहृत्य पूर्वं प्रकाश्येत मया तर्हि सर्वे जना पश्चात्प्रकाशितेऽपि तेन मामकीनमेव पदादिकं कथयेयुरिति बुद्ध्या हरणं न दोषायेति। अनयोर्वाक्ययोः भावान्तरं चेत् सुधीभिर्विवेचनीयम् । अस्य कवेरिदं संविधानकं नाटकादिकमप्रक्रान्तमप्रचलितं मम च प्रचलितमिति हृतेऽपि न दूषणम्। गुडूचीवत् वचनं यस्यासौ गुडूचीवचनः मृद्वीकावत् द्राक्षावत् वचनं यस्यासौ मृद्वीकावचनः । अस्य काव्ये गुडूची पाकः । मत्काव्ये मृद्वीकापाकः अतः पाकभेदेनापि हरणं न लक्षितं भविष्यति यदनेनास्यापहरणं कृतमिति । न आदृतो भाषाविशेषो येनासौ अनादृतभाषाविशेषः। आदृतः स्वीकृतः भाषाविशेषो येनासौ आदृतभाषाविशेषः। अर्थात् अयं भाषान्तरे कवते अहं च भाषान्तरे कवामि। अतोनूदितेऽपि न दोषः । यथा श्रीमद्भगवता तुलसीदासेन वाल्मिकीरामायणादीनां भावार्थंनुपगृह्य हिन्द्यां रामायणं लिखितम् । इदं तु बोध्यं भाषान्तरकवितायां भावस्यैव अपहरणं भवति न तु पदादेः। प्रशान्ता मृताः ज्ञातारो यस्य तत् प्रशान्तज्ञातृकम्, इदं काव्यम् । यद्यहमपहरेयमपि तदपि ज्ञात्रभावान्न दोषः । देशान्तरितः अन्यदेशे स्थितः

"त्रिभ्यः पदेभ्यः प्रभृति त्वश्लिष्टेभ्यो हरणम्" इति आचार्याः—
यथा—"स पातु वो यस्य जटाकलापे स्थितः शशाङ्कः स्फुटहारगौरः।
नीलोत्पलानामिव नालपुंजे निद्रायमाणः शरदीव हंसः॥"
यथा च—
"स पातु वो यस्य हतावशेषास्तत्तुल्यवर्णाञ्जनरञ्जितेषु।
लावण्ययुक्तेष्वपि वित्रसन्ति दैत्याः स्वकान्तानयनोत्पलेषु॥"

"न" इति यायावरीयः। उल्लेखवान्पदसन्दर्भः परिहरणीयो न प्रत्यभिज्ञायातः पादोऽपि। तस्यापि साम्ये न किञ्चन दुष्टं स्यात्।

---

कर्त्ता यस्य तत् देशान्तरितकर्तृकम् इदं काव्यम्। कर्त्तरि देशान्तरिते ज्ञातरि च देशान्तरस्थिते अस्मद्देशे न तज्ज्ञाता न तत्कर्त्ता अतोपि अपहरणे न दोषः। उच्छन्नमुत्सन्नं विशीर्णं यन्निवन्धनं काव्यं तन्मूलं तत्कारणमिदं काव्यम् मदीयम्। उत्सन्नकाव्यस्य पदादिकं भावं वा अपहृत्य कृतेऽपि काव्ये विसम्वादान्न दोषायेति भावः। म्लेच्छितैकरूपं निवन्धनं रचनं यस्य काव्यस्य तन्म्लेच्छितकोपनिवन्धनम् तन्मूलं यस्य तन्म्लेच्छितकोपनिवन्धनमूलम्।

स पात्विति। स शिवः वो युष्मान् पातु रक्षतु। यस्य शिवस्य जटाकलापे जटाजूटे स्थितो वर्त्तमानः स्फुटहारवत् शुभ्रहारवत् गौरः सितः। अवदातः सितो गौरः इत्यमरः। शशांकश्चन्द्रः। इव उत्प्रेक्षायाम्। शरदि शरदृतौ नीलोत्पलानां नीलकमलानां नालपुञ्जे निद्रायमाणः हंस इव विभाति। अत्रत्यां "स पातु वो यस्य" इति चतुष्पदीमपहृत्य काव्यविरचनं यथा—

स पात्विति। स विष्णुः वो युष्मान् पातु रक्षतु। यस्य विष्णोः हतावशेषा मारणावशिष्टाः दैत्या असुराः। तेन तुल्यः। तत्तुल्यः तत्तुल्यो वर्णो यस्य तत्। तत्तुल्यवर्णम्। तत्तुल्यवर्णं यदञ्जनं तेन रञ्जितेषु लावण्येन युक्तेष्वपि स्वकान्तानां नयनान्येव उत्पलानि तेषु वित्रसन्ति विभ्यति। यादृशोऽञ्जनवर्णस्तादृशोः विष्णुवर्णः। इति अञ्जनवर्णं दृष्ट्वा विष्णोःस्मरणात भीता भवन्ति इति भावः।

नेति आचार्यैर्युदुक्तं तन्न इति ग्रन्थकारः। यतः उल्लेखवान् प्रतिभानवान् यस्याविष्करणे प्रतिभायाः क्षया भवति स पदसन्दर्भः पदसमुदायः परिहरणीयः। यस्य पदसन्दर्भस्य प्रादुर्भावकरणे अन्येन स्वप्रतिभा व्ययीकृया स तु परित्याज्यः न स्वीकर्त्तव्य इति भावः। प्रत्यभिज्ञायातः स एवायमिति प्रत्यभिज्ञया यातः प्राप्तः पादोपि न परिहरणीयः तं न परिहरेत् स्वीकुर्यादेव। तस्य प्रत्यभिज्ञाप्राप्तस्य किन्तु उल्लेखवत्ताशून्यस्य पादस्य साम्येऽपि सादृश्येऽपि न किमपि दुष्टं स्यात्। अत्र मुद्रितपुस्तके नाप्रत्यभिज्ञायात इति अकारघटितः पाठोऽपपाठः। तथा साम्येनेति तृतीयान्ततया

यथा--"इत्युक्तवानुक्तिविशेषरम्यं मनः समाधाय जयोपपत्तौ ।
उदारचेता गिरमित्युदारां द्वैपायनेनाभिदधे नरेन्द्रः ॥"

यथा च—
"इत्युक्तवानुक्तिविशेषरम्यं रामानुजन्मा विरराम मानी ।
संक्षिप्तमाप्तावसरं च वाक्यं सेवाविधिज्ञैः पुरतः प्रभूणाम् ॥"

उल्लेखवान्यथा—"नमः संसारनिर्वाणविषामृतविधायिने ।
सप्तलोकोर्मिभङ्गाय शङ्करक्षीरसिन्धवे ॥

---

भ्रान्तः पाठः । साम्येइति सप्तम्यन्तः पाठस्तथा न इति निषेधार्थको नकारः पृथक् ।

यथा इत्युक्तवानिति । इतीत्थमुक्तिविशेषरम्यम् उक्तिवैचित्र्यचारु यथास्यात्तथा उक्तवान् उदारं चेतो यस्यासौ महामनाः । उदारो दातृमहतोरित्यमरः । नरेन्द्रो युधिष्ठिरः द्वैपायनेन व्यासेन । द्विर्गता आपो यस्मिंस्तद् द्वीपमयनं स्थानं यस्य स द्वीपायनः द्वीपायन एव द्वैपायनः । प्रज्ञादित्वात्स्वार्थेऽण । तेन । जयोपपत्तौ मनः समाधाय जयासिद्धिमपेक्ष्य इतिवक्ष्यमाणप्रकारामुदारामर्थवतीं गिरं वाणीमभिदधे उवाच । अस्मिन् किरातीये पद्ये—

सवेगवान् वेगसमाहितात्मा हरिप्रवीरः परवीरहन्ता
मनः समाधाय जयोपपत्तौ जगाम लङ्कां मनसा हनूमान्

इति वाल्मीकीयपद्यगतं तृतीयपादं कविना स्वतः प्राप्तमुपनिबद्धम् । किरातीयं च "इत्युक्तवानुक्तिविशेषरम्यम्" इति पादं स्वतः प्राप्तमुररीकृत्य श्लोकान्तरविरचनं यथा-

इत्युक्तवानिति । इतीत्थमुक्तिविशेषरम्यम् कथनविच्छित्तिसुन्दरं यथा स्यात्तथा उक्तवान् मानी दर्पी । मानो दर्पोऽहंकार इत्यमरः । रामस्यानुजन्मा लक्ष्मणः विरराम विरतो बभूव । यतोहि सेवाया विधिमनुष्ठानं जानन्ति तैः पुरुषैः प्रभूणां स्वामिनां पुरतः संक्षिप्तं समस्तम् । आप्तावसरं प्राप्तसमयं वाक्यं वचनं वक्तव्यम् । अयं भावः । इत्युक्तवानित्येतादृशं वाक्यं यः कोपि साधारणः पुरुषः रचयितुं शक्नोति अत एतादृशस्य साम्येपि न काचिद्दुष्टिरुद्भाव्या ।

यस्य साम्ये दोषस्तदुल्लेखवत्पदसन्दर्भस्थलं दर्शयति—नम इति । संसारश्च निर्वाणश्च संसारनिर्वाणौ जगन्मोक्षौ । तौ एव विषाऽमृते । तयोर्विधायिने कर्त्रे । सप्त च ते लोकास्त एव ऊर्मयः । सप्तलोकोर्मय एव भङ्गा विच्छित्तयो यस्मिन् तस्मै। सप्तलोकोर्मिनिर्माणजन्यं सौन्दर्यं शंकरे समुद्रे च वर्त्तते । भङ्गस्तरङ्गे भेदे च रुग्विशेषे पराजये कौटिल्ये भयविच्छित्त्योरिति हैमः । शंकररूपिणे क्षीरसिन्धवे क्षीरसागराय नमः ।

अत्र "शंकरक्षीरसिन्धवे" इति पदं प्रतिभाप्रसूतम् । न तु सामान्यजनमनीषासंघटितम् । तथाहि—शंकरस्य क्षीरसमुद्रत्वं तदैव स्यात् यदा तस्य विषामृतयोर्विधाय-

यथा च—"प्रसरद्विन्दुनादाय शुद्धामृतमयात्मने ।
नमोऽनन्तप्रकाशाय शङ्करक्षीरसिन्धवे ॥

"पाद एवान्यथात्वकरणकारणं न हरणम्, अपि तु स्वीकरणम्" इति आचार्याः ।

यथा—"त्यागाधिकाः स्वर्गमुपाश्रयन्ते त्यागेन हीना नरकं व्रजन्ति ।
न त्यागिनां किञ्चिदसाध्यमस्ति त्यागो हि सर्वव्यसनानि हन्ति ॥"

---

कत्वं स्यात् । अतस्तत्सिद्धये समस्तवस्तुविषयरूपकालंकारविधया संसारनिर्वाणौ एव विषामृतत्वेन कल्पितौ । शंकरो रुष्टः सन् संसाराभिन्नं विषं ददाति । तुष्टः सन् निर्वाणाभिन्नममृतं ददाति । तथा सप्तलोकोर्मिभङ्गायेत्यत्रापि शंकरस्य सिन्धुत्वारोपे सप्तलोकानामूर्मित्वारोपो युज्यते । इति ।

अत्रत्यं "शङ्करक्षीरसिन्धवे" इत्युल्लेखवत्पदमुद्धृत्य श्लोकान्तरविरचनं यथा—प्रसरदिति । प्रसरन्तौ विन्दुनादौ एव जलकणध्वनी यत्र तस्मै । शुद्धामृतमयः-शुद्धपीयूषस्वरूपः आत्मा एव चक्षूरूपकलेवर एव शुभ्रजलरूपशरीरो यस्य तस्मै । अनन्तायाः पार्वत्याः प्रकाश एव साहित्येऽतिप्रसिद्धिरेव अनन्तस्य शेषस्य प्रकाशो यत्र तस्मै । शङ्कर एव क्षीरसिन्धुस्तस्मै नमः ।

पूर्वापरयोः पद्ययोरियान् विशेषः यत् पूर्वत्र समस्तवस्तुविषयं रूपकम् । उत्तरत्र परम्परितं रूपकम् ।

आत्मा चित्ते धृतौ यत्ने धिषणायां कलेवरे
परमात्मनि जीवेऽर्के हुताशनसमीरयोः ।

स्वभावे चेति मेदिनी कोशः ।

अनन्तः केशवः शेषे पुमाननवधौ त्रिषु
अनन्ता च विशल्यायां शारिवादूर्वयोरपि ।
कणा दुरालभा पथ्या पार्वत्यामलकीषु च
विष्वम्भरागुडूच्योः स्यादनन्तं सुरवर्त्मनि ॥ इति मेदिनी ।
प्रकाशोऽतिप्रसिद्धे स्यात्प्रहासातपयोः स्फुटे । इति विश्वः ।

पाद एवेति । पाद एव श्लोकपाद एव । यदीति शेषः । यदि अन्यथात्वस्य वैपरीत्यस्य करणे कारणं हेतुस्तर्हि तदन्यथा करणं न हरणं न हरणशब्दवाच्यम्, अपि तु स्वीकरणमनुग्राह्यम् । यथा

त्यागाधिका इति । त्यागाधिकाः दानेन गरीयांसः स्वर्गं सुरलोकमुपाश्रयन्ते प्राप्नुवन्ति अर्थात्तैः स्वर्गे स्थीयते । त्यागेन हीनाः दानमकुर्वन्तो नरकं निरयं व्रजन्ति गच्छन्ति । त्यागिनां दानिनां कृते किञ्चिदपि कार्यमसाध्यं दुष्करं नास्ति । हि यतः त्यागः सर्वव्यसनानि यावद्दुःखानि हन्ति निराकरोति ।

यथा च —"त्यागो हि सर्वव्यसनानि हन्तीत्यलीकमेतद्भुवि सम्प्रतीतम् ।
जातानि सर्वव्यसनानि तस्यास्त्यागेन मे मुग्धविलोचनायाः ॥"

तदिदं स्वीकरणापरनामधेयं हरणमेव ( इति यायावरीयः ) । तद्वदर्द्ध-प्रयोगेऽपि । यथा—

"पादस्ते नरवर दक्षिणे समुद्रे पादोऽन्यो हिमवति हेमकूटलग्ने ।
आक्रामत्यलघु महीतलं त्वयीत्थं भूपालाः प्रणतिमपास्य किन्नु कुर्युः ॥"

यथा चोत्तरार्द्धे—"इत्थं ते विघृतपदद्वयस्य राज-
न्नाश्चर्यं कथमिव सीवनी न भिन्ना ॥"

---

त्यागोहीति । त्यागोहि सर्वदुःखानि निराकरोति एतद्वृत्तं भुवि लोके अलीकमेव मृषा एव सम्प्रतीतम् प्रसिद्धम् । यतोहि तस्याः मुग्धविलोचनायाः सुन्दरनेत्रायास्त्यागेन दूरीकरणेन मे मम सर्वव्यसनानि जातानि ।

अत्र केवलं पूर्वश्लोकीयचतुर्थचरणमुपादाय पादत्रयस्य अन्यथाकरणेन श्लोकान्तरम् प्रणीतम् तेन नात्र कश्चिद्दोषावकाशः, एतादृशः स्वीकारो भवितुं शक्यः । भेदोप्यनयोर्महान् जातः पूर्वं पद्यं त्यागप्रशंसार्थकम् इदं च त्यागनिन्दार्थकमिति ।

अत्रार्थे स्वमतं प्रकाशयति–तदिदमिति । तदिदं कृत्यं नामान्तरतो हरणमेव इति यायावरीयः । अत्र यायावरीय इति पाठस्त्रुटितः प्रतीयते ।

तद्वदिति । तद्वत् पादवत् अर्द्धप्रयोगेपि श्लोकार्द्धस्य अन्यथात्वकरणेऽपि न हरणं अपि तु स्वीकरणम् । अथवा तद्वत् पादवत् अर्द्धप्रयोगेपि स्वीकरणापरनामधेयं स्वीकरणनामान्तरं हरणमेव परप्रयुक्तशब्दार्थोपनिबन्ध एव । यथा—

पादस्ते इति । हे नरवर ? हे राजन् ? ते तव एकः पादः दक्षिणे समुद्रे वर्त्तते । अन्यो द्वितीयः पादः हेमकूटपर्वतसंलग्ने हिमवति हिमाद्रौ वर्त्तते । इत्थं त्वयि भवति अलघु महीयो महीतलं भूतलमाक्रामति सति भूपालाः राजानः प्रणतिमपास्य त्यक्त्वा किं नु कुर्युः ।

उत्तरार्द्धमन्यथाकृत्य पठति—इत्थमिति । हे राजन् ? इत्थममुना प्रकारेण विधृतपदद्वयस्य परस्परभिन्नस्थाने निहितचरणद्वयस्य ते तव सीवनी स्यूतिः । सेवनं सीवनं स्यूतिरित्यमरः । स्त्रीत्वं तु टित्वप्रयुक्तं बोध्यम् । कथमिव न भिन्ना न त्रुटिता ।

अत्र पूर्वापरयोरियान् भेदः । पूर्वत्र पद्ये कर्त्तुराकुलत्वरूपं जाड्यं वर्त्तते । उत्तरत्र चित्तविस्ताररूपो विस्मयः ।

कर्त्तुराकुलता जाड्यमप्रतिपत्तिस्तथा मता । इति ।
विस्मयश्चित्तविस्तारो वस्तुमाहात्म्यदर्शनात् । इति ।

एवं व्यस्तार्द्धप्रयोगेऽपि। यथा—

"तत्तावदेव शशिनः स्फुरितं महीयो यावन्न तिग्मरुचिमण्डलमभ्युदेति।
अभ्युद्गते सकलधामनिधौ तु तस्मिन्निन्दोः सिताभ्रशकलस्य च को विशेषः॥"

यथा च—"तत्तावदेव शशिनः स्फुरितं महीयो
यावन्न किञ्चिदपि गौरितरा हसन्ति।
ताभिः पुनर्विहसिताननपङ्कजाभि-
रिन्दोः सिताभ्रशकलस्य च को विशेषः॥"

पाद एवान्यथात्वकरणं न स्वीकरणं पादोनहरणं वा। यथा—

"अरण्ये निर्जने रात्रावन्तर्वेश्मनि साहसे।
न्यासापह्नवने चैव दिव्या सम्भवति क्रिया॥"

---

एवमिति। एवं पूर्वोक्तवत् व्यस्तस्य विपरीतीकृतस्य अर्द्धस्य प्रयोगेऽपि ज्ञेयम्।

तत्तावदिति। तत्तस्मात् तावदेव तावत्कालमेव शशिनश्चन्द्रमसः स्फुरितं स्पन्दनं महीयः उदारवत् अर्थवदित्यर्थः। यावत्तिग्मरुचिः सूर्यस्तस्य मण्डलं न अभ्युदेति उदयं न गच्छति। सकलानां धाम्नां तेजसां निधौ तस्मिन् सूर्ये अभ्युदिते तु शशिनः सिताभ्रशकलस्य श्वेताभ्रकखण्डस्य च परस्परं को विशेषः। यथा सूर्यसन्निधाने सिताभ्रशकलं मन्दतेजः तथा शशिमण्डलमपि क्षीणप्रकाशमिति भावः।

अस्य श्लोकस्य मध्यमौ पादौ विपर्यस्य श्लोकान्तरं विरचयति—तत्तावदिति। तत्तावदेव शशिनः स्फुरितं महीयः, यावत् गौरितरा अतिशयगौरवर्णवत्यो नार्यः किमपि न हसन्ति। ताभिः पुनः ताभिर्यदा विहसिताननपङ्कजाभिर्भूयते। तर्हि इन्दोः सिताभ्रशकलस्य च को विशेषः। न किमप्याधिक्यं तयोरिति भावः।

अनयोः परस्परमियान् विशेषः। एकत्र वीरार्था उक्तिः इतरत्र श्रृंगारार्था उक्तिः।

पाद एवेति। यत्र पाद एव अन्यथात्वे विपर्यासे करणमसाधारणं कारणम्, तत्र न स्वीकरणं अपितु पादोनहरणम् एकपादहीनं सर्वश्लोकापहरणमेव इति। हीनन्यूनावूनगर्ह्यौ इत्यमरः। अत्र वाशब्द एवार्थकः। वा स्याद्विकल्पोपमयोरेवार्थे च समुच्चये। इति। अथवात्र वाशब्दो विकल्पार्थः तेन न स्वीककरणं न वा पादोनहरणम्।

अरण्य इति। अरण्ये वने निर्जने जनशून्ये रात्रौ निशायामन्तर्वेश्मनि मध्येगृहं साहसे सहसाकर्त्तव्ये न्यासस्य निक्षिप्तस्य अपह्नवने गोपने च दिव्या अलौकिकी क्रिया कर्म सम्भवति। एतदेव पद्यं तृतीयपादोनं कृत्वा पठ्यते-यथा—

अरण्ये निर्जने रात्रावन्तर्वेश्मनि साहसे
तन्वङ्गी यदि लभ्येत दिव्या सम्भवति क्रिया। इति।

यथा चोत्तरार्द्धे—

"तन्वङ्गी यदि लभ्येत दिव्या सम्भवति क्रिया।"

यथा वा—"यस्य केशेषु जीमूता नद्यः सर्वाङ्गसन्धिषु।

कुक्षौ समुद्राश्चत्वारस्तस्मै तोयात्मने नमः॥"

यथा चोत्तरार्द्धे—"कुक्षौ समुद्राश्चत्वारः स सहेत स्मरानलम्।"

भिन्नार्थानां तु पादानामेकेन पादेनान्वयनं कवित्वमेव। यथा—

"किमिह किमपि दृष्टं स्थानमस्ति श्रुतं वा व्रजति दिनकरोऽयं यत्र नास्तं कदाचित्
भ्रमति विहगसार्थानित्थमापृच्छमानो रजनिविरहभीतश्चक्रवाको वराकः॥"

---

एवमेतदन्यथात्वकरणेन परीक्षौपयिकमपि कामौपयिकं सम्पद्यते। स्यागोहीत्यत्र पादत्रयस्यान्यथाकरणं वर्त्तते। अरण्य इत्यत्रैकपादस्यान्यथाकरणमिति भेदः। पादान्यथाकरणत्वं तूभयत्रापि समानमेव।

यथावेति अन्यमुदाहरति—यस्येति। यस्य भगवतो विष्णोः केशेषु कचेषु जीमूताः मेघाः सर्वेषामङ्गानां सन्धिषु नद्यः सरितः, कुक्षौ चत्वारः समुद्राः सागराः तस्मै तोयात्मने जलशरीराय नमः।

अस्य पद्यस्य चतुर्थपादमन्यथाकृत्यप ठ्यते—यथा

यस्य केशेषु जीमूताः नद्यः सर्वाङ्गन्धिषु

कुक्षौ समुद्राश्चत्वारः स सहेत स्मरानलम्।

इति य एवम्भूतः स एव स्मरानलं कामाग्नि सहेत। अनेवम्भूतस्तु न सोढुं शक्नोति। एवमेतत्प्रणामौपयिकमपि कामौपयिकं जातम्।

भिन्नार्थानामिति। यत्र भिन्नः अर्थो येषां तेषां नानार्थानां बहूनां पादानामेकेन पादेन अन्वयनं सङ्गमनं क्रियते तत्र न हरणमपि तु कवित्वमेव।

यथा—किमिहेति। हे विहग ? किम्, इह लोके तादृशं किमपि स्थानं दृष्टमवलोकितं श्रुतं वाऽस्ति। यत्र स्थाने अयं दिनकरः सूर्यः कदाचिदपि अस्तं तिरोहितत्वं न व्रजति न गच्छति।

इत्येवं विहगसार्थान् पक्षिगणान् आपृच्छमानः आमन्त्रयन्, रजन्यां विरहेण भीतो वराकः चक्रवाको भ्रमति इतस्ततो गच्छति।

जयतीति। सितः श्वेतः विलोलः लम्बमानः व्यालः सर्प एव यज्ञोपवीतं यज्ञसूत्रं यस्य सः। घनानां सान्द्राणां कपिलानां पिशङ्गीनां जटानामन्तर्मध्ये भ्रान्तः घूर्णनां कुर्वन् गङ्गाया जलौघः नीरसमूहो यस्य सः। अविदितं मृगस्य चिह्नं कलंको यस्यास्तामिन्दुलेखां दधानः धारयन्। परिणतः शितिः कालः कण्ठे यस्य सः। अत एव श्यामकण्ठः कृष्णगलः पिनाकी रुद्रो जयति।

यथा च—

"जयति सितविलोलव्यालयज्ञोपवीती घनकपिलजटान्तर्भ्रान्तगङ्गाजलौघः ।
अविदितमृगचिह्नामिन्दुलेखां दधानः परिणतशितिकण्ठश्यामकण्ठः पिनाकी ॥'

यथा च—

"कुमुदवनमपश्रि श्रीमदम्भोजषण्डं त्यजति मदमुलूकः प्रीतिमांश्चक्रवाकः ।
उदयमहिमरश्मिर्याति शीतांशुरस्तं हतविधिललितानां ही विचित्रो विपाकः ॥"

यथा च—"किमिह किमपि दृष्टं स्थानमस्ति श्रुतं वा
घनकपिलजटान्तर्भ्रान्तगङ्गाजलौघः ।
निवसति स पिनाकी यत्र यायां तदस्मिन्
हतविधिललितानां ही विचित्रो विपाकः ॥"

पादोनवत्कतिपयपदप्रयोगोऽपि यथा—

"या व्यापारवती रसान् रसयितुं काचित्कवीनां नवा
दृष्टिर्या परिनिष्ठितार्थविषयोन्मेषा च वैपश्चिती ।
ते द्वे अप्यवलम्ब्य विश्वमनिशं निर्वर्णयन्तो वयं
श्रान्ता नैव च लब्धमब्धिशयन त्वद्भक्तितुल्यं सुखम् ॥"

---

कुमुदेति । अहिमाः उष्णाः रश्मयो यस्यासौ सूर्यः उदयं याति । शीताः अंशवो यस्यासौ चन्द्रोऽस्तं याति । कुमुदवनं कैरवकाननम् अपश्रि निःश्रीकं भवति अपरम् अम्भोजषण्डं कमलवनम् श्रीमत् सश्रीकम् , उलूकः कौशिकः मुदं हर्षं त्यजति जहाति दिवा अन्धत्वात् । अपरः चक्रवाकः कोकः प्रीतिमान् सहर्षो भवति । विरहाभावत्वात । कथमेतद्वैषम्यं तत्राह-हतेति । हतविधिललितानां दुर्दैवचेष्टितानाम् ही अहो । "अहो ही च विस्मये" इत्यमरः । विपाकः परिणामः तत्तत्प्राणिकर्मानुरूपफलदानप्रकार इत्यर्थः । विचित्रो विविधः नत्वेकविधः ।

इत्येषां त्रयाणां पद्यानामेकैकं पादं गृहीत्वा सर्वेषां पुनः समन्वयः एकेन तृतीय पादेन सह क्रियते—यथाचेति दर्शयति । किमिहेति । किम् भोः । इहलोके किमपि तादृशं स्थानं दृष्टं श्रुतं वास्ति । यत्र स्थाने घनकपिलजटान्तर्भ्रान्तगङ्गाजलौघः पिनाकी निवासं करोत । तदस्मिन् स्थाने यायाम् गच्छेयम् । इत्येवं हतविधिललितानां ही विचित्रो विपाकः ।

पादोनवदिति । पादोननवत् पादोनहरणवत् कतिपयानां पदानां प्रयोगोपि न हरणम् न वा स्वीकरणम् ।

या व्यापारवतीति । या काचिन् नवा नूतना कवीनां दृष्टिः रसान् शृङ्गारादीन्

यथा च चतुर्थपादे—

"श्रान्ता नैव च लब्धमुत्पलदृशां प्रेम्णः समानं सुखम् ॥"

पादैकदेशग्रहणमपि पदैकदेशोपलक्षणपरम् । यथा—

"असकलहसितत्वात्क्षालितानीव कान्त्या
मुकुलितनयनत्वाद्व्यक्तकर्णोत्पलानि ।
पिबति मधुसुगन्धीन्याननानि प्रियाणां
त्वयि विनिहितभारः कुन्तलानामधीशः ॥"

यथा चोत्तरार्धे—"पिबतु मधुसुगन्धीन्याननानि प्रियाणां
मयि विनिहितभारः कुन्तलानामधीशः ।"

वाक्यस्यान्यथा व्याख्यानमपि न स्वीकरणं हरणं वा । यथा—

---

रसयितुमास्वादयितुं व्यापारवती । या च परिनिष्ठितेऽर्थविषये उन्मेषः प्रादुर्भावो यस्या सा वैपश्चिती वैदुषी वर्त्तते । ते द्वे दृष्टिवैपश्चित्यौ अपि अवलम्ब्य गृहीत्वा अनिशं निरन्तरं विश्वं सर्वं निर्विर्णयन्तो विचारयन्तो वयं श्रान्ताः । किन्तु हे अब्धिशयन ? क्षीरसागरशायिन् ? त्वद्भक्तितुल्यं तवानुरागसमानं सुखं नैव लब्धम् ।

यथास्यैव चतुर्थपादे चतुर्थचरणे कतिपयपदप्रयोगः, श्रान्तेति श्रान्ताः खिन्नाः । किन्तु उत्पलदृशां नायिकानां प्रेम्णः प्रियतायाः समानं तुल्यं सुखमानन्दो न लब्धं न प्राप्तम् । स्यादानन्दथुरानन्दः शर्मसातसुखानि चेत्यमरः । अत्र कतिपयानि उत्पलदृशां प्रेम्णः समानमिति पदान्युपनिबध्य श्लोकोऽन्यथाकृत इति ज्ञेयम् । एवमेतद्भक्त्यौपयिकमपि शृङ्गारौपयिकं जातम् ।

पादैकेति । पादोनग्रहणं पादैकदेशग्रहणं पदैकदेशस्य उपलक्षकम् । तेन पदैकदेशविपर्यासोऽपि न स्वीकरणपदाभिधेयो न हरणपदाभिधेय इति भावः ।

असकलेति । हे अमात्य ? त्वयि भावत्के विनिहितभारः स्थापितस्वकृत्यः कुन्तलानामधीशः कुन्तलेश्वरः असकलहसितत्वात् असम्पूर्णहास्यतया कान्त्या शोभया क्षालितानीव मार्जितानीव । मुकुलितनयत्वात् नेत्रयोः कुड्मलत्वात्, व्यक्तानि स्पष्टानि कर्णोत्पलानि । एतेन नेत्रयोः उत्पलसाम्यं व्यज्यते । मधुना सुगन्धीनि सुरभीणि प्रियाणाम् आननानि मुखानि पिबति । अत्रैव यदि पिबतेरेकदेशे लट्स्थानीयतिपि लोट्स्थानीयतिपा तथा मयीत्यस्यैकदेशे मस्थाने त्वेन सता पदैकदेशहरणोदाहरणं भवति । तथा चेदं आशंसावाक्यमपि अनुमतिवाक्यं भवति । यदि प्रथमत एव पिबतु इति त्वयि इति च यथास्थितः पाठः तदैतत् प्रार्थनावाक्यं भवतीति बोध्यम् ।

एवं पदादीनां हरणभिदां निर्दिश्य श्लोकस्य पूर्णस्य हरणं दर्शयितुमुपक्रमते—

"सुभ्रु ? त्वं कुपितेत्यपास्तमशनं त्यक्ता कथा योषितां
दूरादेव मयोज्झिताः सुरभयः स्रग्दामधूपादयः ।
कोपं रागिणि मुञ्च मय्यवनते दृष्टे प्रसीदाधुना
सद्यस्त्वद्विरहाद्भवन्ति दयिते सर्वा ममान्धा दिशः ॥"

एतच्च कान्ताप्रसादनपरं वाक्यं कुपितदृष्टिपरतया व्याख्यातं, न स्वीकृतं हृतं वा । यत्तु परकीयं स्वीयमिति प्रोक्तानामन्यतमेन कारणेन विलपन्ति, तन्न केवलं हरणम्, अपि तु दोषोदाहरणम् । मुक्तकप्रबन्धविषयं तत् । मूल्यक्रयोऽपि हरणमेव । वरमप्राप्तिर्यशसो न पुनर्दुर्यशः ।

(सभापतिस्तु द्विधा, उपजीव्य, उपजीवकश्च । तत्रोपजीवनमात्रेण न कश्चिद्दोषः । यतः सर्वोऽपि परेभ्य एव व्युत्पद्यते, केवलं तत्र समुदायो गुरुः) "तद्वदुक्तिहरणम्" इति आचार्याः ।

---

वाक्यस्येति । वाक्यस्य अन्यथा पूर्वापेक्षया विपरीतं व्याख्यानमपि अन्वयनमपि न स्वीकरणमुररीकरणं न वा हरणम् ।

सुभ्रिति । हे सुभ्रु ? शोभनभ्रुकुटीसम्पन्ने ? त्वं कुपिता इति अशनं भोजनम् त्यक्तम् । तथा योषितां कथा त्यक्ता । सुरभय सुगन्धयः स्रग्दामधूपादयः । समस्तेन स्रग्दामपदेन पुष्पमाला ग्राह्या अन्यथा दाम्नो वैयर्थ्यमेव । दूरादेव मया उज्झितास्त्यक्ताः, रागिणि अनुरागवति मयि कोपं मुञ्च त्यज मयि अवनते दृष्टे सति माम्प्रणतं दृष्ट्वा अधुना प्रसीद प्रसन्ना भव । हे दयिते ? त्वद्विरहाद् भवद्वियोगात ममकृते सर्वा दिशः सद्योऽन्धाः शून्या इत्यर्थः भवन्ति । एतच्च नायिकापक्षे । दृष्टिपक्षे दृष्टे इति रागिणि इति च सम्बोधनम् । अन्धाः अप्रकाशाः । अन्यत्समं समम् ।

एतच्च अदश्च कान्ताया वल्लभायाः प्रसादने सन्तोषणे परमधीनं वाक्यं पद्यरूपं कुपितदृष्टिपरतया अन्वितं व्याख्यातम् अतो न स्वीकृतमुरीकृतम् न वा हृतं चोरितम् ।

ननु यद्येवं नापहरणमनुमन्यते तत्कीदृशो हरणपदार्थो विवक्षितः इत्यत आह– यत्त्विति । तु किन्तु यत् प्रोक्तानां कारणानामन्यतमेन एकेन कारणेन हेतुना परकीयं काव्यं स्वीयमिति विलपन्ति अनर्थकं ब्रुवन्ति । तन्न केवलं हरणं चोरणम् । अपि तु किन्तु निजाकुलीनत्वप्रकटनम् ।

तदेतत्सर्वं दूषणं मुक्तककाव्यप्रबन्धकाव्यविषयकम् । नान्यत्रेति भावः । मूल्येति । काव्यस्य मूल्येन क्रयोपि हरणशब्दवाच्यः । तत्र हेतुं वदति–वरमिति । यशसः कीर्त्तेरप्राप्तिः वरम् । न पुनर्दुर्यशः । अयं भावः । यः परकृतकाव्यं मूल्येन क्रीत्वा स्वनाम्ना प्रख्यापयेत् । तर्हि यशोऽपेक्षया तस्य मौर्ख्यप्रख्यापकं दुर्यश एव ।

यथा—"ऊरुद्वयं सरसकदलीकाण्डसब्रह्मचारि।"
यथा च—

"ऊरुद्वयं कदलकन्दलयोः सवंशं श्रोणिः शिलाफलकसोदरसन्निवेशा।
वक्षः स्तनद्वितयताडितकुम्भशोभं सब्रह्मचारि शशिनश्च मुखं मृगाक्ष्याः॥"

उक्तयो ह्यर्थान्तरसङ्क्रान्ता न प्रत्यभिज्ञायन्ते, स्वदन्ते च; तदर्थास्तु हरणादपि हरणं स्युः" इति यायावरीयः।

"नास्त्यचौरः कविजनो नास्त्यचौरो वणिग्जनः।
स नन्दति विना वाच्यं यो जानाति निगूहितुम्॥

---

सभापतिस्तु इतः प्रभृति समुदायो गुरुरित्यन्तः पाठः कदाचिद् दशमाध्यायस्थो भवेत। अत्र अस्य निःप्रयोजनत्वात।

तद्वदिति। तद्वद् मूल्यक्रयेण हरणवत उक्तिहरणं वचोहरणं दोषोदाहरणम्। इत्यचार्याणामाशयः।

उदाहरणं यथा--ऊरुद्वयमिति। ऊरुद्वन्य ऊरुयुग्मम् सरसैरार्द्रैः कदलीकाण्डै कदलीस्कन्धैः सब्रह्मचारि तुल्यम्। एतस्या उक्तेः हरणोदाहरणं यथा--

ऊरुद्वयमिति। ऊरुयुगं सक्थियुगं। मृगाक्ष्या इति सर्वत्र। कदलकन्दलयोः कदल्यंकुरयोः।

कदला कदलौ पृश्न्यां कदली कदलौ पुनः।
रम्भावृक्षेऽथ कदली पताकामृगभेदयोः
कदला डिम्बिकायां च शाल्मली भूरुहेऽपि च। इति मेदिनी।
कदलश्च कदल्यसौ। इति व्याडिः

सवंशम् सकुल्यम्। श्रोणिः कोटिः शिलाफलकसोदरः। पाषाणपट्टसदृशः सन्निवेशो विरचनं यस्याः सा। वक्षः उरः स्तनद्वितयेन कुचयुग्मेन ताडिता निर्जिता कुम्भयोः शोभा येन तत्। मुखं च शशिनो मृगाङ्कस्य सब्रह्मचारि तुल्यम्।

यथा पूर्वश्लोके कदलीसादृश्यमूरुद्वन्द्वस्य उक्तं तथैव अत्रापि।

अस्मिन्विषये स्वमतं प्रकटीकरोति। उक्तयो वचांसि अर्थान्तरेषु संक्रान्ताः सत्यो न प्रत्यभिज्ञायन्ते ता एव एता इति न प्रतीयन्ते। प्रत्युत स्वदन्ते सरसाभवन्ति। तदर्थास्तु हृतोक्तीनामुपनिबन्धास्तु हरणादपि हरणं स्युः चोरितादपि चोरितवत् भविष्यन्ति। इति ग्रन्थकारः।

नन्वेवं परोक्तीनां हरणेन काव्यं सिसृक्षोः कवेर्वान्ताशित्वं ततश्च गर्हणीयत्वं प्राप्नोतीत्याह--नास्तीति। अचौरः अनपहारकः कविजनो नास्ति वैश्योपि अचौरो-

उत्पादकः कविः कश्चित्कश्चिच्च परिवर्त्तकः।
आच्छादकस्तथा चान्यस्तथा संवर्गकोऽपरः॥
शब्दार्थोक्तिषु यः पश्येदिह किञ्चन नूतनम्।
उल्लिखेत्किञ्चन प्राच्यं मन्यतां स महाकविः॥"

॥ इति राजशेखरकृतौ काव्यमीमांसायां कविरहस्ये प्रथमेऽधिकरणे एकादशोऽध्यायः शब्दहरणानि ॥

## द्वादशोऽध्यायः।

### अर्थहरणोपायाः, कविप्रभेदाः, प्रतिबिम्बकल्पविकल्पस्य समीक्षा च।

"पुराणकविक्षुण्णे वर्त्मनि दुरापमस्पृष्टं वस्तु, ततश्च तदेव संस्कर्तुं प्रयतेत'

नास्ति। सत्यमेत् किन्तु स कविः विना वाच्यं निन्दाराहित्येन नन्दति मोदते यो निगूहितुं निह्नोतुं जानाति।

यत उक्तं च–उत्पादक इति। शब्दार्थेति। कश्चित्कविः उत्पादकः स्वबुद्धयैव काव्यं प्रसूते। कश्चिच्च कविः परिवर्त्तकः अन्योक्तीनां स्वोक्त्या विनिमयं करोति। अन्यः कविः आच्छादकः निगूहकः। तथा अपरः संवर्गकः अनेककाव्यार्थग्राही भवति।

किन्तु––यः कविः इह शब्दार्थोक्तिषु पदाभिधेयवचःसु किंचन नूतनं पश्येत्। तथा किंचनानिर्वचनीयं प्राच्यं प्रथममुल्लिखेत् प्रतिभायात् स महाकविः मन्यताम् अनुमोद्यताम्।

इति साहित्याचार्याहिताग्निश्रीमधुसुदनशास्त्रिणः कृतौ
मधुसुदनीविवृतौ एकादशोऽध्यायः।

हरस्य मूर्ध्नि संलीनां गङ्गां त्रिपथगां नुमः।
यत्कृपातो द्वादशेऽस्मिन् विवृतिः क्रियते शुभा॥

अथात्र शब्दार्थहरणोपाया इति सूत्रानुसारेण पूर्वत्राध्याये शब्दहरणोपायान् विभज्य ससमीक्षं निर्दिश्य च अर्थहरणोयायान् वक्तुमुपक्रमते अर्थहरणोपायाः। प्राचीनाचार्यैः ये येऽर्थाः स्वकाव्ये प्रादुर्भाव्य भासिताः। तान् स्वीकृत्य सेवयिता आभ्यासिकः कविः काव्यरचनायामभ्यसेत्, तदर्थमर्थानां भावानामित्यर्थः। हरणस्य उपायाः साधकानि कारणानि उपदेक्ष्यामहे। पुराणेति। पुराणैः प्राचीनैः कविभिः क्षुण्णे

इति आचार्याः। "न" इति वाक्पतिराजः।

"आसंसारमुदारैः कविभिः प्रतिदिनगृहीतसारोऽपि।
अद्याप्यभिन्नमुद्रो विभाति वाचां परिस्यन्दः॥'

तत्प्रतिभासाय च परप्रबन्धेष्ववदधीत। "तदवगाहने हि तदेकयोनयोऽर्थाः पृथक् पथक् प्रथन्ते" इत्येके। "तत्रत्यानामर्थानां छायया परिवृत्तिः फलम्" इत्यपरे। महात्मनां हि संवादिन्यो बुद्धय एकमेवार्थमुपस्थापयन्ति,

---

अभ्यस्ते वर्त्मनि मार्गे दुरापं दुःखेन प्राप्तुं शक्यम् मन्दधीभिराकलयितुमशक्यम्। अस्पृष्टं वर्णयितुं तेषां चित्तेऽनारूढं परन्तु वस्तुतो ग्राह्यं वर्ण्नीयं च यद् वस्तु पदार्थो "वर्त्तते भवितुं युज्यते" (इति वा शेषः) ततस्तस्मात्कारणात् तदेव दुरापमस्पृष्टमेव वस्तु संस्कर्त्तुं प्रयतेत यत्नवान् भवेत्। इति आचार्याणामाशयः। नेति। आचार्यैर्यदुक्तं "दुरापास्पृष्टे वस्तुनी संस्कर्त्तुं प्रयत्नवान् भवेत् इति" तन्न यतः उक्तम्—

आसंसारमिति। आसंसारम् संसारप्रगति मर्यादीकृत्य। उदारैः महद्भिः। उदारो दातृमहतोरित्यमरः। कविभिः। प्रतिदिनम् अन्वहम्। गृहीतः स्वीकृतः सारो यस्य सः वाचां वाणीनां परिस्यन्दः प्रवाहः अद्यापि इदानीं यावत् अभिन्नमुद्रः अस्फुटितमुद्रः (मुद्रा मोहर इति ख्याता) विभाति शोभते। इयान् वाचां परिस्यन्दः यत् महद्भिः कविभिःप्रतिदिनं सारग्रहणे कृतेऽपि अभिन्नमुद्र एवास्ते तर्हि को नाम वराकः तं संस्कर्त्तुं प्रयत्नवान् भवेदिति भावः।

उक्तं च—वाचस्पतिसहस्राणां सहस्रैरपि यत्नतः।
निबद्धापि क्षयं नैति प्रकृतिर्जगतामिव। इति।

तदिति। तयोः दुरापास्पृष्टयोः प्रतिभासाय स्फुटीकरणाय परेषां प्रबन्धेषु अन्यै रचितेषु ग्रन्थेषु अवदधीत सावधानो भवेत्। कारणं च तत्र दर्शयति—तदिति। तदवगाहने हि परप्रणीतप्रबन्धालोचने इह तादृशा एकरूपा अर्थाः भावाः पृथक् पृथक् प्रथन्ते पार्थक्येन ज्ञाता भवन्तीति भावः। इति एकेषामाचार्याणां मतम्।

तत्रत्येति। तत्रत्यानां परप्रणीतग्रन्थगतानामर्थानां भावानां छायां गृहीत्वा पृथक् स्वकाव्यप्रणयनं परप्रणीतप्रबन्धालोडनफलम्। इत्यपरेषांचनाचार्याणां भावः।

महात्मनामिति। महात्मनां सूक्ष्मदृशां बुद्धयः संवादिन्यः सदृश्यो भवन्ति।

सम्वादास्तु भवन्त्येव बाहुल्येन सुमेधासाम्। इति।

तस्मादेव अर्थविशेषं कंचन एकरूपमेव उपस्थापयन्ति प्रादुर्भावयन्ति। अतः कारणात् एकरूपार्थपरित्यागाय तान् परप्रणीतप्रबन्धान् आद्रियेत आलोचयितुं स्वीकुर्वीत। इत्यपि केषांचिदाचार्याणामभिप्रायः।

तत्परित्यागाय तानाद्रियेत" इति च केचित्। "न" इति यायावरीयः। सारस्वतं चक्षुरवाङ्मनसगोचरेण प्रणिधानेन दृष्टमदृष्टं चार्थजातं स्वयं विभजति।

तदाहुः—सुप्तस्यापि महाकवेः शब्दार्थौ सरस्वती दर्शयति तदितरस्य तत्र जाग्रतोऽप्यन्धं चक्षुः। अन्यदृष्टचरे ह्यर्थे महाकवयो जात्यन्धास्तद्विपरीते तु दिव्यदृशः। न तत् त्र्यक्षः सहस्राक्षो वा यच्चर्मचक्षुषोऽपि कवयः पश्यन्ति। मतिदर्पणे कवीनां विश्वं प्रतिफलति। कथं नु वयं दृश्यामह इति महात्मनामहम्पूर्विकयैव शब्दार्थाः पुरो धावन्ति। यत्सिद्धप्रणिधाना योगिनः पश्यन्ति, तत्र वाचा विचरन्ति कवयः इत्यनन्ता महाकविषु सूक्तयः (इति)।

"समस्तमस्ति" किन्तु त्रिपथमर्थमध्यगीष्महि। इति यायावरीयः। यदुतान्ययोनिर्निह्नुतयोनिरयोनिश्च। तत्रान्ययोनिर्द्विधा प्रतिबिम्बकल्पः, आलेख्यप्रख्यश्च। निन्हुतयोनिरपि द्विधा तुल्यदेहितुल्यः परपुरप्रवेशसदृशश्च।

---

नेति। आचार्यैः पृथक् पृथक् यदुक्तं तन्न समीचीनामिति ग्रन्थकारः। यतोहि सारस्वतं चक्षुः ज्ञानमयं चक्षुः वाङ्मनसयोरपि विषयमतिक्रम्य वर्त्तमानेन प्रणिधानेन समाधिद्वारा स्वयं स्वेनैव विभागं करोति यदयमर्थसार्थः कुत्रापि पूर्वं दृष्टः अयं च अदृष्टः नवीन एवेति।

तदाहुरिति समर्थयति। महाकविः यदि स्वपन्नपि भवेत् तथापि सरस्वती भगवती वाग्देवी स्वमेव तस्मै काव्यानुकूलौ शब्दार्थौ दर्शयति प्रतिभासयति। तदितरस्य महाकवेर्भिन्नस्य अकवेरित्येव तात्पर्यम्। तत्र शब्दार्थविषये जाग्रतोपि चक्षुरन्धम् अप्रकाशमिति यावत्। हियतो महाकवयः परप्रतिभासितेऽर्थे जात्यन्धाः जन्मान्धाः, तद्विपरीते स्वप्रतिभया प्रादुर्भाविते‌ऽर्थेतु दिव्यदृशो देवा इति भावः। न तद्वस्तु दिव्यदृगपि त्र्यक्षः शिवः सहस्राक्ष इन्द्रो वा पश्यति। यद्वस्तु चर्मचक्षुषः कवयः साक्षात्कुर्वन्ति। कवीनां मतिदर्पणे बुद्धिमुकुरे विश्वं जगत् प्रतिफलति आलोक्यते। कथं केन उपायेन वयं महाकविभिः दृश्यामहे साक्षात्क्रियामहे इत्येवं रूपेण अहंपूर्विकया अहमहमिकया शब्दार्थाः महात्मनां कवीनां पुरोऽग्रे धावन्ति। यद्वस्तु सिद्धं निष्पन्नं प्रणिधानं समाधिर्येषां ते योगिनः पश्यन्ति साक्षात्कुर्वन्ति। तत्र वस्तुनि कवयो वाचा वाण्या विचरन्ति विहरन्ति। यत उक्तञ्च कवयः किं न पश्यन्ति। इति। इत्येवंरूपा अनन्ताः विपुलाः सूक्तयो जनश्रुतयो महाकविषु तेषां समाजे प्रसिद्धाः। इत्याहुः।

स्वयं संवदति—समस्तमिति। सर्वं वर्त्तते। मन्यते अनुमोद्यते इति भावः। किन्तु

अयोनिः पुनरेकादृश एव । तत्र—

अर्थः स एव सर्वो वाक्यान्तरविरचनापरं यत्र ।
तदपरमार्थविभेदं काव्यं प्रतिबिम्बकल्पं स्यात् ॥

यथा—

"ते पान्तु वः पशुपतेरलिनीलभासः कण्ठप्रदेशघटिता फणिनः स्फुरन्तः ।
चन्द्रामृताम्बुकणसेकसुखप्ररूढैर्यैरङ्कुरैरिव विराजति कालकूटः ॥"

यथाच—"जयन्ति नीलकण्ठस्य कण्ठे नीलाः महाहयः ।
गलद्गङ्गाम्बुसंसिक्तकालकूटाङ्कुरा इव ॥"

---

अर्थं त्रिपथं त्रिमार्गं त्रिविधमित्यर्थः । अध्यगीष्महि अपठिष्म । यथा अन्यःकविः योनिः कारणं प्रादुर्भावको यस्य स अन्ययोनिः । निह्नतः निगूहितः अस्पष्टः योनिर्यस्य स निन्हुतयोनिः । अयोनिः नास्ति कोपि कुत्रापि वा योनिर्यस्य सोऽयोनिः स्वावधानमात्रकारणः । नात्रान्यस्य गन्धोऽपि स्वयं प्रकाशितः । इति भावः । तत्र त्रिविधानामर्थानां मध्ये अन्ययोनिः प्रथमः प्रकारो द्विधा द्विप्रकारः । प्रतिबिम्बकल्पः एकः । आलेख्यप्रख्यो द्वितीयः । निन्हुतयोनिः द्वितीयः प्रकारः तुल्यदेहितुल्य पुरप्रवेशसदृशभेदेन द्विधा । अयोनिः पुनः अयोनिस्तु एकादृशः एकरूप एव । तत्र तेषां मध्ये प्रथमस्य लक्षणं यथा—

अर्थ एव । यत्र काव्ये योर्थः अन्यकवेः काव्ये वर्त्तते स एव सर्वः अर्थः भवेत्, किन्तु अपरमार्थविभेदं तात्विकभेदशून्यं वाक्यान्तराणां विरचनं वर्त्तते तत्काव्यं प्रतिविम्बकल्पम् एतदाख्यं स्यात् । एवं च एकार्थं वाक्यतो भेदवत् काव्यं प्रतिविम्बकल्पनामकम् ।

यथोदाहरणम्—ते पान्तु व इति । पशुपतेः शिवस्य कण्ठप्रदेशे गले घटिताः संगताः अलिवन्नीला भाः कान्तिर्येषां तेऽलिनीलभासः अत एव स्फुरन्तो देदीप्यमानास्ते फणिनः सर्पाः वो युष्मान् पान्तु रक्षन्तु । चन्द्रस्य अमृतमेव अम्बु । तस्य कणानां सेकेन सुखं प्ररूढैरङ्कुरैरिव यैः सर्वैः कालकूटो विराजते ।

अत्रार्थे वाक्यान्तरविरचनापरं काव्यं यथा—जयन्तीति । नीलकण्ठस्य शिवस्य कण्ठे गले वर्त्तमानाः नीला महाहयः महासर्पाः जयन्ति । के इव । गलता गङ्गाम्बुना संसिक्तस्य कालकूटस्य महाविषस्य अङ्कुरा इव ।

उभयत्रात्र नीलकण्ठकण्ठस्थितसर्पाणां जलकणसेकप्रादुर्भूतकालकूटाङ्कुरसादृश्यमुद्भावितम् । एवमत्र एकार्थत्वं वाक्यभेदवत्वं वर्त्तते । तथा चेदं द्वितीयं पद्यं प्रतिविम्बकल्पनामकम् ।

कियताऽपि यत्र संस्कारकर्मणा वस्तु भिन्नवद्भाति ।
तत्कथितमर्थचतुरैरालेख्यप्रख्यमिति काव्यम् ॥

तत्रैवार्थे यथा—

"जयन्ति धवलव्यालाः शम्भोर्जूटावलम्बिनः ।
गलद्गङ्गाम्बुसंसिक्तचन्द्रकन्दाङ्कुरा इव ॥"

विषयस्य यत्र भेदेऽप्यभेदबुद्धिर्नितान्तसादृश्यात् ।
तत्तुल्यदेहितुल्यं काव्यं बध्नन्ति सुधियोऽपि ॥

यथा—"अवीनादौ कृत्वा भवति तुरगो यावदवधि
पशुर्धन्यस्तावत्प्रतिवसति यो जीवति सुखम् ।
अमीषां निर्माणं किमपि तदभूद्दग्धकरिणां
वनं वा क्षोणीभृद्भवनमथवा येन शरणम् ॥"

---

कियतापीति । यत्र काव्ये कियतापि अल्पेनापीत्यर्थः संस्कारकर्मणा वस्तु पदार्थः भिन्नवत् पृथगिव भाति । तत्काव्यमर्थचतुरैः पदार्थनिपुणैः पण्डितैः आलेख्यप्रख्यमिति कथितमुक्तम् ।

तत्रैवार्थे ते पान्तु व इति श्लोकार्थ एव कियत्संस्कारवत्काव्यं यथा—जयन्ति इति । शम्भोः शिवस्य जूटावलम्बिनः कपर्दावलम्बिनः । कपर्दोऽस्य जटाजूटः इत्यमरः । धवलव्यालाः श्वेताहयो जयन्ति । के इव । गलता गंगागलेन संसिक्तस्य चन्द्रकन्दस्य अंकुरा इव । उभयत्र स एवार्थः किन्तु पूर्वत्र चन्द्रामृतजलसेक उत्तरत्र गंगाजलसेकः । तथा पूर्वत्र सेकप्ररूढकालकूटाङ्कुराः । उत्तरत्र चन्द्रकन्दाङ्कुराः । पूर्वत्र कण्ठे नीलाः सर्पाः उत्तरत्र जूटे धवला व्याला इति संस्कारः ।

विषयस्येति । यत्र काव्ये विषयस्य वस्तुनो भेदेपि नितान्तसादृश्यात सादृश्यातिशयमहिम्ना अभेदबुद्धिर्भवति । तत् तुल्यदेहितुल्यं नाम काव्यं सुधियोऽपि विद्वांसोऽपि बध्नन्ति रचयन्ति। सुधिय इत्युक्त्यास्य विदुषामनुशीलयत्वं सूचयति ।

अवीनादाविति । यस्तुरगोऽश्वः यावदवधि यावत्कालम्, अवीन् मेषान् आदौ अग्रतः कृत्वा भवति स्थितिं करोति । तावत्कालं प्रवसति सुखं यथा तथा जीवति च सः पशुरश्वः धन्यः । यः परमुपकुर्वन् वसति जीवति च स सर्वो धन्यः । अनीदृशस्य विफलं जन्म । यस्मिञ्जीवति जीवन्ति बहवः सोत्र जीवतीत्युक्तेः । किन्तु अमीषां दग्धकरिणां येषां जन्म केवलं भारकारि न कस्यापि उपकारकारि अतएव दुष्टानां हस्तिनां किमपि तद् अवाच्यं निर्माणम् अभूत्, येन तेषां शरणं गृहम् । शरणं गृहरक्षित्रोरित्यमरः । वनं स्यात् वा अथवा क्षोणीभृतो राज्ञो भवनं सद्म स्यात् । न हि

अत्रार्थे—

"प्रतिगृहमुपालानामेक एव प्रकारो मुहुरुपकरणत्वादर्घिताः पूजिताश्च।
स्फुरति हतमणीनां किन्तु तद्धाम येन क्षितिपतिभवने वा स्वाकरे वा निवासः॥"

मूलैक्यं यत्र भवेत्परिकरबन्धस्तु दूरतोऽनेकः।
तत्परपुरप्रवेशप्रतिमं काव्यं सुकविभाव्यम्॥

यथा—"यस्यारातिनितम्बिनीभिरभितो वीक्ष्याम्बरं प्रावृषि
स्फूर्जद्गर्जितनिर्जिताम्बुधिरवस्फाराभ्रवृन्दाकुलम्।

---

सर्वजनसाधारणतया उपभोग्यतां समायातीति भावः।

प्रतिगृहमुपलानामिति। प्रतिगृहं सर्वत्र गृहेषु उपलानां पाषाणानामेक एव प्रकारः भेदः। मुहुर्वारं वारम्। उपकरणत्वात् उपभोगसाधनत्वात्। अर्चिताः पूजिताश्च। किन्तु सर्वसाधारणोपभोगरहितानामत एव हतानां मणीनां तद् अवाच्यं धाम तेजः स्फुरति प्रकाशते येन तेषां क्षितिपतिभवने नृपवेश्मनि वा अथवा स्वाकरे यत्र ते उत्पन्नास्तत्र खनौ एव निवासः। न हि विश्वजनीनता तेषामाकलयाम इत्याकूतम्।

पद्ययोरनयोः गजतुरगयोः मणिपाषाणयोः वर्णितत्वेन परस्परं विषयगतो भेदः। किन्तु सकललोकसाधारणतया उपभोग्यत्वानुपभोग्यत्वस्य उभयत्रापि निष्कर्षतया नितान्तसादृश्यं सचेतसां सहृदयानां चेतसि स्फुरतीति स्फुटम्।

मूलैक्यमिति। यत्र काव्ये मूलतो वस्तुगत्या ऐक्यं भवेत्। किन्तु परिकरस्य आरम्भस्य बन्धो रचना दूरत अत्यन्तमनेकः विभिन्नः।

भवेत्परिकरो व्राते पर्यङ्कपरिवारयोः।
प्रगाढगात्रिकाबन्धे विवेकारम्भयोरपि॥ इति विश्वः

तत् सु विभाव्यम् परपुरप्रवेशप्रतिमं परनगरप्रवेशसदृशं नाम काव्यं वर्त्तते।

यथा एतस्य उदाहरणम्—यस्यारातीति। यस्य राज्ञः अरातिनितम्बिनीभिः शत्रुवनिताभिः। प्रावृषि वर्षासमये अभितः स्फूर्जद् यद्गर्जितं स्फूर्जद्गर्जितं वज्रनिर्घोषयुतमेघनिर्घोषं (टु ओ स्फूर्जा वज्रनिर्घोष इत्यस्माच्छतरि स्फूर्जन्निष्पन्नः गर्जशब्दे इत्यस्मात् पचाद्यचि गर्जः। सः संजातो यस्य तत् गर्जितम्) स्तनितं गर्जितं मेघनिर्घोषो रसितादि चेत्यमरः। तेन निर्जितः अम्बुधेः समुद्रस्य रवस्फारः ध्वनिविस्तारो येन। सचासौ अभ्रवृन्दः। तेन आकुलं व्याप्तमम्बरं वीक्ष्य। उत्सृष्टं त्यक्तं यद् प्रसभस्य हठस्य। प्रसभं तु बलात्कारो हठः। हठः स्यात्प्रसभे इति च कोषौ। अभिषेणनस्य जिगीषुकर्तृकसेनयाभियानस्य। यत्सेनयाभिगमनमरौ तदभिषेणनम्। इत्यमरः। भयं भीतिः। भीतिर्भीः साध्वसं भयम्। इत्यमरः। अत एव स्पष्टानि

उत्सृष्टप्रसभाभिषेणनभयस्पष्टप्रमोदाश्रुभिः
किञ्चित्कुञ्चितलोचनाभिरसकृद् घ्राताः कदम्बानिलाः ॥"

अत्रार्थे—"आच्छिद्य प्रियतः कदम्बकुसुमभं यस्यारिदारैर्नवं
यात्राभंगविधायिनो जलमुचां कालस्य चिह्नं महत् ।
हृष्यद्भिः परिचुम्बितं नयनयोर्न्यस्तं हृदि स्थापितं
सीमन्ते निहितं कथञ्चन ततः कर्णावतंसीकृतम् ॥"

तदेतच्चतुष्टयनिबन्धनाश्च कवीनां द्वात्रिंशद्धरणोपायाः । अमीषां चार्थानामन्वर्था अयस्कान्तवच्चत्वारः कवयः पञ्चमश्चादृष्टचरार्थदर्शी । तदाहुः—

"भ्रामकश्चुम्बकः किञ्च कर्षको द्रावकश्च यः ।
स कविर्लौकिकोऽन्यस्तु चिन्तामणिरलौकिकः ॥

---

स्फुटानि प्रमोदजन्यानि अश्रूणि यासां ताभिः । किञ्चित् कुञ्चितानि वक्राणि लोचनानि यासां ताभिः अरातिनितम्बनीभिः कदम्बानिलाः कदम्बवायवः असकृत वारं वारम् घ्राताः घ्राणेनानुभूताः ।

अस्मिन्नर्थे कस्यचित्पद्यं यथा—आच्छिद्येति । यस्य अरिदारैः शत्रुनारीभिः, यात्राया युद्धार्थप्रस्थानस्य भङ्गविधायिनः निवारकस्य जलमुचां कालस्य वर्षायाः महत् वृहत् चिन्हं लक्षणं नवं नूतनं कदम्बकुसुमं कदम्बपुष्पं प्रियतः । सार्वविभक्तिकस्तसिः प्रियेणेत्यर्थः । वल्लभद्वारा आच्छि । द्य अन्तर्भावितणयर्थः । कदम्बवृक्षात् त्रोटयित्वा तैश्च तासां भावमवुध्वा हृष्यद्भिः सानन्दैः सरोमाञ्चैर्वा परिचुम्बितं, भागवतोयोऽनुग्रहोयमिति बुध्या नयनयोर्न्यस्तम् । अतिप्रियत्वात् हृदि स्थापितम् । तत्प्रादुर्भावेणैव एतासां सीमन्तशृङ्गाररक्षेति भावेन सीमन्ते निहितं ततः कथञ्चन कृच्छात् अविश्वास्यतया कर्णावतंसीकृतम् कर्णभूषणीकृतम् ।

उभयोरनयोः पद्ययोः वर्षाकालवर्णनपरतया मूलत ऐक्यं किन्तु रचनोपक्रमस्तु अत्यन्तं भिन्नः ।

तदित्थं एतच्चतुष्टयनिबन्धनाः प्रतिबिम्बकल्पालेख्यप्रख्यतुल्यदेहितुल्यपरपुरप्रवेशसदृशेति चतुःसंख्याकार्थहेतवो हि द्वात्रिंशत् हरणोपाया हरणसाधनानि कवीनां वर्त्तन्ते कवीनां कृते उपदिष्टा वा । अमोषां चतुर्णामर्थानाम् । अन्वर्थाः यथानाम तथागुणाः अयस्कान्तप्रतिमाः चत्वारः कवयो भवन्ति । पञ्चमो हि अदृष्टचरार्थदर्शी अभूतपूर्वार्थप्रत्यक्षकारी अयोन्यर्थदर्शक इत्यर्थः ।

तदाहुरिति तादृशकविसंग्राहकं केषाञ्च न पद्यमवतारयति—भ्रामक इति । यो भ्रामकः चुम्बकः कर्षको द्रावकः कविः स लौकिको ज्ञेयः अन्यः पञ्चमः अदृष्टचरार्थदर्शी कविः चिन्तामणिरिति ख्यातः । स च अलौकिकः ।

तन्वानोऽनन्यदृष्टत्वं पुराणस्यापि वस्तुनः ।
योऽप्रसिद्ध्यादिभिर्भ्राम्यत्यसौ स्याद् भ्रामकः कविः ॥
यश्चुम्बति परस्यार्थं वाक्येन स्वेन हारिणा ।
स्तोकार्पितनवच्छायं चुम्बकः स कविर्मतः ॥
परवाक्यार्थमाकृष्य यः स्ववाचि निवेशयेत् ।
समुल्लेखेन केनापि स स्मृतः कर्षकः कविः ।
अप्रत्यभिज्ञेयतया स्ववाक्ये नवतां नयेत् ।
यो द्रावयित्वा मूलार्थं द्रावकः स भवेत्कविः ॥
चिन्तासमं यस्य रसैकसूतिरुदेति चित्राकृतिरर्थसार्थः ।
अदृष्टपूर्वो निपुणैः पुराणैः कविः स चिन्तामणिरद्वितीयः ॥"

तस्य चायोनिरर्थः । स च त्रिधा लौकिकालौकिकभेदेन, तयोर्मिश्रत्वेन च । तत्र लौकिकः—

"मा कोशकारलतिके वह वर्णगर्वं किं डम्बरेण चणिके तव कौसुमेन ।

---

तन्वान इति । यो हि पुरुषः पुराणस्य प्राचीनस्य वस्तुनो विषयस्य अनन्यदृष्टत्वं स्वेनैव प्रादुर्भावितं नान्येनेति तन्वानः विस्तारयन् सन् अप्रसिद्ध्यादिहेतुभिः भ्रामयति जनान् भ्रान्तान् करोति सः भ्रामकनामा कविः ।

यश्चुम्बतीति । यः पुमान् स्वकीयेन हारिणा मनोहरेण वाक्येन परस्य अन्यस्य अर्थं विषयं स्तोकार्पितनवच्छायं अल्पार्पितनूतनकांतिं यथास्यात्तथा चुम्बति ग्रथ्नातीत्यर्थं सः कविश्चुम्बको मतः ।

परवाक्येनेति । यः केनापि अनिर्देश्येन चमत्कारिणा इत्यर्थः । सुमुल्लेखेन प्रतिभानेन परवाक्यार्थमन्यरचितश्लोकार्थमाकृष्य स्ववाचि निजे श्लोके निवेशयेत् स्थापयेत स कविः कर्षकः स्मृतः ।

अप्रत्यभिज्ञेयतयेति । यो मूलार्थं कारणभूतमर्थं द्रावयित्वा निष्कृष्य प्रच्याव्य वा अप्रत्यभिज्ञेयतया स एवायमर्थ इति बोधराहित्येन स्वे वाक्ये नवतां नूतनतां नयेत् प्रापयेत् सः कविर्द्रावको भवेत् ।

चिन्तासममिति । यस्य कवेः चिन्तासमं चिन्तयैव रसैकसूतिः रसप्रादुर्भावकः चित्राकृतिः सालङ्कारो निपुणै दक्षैरपि पुराणैराचार्यैरदृष्टपूर्वः अदृष्टचरः अर्थसार्थः पदार्थसमूहोऽभ्युदेति उत्पन्नो भवति । सोऽद्वितीयश्चिन्तामणिः कविः ।

तस्य चेति । तस्य चिन्तामणिकवेः अर्थः अयोनिः अवधानमात्रकारणः । सचार्थः त्रिधा त्रिप्रकारः । लौकिकालौकिकयोर्भेदेन प्रकारेण । तयोर्लौकिकालौकिकयोः समिश्रणतया च ।

पुण्ड्रेक्षुयष्टिरियमेकतरा चकास्तु या स्यन्दते रसमृतेऽपि हि यन्त्रयोगात् ॥"

अलौकिकः—"देवी पुत्रमसूत नृत्यत गणाः किं तिष्ठतेत्युद्भुजे
हर्षाद्भृङ्गिरिटावुदाहृतगिरा चामुण्डयालिङ्गिते ।
पायाद्वो जितदेवदुन्दुभिघनध्वानप्रवृत्तिस्तयो-
रन्योन्याङ्कनिपातजर्जरजरत्स्थूलास्थिजन्मा रवः ॥"

मिश्रः—"स्थिते कुक्षेरन्तर्मुरजयिनि निःश्वासमरुतो
जनन्यास्तन्नाभीसरसिजपरागोत्करमुचः ।
निपीताः सानन्दं रचितफणचक्रेण हलिना
समन्तादस्यासुः प्रतिदिवसमेनांसि भवतः ॥"

तेषां च चतुर्णामर्थानाम्—

चत्वार एते कथिता मयैव येऽर्थाः कवीनां हरणोपदेशे ।

---

तत्र अयोन्यर्थे लौकिको भेदो यथा—मा कोशकारेति । हे कोशकारलतिके ? वर्ण-गर्वं रूपविषयकाहङ्कारं मा वह नो कुरु । हे चणिके ? तव कौसुमेन पौष्पेण डम्बरेण औद्धत्येन किम् इयमेकतरा युवयोर्मध्ये एका एषा पुण्ड्रेक्षुयष्टिः चकास्तु शोभताम् । या यन्त्रयोगादृते यन्त्रसम्बन्धाद्विना रसं स्यन्दते क्षारयति । अयं कोशकारलतिकाच-णिकापुण्ड्रेक्षुयष्टीनां सापेक्षिकौन्नत्यरूपो लौकिकोऽर्थः कविना स्वयमुद्भावितः ।

अलौकिकोऽयोनिर्यथा—देवीति । प्राक्पञ्चमे व्याख्यातम् । देव्यादीनां स्वर्गीय-तयार्थस्य अलौकिकत्वम् ।

लौकिकालौकिकसङ्कीर्णो यथा—स्थिते इति । मुरजयिनि कृष्णे कुक्षेः मातुः गर्भः स्थिते सति तस्य कृष्णस्य यन्नाभी सरसिजम् । तस्य यः परागः मकरन्दः । तस्य उ-त्करं समूहं मुंचतीति ते । रचितं फणचक्रं येन तेन हलिना बलदेवेन सानन्दं सप्रेम निपीता जनन्या देवक्याः निष्श्वासवायव प्रतिदिवसं भवत एनांसि समन्तादस्यासुः प्रक्षिपन्तु । अत्र कृष्णस्य दिव्यत्वादलौकित्वम् , देवक्या मानुषीत्वाल्लौकिकत्वमर्थस्य ।

इदानीमर्थानां स्वमनीषाप्रादुर्भावितत्वं समुद्घाव्य तान् विभिनत्ति-तेषामिति । हरणोपदेशे अर्थहरणोपायव्याख्यानावसरे कवीनां कृते य एते चत्वारोऽर्थाः(१)मयैव

---

(१) प्रतिबिम्बकल्पादयोऽर्थाः ध्वन्यालोके निर्दिष्टाः परं तत्र प्रतिबिम्बकल्पालेख्यप्रख्यतुल्य-देहितुल्येति त्रय एव निर्दिष्टाः । परपुरप्रवेशप्रतिम एव केवलमनेनोद्भावितः । तथापि चत्वार एते कथितामयैवेति कथनं साहसमात्रम् । आनन्दवर्द्धनाद् ध्वन्यालोककाराच्चायमर्वाचीनः । एतच्च राजशेखरस्थानेन पदो न प्रतीयते ।

ध्वनिनातिगभीरेण काव्यतत्त्वप्रकाशिना आनवर्द्धनः कस्य नासीदानन्दवर्द्धनः । इति ।

प्रत्येकमष्टत्ववशाद्भवन्ति द्वात्रिंशता तेऽनुगताः प्रभेदैः ॥

तत्र प्रतिबिम्बकल्पविकल्पाः । स एवार्थः पौर्वापर्यविपर्यासाद्व्यस्तकः ।
यथा—"दृष्ट्वान्येभं छेदमुत्पाद्य रज्ज्वा यन्तुर्वाचं मन्यमानस्तृणाय ।
गच्छन्दध्रे नागराजः करिण्या प्रेम्णा तुल्यं बन्धनं नास्ति जन्तोः ॥"
अत्रार्थे—"निर्विवेकमनसोऽपि हि जन्तोः प्रेमबन्धनमशृङ्खलदाम ।
यत्प्रति प्रतिगजं गजराजः प्रस्थितश्चिरमधारि करिण्या ॥"
बृहतोऽर्थस्यार्द्धप्रणयनं खण्डम् ।

---

नान्येन कथिताः प्रोक्ताः, तेषां चतुर्णामर्थानां प्रत्येकमष्टत्ववशात् तेऽर्था द्वात्रिंशता प्रभेदैरनुगता भवन्ति । प्रतिबिम्बकल्पः१–व्यस्तक १ खण्ड २ तैलबिन्दु ३ नटनेपथ्य ४ छन्दोविनिमय ५ हेतुव्यत्यय ६ सङ्क्रान्तक ७ सम्पुट ८ भेदादष्टविधः । आलेख्यप्रख्यः २–समक्रम १ विभूषणमोष २ व्युत्क्रम ३ विशेषो ४ उत्तंस ५ नटनेपथ्यै ६ कपरिकार्य ७ प्रत्यापत्ति ८ भेदाददष्टविधः । तुल्यदेहितुल्यः ३–विषयपरिवर्त्त १ द्वन्द्वविच्छित्ति २ रत्नमाला ३ संख्योल्लेख ४ चूलिका ५ विधानापहार ६ माणिक्यपुञ्ज ७ कन्द ८ भेदादष्टप्रकारः । परपुरप्रवेशसदृशः ४–हुडुयुद्ध १ प्रतिकञ्चुक २ वस्तुसञ्चार ३ धातुवाद ४ सत्कार ५ जीवञ्जीवक ६ भावमुद्रा ७ तद्विरोधि ८ भेदादष्टधा । एवमेते चत्वारोऽर्थाः प्रत्येकमष्टतया योजनेन द्वात्रिंशत् भवन्ति ।

तत्र चतुर्णामर्थानां मध्ये प्रथमस्य प्रतिबिम्बकल्पस्य विकल्पा भेदा निर्दक्ष्यन्ते । स एव उभयत्रापि पद्ययोरेक एवार्थो वर्त्तते किन्तु पौर्वापर्यस्य विपर्यासाद् व्यत्ययात् व्यस्तकनामा भेदः ।

तदुदाहरणं यथा—दृष्ट्वेति । नागराजः गजराजः अन्येभं मत्तमितरं हस्तिनं दृष्ट्वा, तत्क्षण एव रज्ज्वाः छेदमुत्पाद्य बन्धनं त्रोटयित्वा यन्तुः नियन्तुरर्थात् आधोरणस्य । नियन्ता प्राजिता यन्तेत्यमरः । आधोरणा हस्तिपका इतिकोशः । वाचं वाक्यं तृणाय तुच्छं । तृणायेत्यत्र "मन्यकर्मण्यनादरे विभाषा प्राणिषु" इति कर्मणि चतुर्थी । मन्यमानो गच्छन् वाक्यमनालोचयन् गच्छन् करिण्या करेण्वा दध्रे । कुतएतदित्यत आह–प्रेम्णेति । जन्तोः प्राणिनः प्रेम्णा प्रियतया तुल्यं समं बन्धनं नास्ति ।

अत्रार्थे श्लोकान्तरं यथा—निर्विवेकेति । निर्विवेकं मनो यस्य तस्यापि किमुत सचेतस्यः जन्तोः प्राणिनः प्रेमबन्धनम्, शृङ्खलारहितं दाम रज्जुः । कथमित्यत आह–यदिति । यद्यस्मात् प्रतिगजं प्रतिद्वन्द्विभूतं हस्तिनं प्रति प्रस्थितश्चलितो गजराजः करिण्या इभ्या चिरमधारि अवरुद्धः । उभयोरनयोपद्ययोः स एव गजरूपोऽर्थः । एकत्र पूर्वार्द्धे अन्यत्र उत्तरार्द्धे उपात्तोऽतोत्र पूर्वापरीभावविपर्यासेन व्यस्तकनामा प्रतिबिम्बकल्पविकल्पः । निर्विवेकमनसोपीति जन्तुविशेषणेन पूर्वापेक्षया वैचित्र्यमपि सहृदयैरनुभूयते ।

बृहत इति । बृहतो महतोऽर्थस्य अर्द्धप्रणयनं खण्डं कृत्वा रचनं खण्डम् । यथा—

यथा—

"पुरा पाण्डुप्रायं तदनु कपिशिम्ना कृतपदं ततः पाकोद्रेकादरुणगुणसंवर्गितवपुः ।
शनैः शोषारम्भे स्थपुटनिजविष्कम्भविषमं वने वीतामोदं बदरमरसत्वं कलयति ॥"

अत्रार्थे-"पाकक्रियापरिचयप्रगुणीकृतेन संवर्गितारुणगुणं वपुषा निजेन ।
आपादितस्थपुटसंस्थितिशोषपोषादेतद्वने विरसतां बदरं बिभर्त्ति ॥"

संक्षिप्तार्थविस्तरेण तैलबिन्दुः ।

यथा—"यस्य तन्त्रभराक्रान्त्या पातालतलगामिनी ।
महावराहदंष्ट्राया भूयः सस्मार मेदिनी ॥"

अत्रार्थे—"यत्तन्त्राक्रान्तिमज्जत्पृथुलमणिशिलाशल्यवेल्लत्फणान्ते
क्लान्ते पत्यावहीनां चलदचलमहास्तम्भसम्भारसीमा ।

---

पुरेति । पुरा पूर्वं पाण्डुप्रायं पीतसंवलितशुक्लप्रायम्, तदनु उत्तरं कपिशिम्ना कृष्णपीतेन कृतपदं विहितस्थानम् । ततोनन्तरम् पाकोद्रेकात् पचनानुगुण्यात् अरुण-गुणेन कृष्णलोहितगुणेन । अरुणः कृष्णलोहितः इत्यमरमाला । सम्वर्गितं पूरितं वपुः शरीरं यस्य तत् । शनैः शोषारम्भे शोषणप्रारम्भे स्थपुटेषु निम्नोन्नतेषु निजविष्क-म्भेषु स्वविस्तारेषु विषमं कृशम् । अत एव वीतामोदं सौरभशून्यं वदरं वने अरसत्वं नीरसत्वं कलयति । प्राप्नोति ।

अत्रार्थे श्लोकान्तरं यथा—पाकेति । पाकस्य क्रियायाः परिचयेन सम्बन्धेन प्र-गुणीकृतं पुष्टं तेन निजेन स्वीयेन वपुषा शरीरेण सम्वर्गितः संहीकृतोऽरुणगुणो यस्मि-स्तत । शोषपोषात् शोषणाधिक्यात् । आपादिता प्राप्ता स्थपुटा निम्नोन्नता स्थिति-र्येन तत् एतद्वदरं वने विरसतां शुष्कतां विभर्त्ति धारयति ।

अनयोः पद्ययोरेकत्र वदरमाचूडमुपवर्णितम्, उत्तरत्र अर्द्धं तद्वर्णितम् । अतोत्र खण्डनामा प्रतिबिम्बकल्पभेदः ।

संक्षिप्तस्य अर्थस्य विस्तरेण प्रणयनं तैलविन्दुः एतन्नामको भेदः । यथा । यस्ये-ति । यस्य राज्ञः तन्त्रस्य सैन्यस्य भराक्रान्त्या भारप्राप्त्या पातालतलगामिनी अधोभुवनयायिनी मेदिनी पृथ्वी भूयः पुनः महावराहस्य महापोतस्य दंष्ट्रायाः । मातुः स्मरतीतिवत् कर्मणः शेषत्वविवक्षायां षष्ठी । तामित्यर्थः । सस्मार स्मृतवती

अत्रार्थे अस्मिन् संक्षिप्तार्थे विस्तरेण वर्णनमयः श्लोको यथा—यत्तन्त्रेति । यस्य राज्ञः तन्त्रस्य सैन्यस्य आक्रान्त्या आरोहणेन मज्जन्त्यो या पृथुला स्थूलाः मणिशिलाः । ता एव शल्यानि शङ्कवः तैर्वेल्लन् कम्पमानः फणान्तो यस्य तस्मिन् । अहीनां सर्पाणां पत्यौ स्वामिनि शेषे क्लान्ते श्रमेण म्लाने सति चलन्तो येऽचलाः त एव महा-

सस्मार स्फारचन्द्रद्युति पुनरवनिस्तद्धिरण्याक्षवक्षः-
स्थूलास्थिश्रेणिशाणानिकषणसितमप्याशु दंष्ट्राग्रमुग्रम् ॥"

अन्यतमभाषानिबद्धं भाषान्तरेण परिवर्त्यत इति नटनेपथ्यम् ।

यथा—"नेच्छइ पासासंकी काओ दिण्णं पि पहिअघरिणीए ।
ओहत्तकरयलोग्गलियवलयमज्झदिठि पिण्डम् ॥"

अत्रार्थे—"दत्तं पिण्डं नयनसलिलक्षालनाधौतगण्डं
द्वारोपान्ते कथमपि तया सङ्गमाशानुबन्धात् ।
वक्रग्रीवश्चलनतशिराः पार्श्वसञ्चारिचक्षुः
पाशाशङ्की गलितवलयं नैनमश्नाति काकः ॥"

---

स्तंभाः । तेषां सम्भारस्य धारणस्य सीमा मर्यादा चरमप्रदेशोऽवनिः पृथ्वी । तस्य पूर्वानुभूतस्य हिरण्याक्षस्य वक्षसः स्थूलानामस्थ्नां श्रेणिरेव शाणा कषणयन्त्रम् । तत्र निकषणेन घर्षणेन सितं धवलमत एव स्फारा विस्तीर्णा चन्द्रवद्द्युति यस्य तत् । उग्रमपि दंष्ट्राग्रम् आशु शीघ्रं पुनः सस्मार स्मृतवती । स्पष्टा सङ्गतिः ।

प्राकृतादिष्वन्यतमभाषायां निबद्धं प्रथितं वस्तु भाषान्तरेण अन्यभाषाय परिवर्त्यते विपरिणम्यते इति नटनेपथ्यं नाम प्रतिबिम्बकल्पप्रकारः । उदाहरणं यथा—नेच्छईति ।

नेच्छति पाशाशङ्की काको दत्तमपि पथिकगृहिण्या ।
अनवरतकरतलोद्गतवलयमध्यस्थितं पिण्डम् ॥

पाशाशङ्की जालमाशङ्कमानः काकः पथिकगृहिण्या पान्थवनितया दत्तमपि प्रापितमपि । अनवरतं निरन्तरम् । यदा ददाति तदैवेति नैरन्तर्यमुल्लिखितम् । करतलाद् हस्ताद् उद्गलितं पतितं यद्वलयं तन्मध्यगतं पिण्डम् नेच्छति । पतिः कदाऽऽमिष्यतीति पिपृच्छिषया प्रोषितभर्तृकया । दत्तं पिण्डं किन्तु तस्या विरहकृशतया पिण्डदानकाले पतन्तं वलयं जालमाशङ्कमानः काको नाश्नाति ।

अत्रार्थे संस्कृतभाषया परिवर्तितं पद्यं यथा—दत्तमिति । तया नायिकया सङ्गमस्याशायाः पतिमिलनप्रत्याशायाः अनुबन्धात् सम्बन्धात् द्वारोपान्ते गृहद्वारसमीपे कथमपि कृच्छ्रेण । नयनयोः सलिलेन अश्रुणा या क्षालना तया धौतौ गण्डौ यस्मिन् कर्मणि तद्यथा स्यात्तथा पिण्डं कवलम् दत्तम् । किन्तु वक्राग्रीवा यस्यासौ असरलगलः चलं नतं शिरो यस्यासौ चञ्चलनम्रमूर्धा पार्श्वे संचारि चक्षुर्यस्यासौ समीपप्रसारिनेत्रः । पाशमाशङ्कत इति पाशाशंकी जालभीतः काको वायसः गलितं वलयं यस्मिन् तमेनं पिण्डं नाश्नाति । अत्रापि पूर्वश्लोकार्थो निबद्धः केवलं भाषाभेदः ।

छन्दसा परिवृत्तिश्छन्दोविनियय: ।

यथा—"कान्ते तल्पमुपागते विगलिता नीवी स्वयं बन्धनात्
तद्वासः श्लथमेखलागुणधृतं किञ्चिन्नितम्बे स्थितम् ।
एतावत्सखि वेद्मि केवलमहं तस्याङ्गसङ्गे पुनः
कोऽसौ कास्मि रतं नु किं कथमिति स्वल्पापि मे न स्मृतिः ॥"

अत्रार्थे—

"धन्यास्तु याः कथयथ प्रियसङ्गमेऽपि विश्रब्धचाटुकशतानि रतान्तरेषु ।
नीवीं प्रति प्रणिहिते तु करे प्रियेण सख्यः शपामि यदि किञ्चिदपि स्मरामि ॥"

कारणपरावृत्त्या हेतुव्यत्यय: ।

---

छन्दसेति । छन्दसा वृत्तेन परिवृत्तिः परिवर्त्तनमर्थस्तु स एव यत्र वर्तते स छन्दोविनिमयः प्रतिविम्वकल्पकाव्यभेदः उदहरणं यथा—

कान्त इति। रकेलिपराणां सखीनां मध्ये रतिकालिकं निजवल्लभालापं कथितवतीः काश्चिदुपहसन्त्याः त्वमिदानीं निजसुरतवृत्तं श्रावयेति प्रेरितायाः उक्तिरियम् । अमरुकशतके पद्यमिदम् । हे सखि ? कान्ते वल्लभे तल्पं शयनमुपागते प्राप्ते सति नीवी वस्त्रग्रन्थिः स्वयमात्मनैव वन्धनात् विगलिता भ्रष्टा । तद्वासो नीवीवस्त्रं श्लथेन शिथिलेन मेखलाया गुणेन सूत्रेण धृतं सत् किंचिन्मनाङ् नितम्वे स्थितम् । एतावदेवाहं वेद्मि । पुनः तस्याङ्गसङ्गे कान्तस्य शरीरसम्पर्के जाते तु असौ कः वल्लभो वा अन्यो वा कास्मि काहम्, किं रतं नु निधुवनमेतत्, कथं केन प्रकारेण इतिस्वल्पापि स्मृतिर्मे मम नास्ति ।

अत्रार्थे छन्दसः परिवर्त्तनेन पद्यान्तरम् यथा—धन्यासीति । अत्रापि तदेव वृत्तं केवलं छन्दोविनिमयः । विज्जिकायाःपद्यमिदमिति शार्ङ्गधरपद्धतौ स्फुटम् । भोः सख्यः ? यूयं धन्याः स्थः । याः प्रियस्य नतु पत्युः सङ्गमेऽपि न तु साधारणे मिलनेऽपि तु स्वेच्छानुकूलप्राप्तौ । रतान्तरेषु न रतिप्रारम्भकाले न वा रतेरन्तसमये अपि तु रतानां मध्ये । तत्रापि नैकस्मिन् रते द्वयो रतयोः किन्तु वहुषु रतेषु । तत्रापि विब्धानां विश्वासपूर्वकाणां मुग्धतया व प्रथमरतौ नायिकाया अजातभावत्वात । चाटुकानां प्रियवाक्यानां नतु एकस्य द्वयो श्चाटुकयोर्वा । शतानि नतु एकं द्वौवा । कथयथ ब्रूथ अतो भवत्यो धन्याः । ममतु इत्थं वृत्तं वर्त्तते यत्—प्रियेण नीवीं प्रति करे प्रणिहिते प्रणिधानविषयीकृते नीव्यां करोऽर्पयितव्य इति संकल्पविषयीकृते सतीति यावत् न तु अर्पितं अर्पितत्वं तु वक्तुमेवाशक्यम् तथा सति अभिप्रायस्य लाघवं स्यात् । यदि किञ्चिदपि स्मरामि तदा शपामि शपथं करोमि । भवतीनामेव शपथः नाहं किमपि स्मरामीति भावः । किं पुनस्तादृशवाक्यमित्यपि शब्दार्थः ।

कारणेति । कारणस्य हेतोः परावृत्त्या अन्येन केनचित्कविना एकार्थे अन्यत्का-

यथा—"ततोऽरुणपरिस्पन्दमन्दीकृतरुचिः शशी ।
दध्रे कामपरिक्षामकामिनीगण्डपाण्डुताम् ॥"

अत्रार्थे—"समं कुसुमचापेन गर्भिणीगण्डपाण्डुना ।
उदयाद्रिशिरःसीम्नि निहितं पदमिन्दुना ॥"

दृष्टस्य वस्तुनोऽन्यत्र सङ्क्रान्तकम् ।

यथा—"स्नानार्द्रार्द्रैर्विधुतकवरीबन्धलोलैरिदानीं
श्रोणीभारः कृतपरिचयः पल्लवैः कुन्तलानाम् ।
अप्येतेभ्यो नभसि पततः पङ्क्तिशो वारिबिन्दून्
स्थित्वोद्ग्रीवं कुवलयदृशां केलिहंसाः पिबन्ति ॥"

अत्रार्थे—"सद्यःस्नातजपत्तपोधनजटाप्रान्तस्नुताः प्रोन्मुखैः

---

रणमुपन्यस्तम् । तदितरः कविस्तमेवार्थमन्येन कारणेनोपन्यस्यति तत्र हेतुव्यत्ययः प्रतिबिम्बकल्पकाव्यभेदः उदाहरणं यथा—तत इति । ततस्तस्मिन् समये । सार्वविभक्तिकस्तसिः । अरुणस्य अनूरोः सूर्यसारथेः न तु सूर्यस्येति भावपरिस्पंदेन किंचिच्चलनेन न तु पूर्णोदयेनेति भावः । मन्दीकृता विरुचीकृता निष्प्रभीसम्पादिता रुचिः कान्तिः यस्य स शशी चन्द्रः । कामेन स्मरेण परिक्षामा कृष्णा या कामिनी तस्याः गण्डवत् कपोलवत् पाण्डुतां पीतिमानं दध्रे धारयामास ।

अस्मिन्नर्थे द्वितीयं काव्यं यथा—सममिति । गर्भिण्या अन्तर्वत्न्या गण्डवत् कपोलवत् पाण्डुना पीतेन इन्दुना चन्द्रेण कुसुममेव चापं धनुर्यस्य तेन कामेन समं साकम् । उदयाद्रेः उद्गममहीधरस्य शिरःसीम्नि पदं चरणं निहितं स्थापितम् । अत्रेन्दुगतं पाण्डवं ( पूर्वत्र पद्ये कामकृशकामिनीकपोलेन उपमितम्, उत्तरत्र गर्भिणीगण्डेन उपमितम् ) एकत्र अस्तमनवेलाकृतम् । अपरत्र उदयनवेलाकृतम् । वर्त्तते इति कारणपरावृत्त्या पद्यप्रणयनम् ।

दृष्टस्य अन्यत्र क्वापि ज्ञातस्य वस्तुनः पदार्थस्य अन्यत्र विषयान्तरे संक्रमितिः सङ्क्रामणं संक्रान्तकम् । तदुदाहरणं यथा—स्नानार्द्रार्द्रैरिति । इदानीं स्नानाव्यवहितोत्तरं स्नानेनार्द्रार्द्रैरत्यन्तक्लिन्नैः । विधुता श्लथा या कवरी केशविन्यासः । अत एव लोलैः चञ्चलैः कुन्तलानां केशानां पल्लवैः प्रान्तैः कृतपरिचयो विहितसम्बन्धः । श्रोणिभारो वर्त्तते । एतेभ्योः कुन्तलपल्लवेभ्यः । अपिः सम्भावनायाम् । अपि कदाचित् । नभसि चञ्चूपल्लवान्तरालवर्त्तिन्याकाशे पंक्तिशः श्रेणिं बद्धा पततो गलतो वारिबिन्दून् जलकणान् कुवलयदृशां कुवलयाक्षीणां केलिहंसाः क्रीडाहंसा उद्ग्रीवं गलमुन्नमय्य पिबन्ति ।

अत्रार्थे पद्यान्तरं यथा-सद्यः स्नातेति । सद्यः तत्कालं स्नाता अभिषिक्ता जपन्तो-

पीयन्तेऽम्बुकणाः कुरङ्गशिशुभिस्तृष्णाव्यथाविक्लवैः ।
एतां प्रेमभरालसां च सहसा शुष्यन्मुखीमाकुलः
श्लिष्यन् रक्षति पक्षसम्पुटकृतच्छायः शकुन्तः प्रियाम् ॥"

उभयवाक्यार्थोपादानं सम्पुटः ।

यथा—"विन्ध्यस्याद्रेः परिसरनदी नर्मदा सुभ्रु सैषा
यादोभर्त्तुः प्रथमगृहिणीं यां विदुः पश्चिमस्य ।
यस्यामन्तः स्फुरितशफरत्रासहासाकुलाक्षी
स्वैरं स्वैरं कथमपि मया तीरमुत्तारितासि ॥"

यथा—"नाभीगुहाबिलविशच्चलवीचिजातमञ्जुध्वनिश्रुतिकणत्कलकुक्कुभानि ।
रेवाजलान्यविरलं ग्रहिलीक्रियन्ते लाटाङ्गनाभिरपराह्णनिमज्जनेषु ॥"

---

मनुजपं कुर्वाणा ये तपोधनाः । तेषां जटाप्रान्तेभ्यः सटापर्यन्तभागेभ्यः स्रुताः पतिता अम्बुकणाः । तृष्णायाः पिपासाया व्यथया पीडया विक्लवैर्व्याकुलैरत एव प्रोन्मुखैरूर्ध्वग्रीवैः कुरङ्गशिशुभिः मृगशावैः पीयन्ते । तथा प्रेम्णो भरेण अलसम् । सहसा ज्योतिषा ग्रीष्मेणेत्यर्थः । सहो बले ज्योतिषि चेति शब्दार्णवः । शुष्यन्मुखीम् क्षामकण्ठाम् । एतां प्रियां शकुन्तीं पक्षसम्पुटाभ्यां कृता च्छाया येन अत एव आकुलः शकुन्तः । श्लिष्यन् आलिङ्गन् रक्षति गोपायति । अत्र पद्ये पूर्वश्लोकोक्तं नारीणां स्नानादत्यन्तमार्द्रकेशप्रान्तेभ्यः पतद्बिन्दून् केलिहंसाः पिबन्ति इति वस्तु उत्तरश्लोके तपस्विनां स्नानार्द्रजटाप्रान्तेभ्यो गलदम्बुकणान् कुरङ्गशिशवः पिबन्तीत्येतदर्थे संक्रामितम् ।

उभयेति । उभयोर्द्वयोः श्लोकयोर्वाक्यार्थस्य एकत्र पद्य उपादानं ग्रहणं सम्पुटनामा प्रतिबिम्बकल्पविकल्पः ।

तदुदाहरणं यथा—विन्ध्यस्येति । हे सुभ्रु ? सा एषा विन्ध्यस्य एतन्नामकस्य अद्रेः पर्वतस्य परिसरभवा नदीपर्यन्तभूमिचारिणी सरित् नर्मदा रेवा वर्त्तते । यां नर्मदां पश्चिमस्य प्रतीच्यस्य यादोभर्त्तुः समुद्रस्य प्रथमगृहिणीं महिषीं विदुः जानन्ति । यस्यां सरिति अन्तर्मध्ये स्फुरितेभ्यः चञ्चलेभ्यः शफरेभ्यो मत्स्येभ्यः त्रासेन भयेन यो हासस्तेन आकुले कातरे अक्षिणी नेत्रे यस्याः सा त्वं स्वरं स्वैरं कथमपि कृच्छ्रात् मया तीरं तटं प्रति उत्तारितासि ।

नाभीति । नाभी एव गुहारूपं विलम् । तस्मिन् विशतांग च्छतां चलानां वीचिजातानां तरङ्गसमुदायानां मञ्जुध्वनेः मधुरध्वानस्य श्रुत्या आकर्णनेन क्वणन्तः शब्दायमानाः जलकुक्कुभा। जलकुक्कुटा यस्मिंस्तानि रेवाजलानि नर्मदानीराणि अपराह्णनिमज्जनसमयेषु सायन्तनस्नानवेलासु लाटाङ्गनाभिः । अविरलं निरन्तरं ग्रहिलीक्रि-

अत्रार्थं—"यद्वर्ग्याभिर्जगाहे गुरुशकुलकुलास्फालनत्रासहास-
व्यस्तोरुस्तम्भिकाभिर्दिशि दिशि सरितां दिग्जयप्रक्रमेषु ।
अम्भोगम्भीरनाभीकुहरकवलनोन्मुक्तिपर्यायलोल-
त्कल्लोलाबद्धमुग्धध्वनिचकितरणत्कुकुभं कामिनीभिः ॥"

सोऽयं कवेरकवित्वदायी सर्वथा प्रतिबिम्बकल्पः परिहरणीयः ।

यतः—"पृथक्त्वेन न गृह्णन्ति वस्तु काव्यान्तरस्थितम् ।
पृथक्त्वेन न गृह्णन्ति स्ववपुः प्रतिबिम्बितम् ॥"

॥ इति राजशेखरकृतौ काव्यमीमांसायां कविरहस्ये प्रथमेऽधिकणे शब्दार्थहरणोपायाः कविप्रभेदाः प्रतिबिम्बकल्पविकल्पस्य समीक्षा द्वादशोऽध्यायः ॥

---

यन्ते आविलीक्रियन्ते ।

अत्रत्यार्थयोर्द्वयोः कृते एकं पद्यं यथा—यद्वर्ग्येति । हे राजन् ? यद् यस्य भवतो दिशां जयप्रारम्भे दिशि दिशि प्रतिदिशम् । वर्ग्याभिः समानावस्थाशीलाभिः कामिनीभिः नायिकाभिः सरितां नदीनामम्भो जलं जगाहे आलोडयां चक्रे । किं भूताभिः कामिनीभिः । गुरूणां महतां शकुलानां मत्स्यानां कुलस्य वृन्दस्य आस्फालनात् स्फुरणात् यौ हासत्रासौ ताभ्यां व्यस्ता उरुस्तम्भिका यासां ताभिः । किं भूतमम्भः गम्भीराया नाभ्याः कुहरस्य गुहाया ये कवलनोन्मुक्ती । तयोः पर्यायेषु लोलन्तो ये कल्लोलास्तरङ्गाः । तैराबद्धैः कृतैर्मुग्धध्वनिभिः चकिताः साश्चर्याः अत एव रणन्तः शब्दायमाना कुकुभा यस्मिन् तत् ।

अत्र पूर्वयोरुभयोः श्लोकयोः गतस्य स्फुरितशफरत्रासहासाकुलाक्षीत्यस्य नाभीगुहाविलविशृङ्खलवीचिजातेत्यादिकस्य च वाक्यस्य अर्थमुपादाय यद्वर्ग्याभिरिति श्लोको निर्मितः ।

सोयमिति । सोयं पूर्वनिर्दिष्टः, प्रतिबिम्बकल्पो मार्गः कवेः कवयितुरकवित्वदायी कवित्वोपहासकारी अतः सर्वथा दूरतः परिहरणीयः परित्याज्यः ।

यत उक्तञ्च । पृथक्त्वेनेति । काव्यान्तरस्थितं द्वितीयकाव्यस्थितं तदेव वस्तु पृथक्त्वेन पार्थक्येन न गृह्णन्ति । यथा प्रतिबिम्बितं दर्पणादौ प्रतिफलितं स्ववपुः स्वशरीरं पृथक्त्वेन पृथक्तया न गृह्णन्ति न स्वीकुर्वन्ति ।

इति साहित्याचार्याहिताग्निश्रीमधुसूदनशर्मणः कृतौ मधुसूदनीविवृतौ द्वादशोध्यायः सम्पूर्णः ।

॥ श्रीः ॥

# त्रयोदशोऽध्यायः ।

# अर्थहरणेष्वालेख्यप्रख्यादिभेदाः ।

आलेख्यप्रख्यपरिसङ्ख्याः । सदृशसञ्चारणं समक्रमः ।

यथा—

"अस्ताद्रिवेश्मनि दिशो वरुणप्रियायास्तिर्यक्कथञ्चिदपयन्त्रणमास्थितायाः। १ ।
गण्डैकपार्श्वमिव कुङ्कुमपङ्कचुम्बि बिम्बं रुचामधिपतेरगुणं रराज ॥"

यथा च—"प्राग्दिशः प्रतिकलं विलसन्त्याः कुङ्कुमारुणकपोलतलेन ।
साम्यमेति कलितोदयरागः पश्य सुन्दरि तुषारमयूखः ॥"

---

॥ श्रीः ॥

सकलमनोरथदातॄन् गुरुपादान् संप्रणम्यादौ ।
मधुसूदनो विवृणुते ह्यालेख्यप्रख्यपरिसंख्याः ॥

अथार्थहरणोपायप्रकारेषु द्विविधान्ययोनेः सावान्तरविकल्पं प्रतिबिम्बकल्पं नाम विकल्पं द्वादशेऽध्याये परिकल्प्येदानीं प्रवर्त्तमानेऽध्याये आलेख्यप्रख्यमाख्यातुमुपक्रमते आलेख्येति। आलेख्यप्रख्यस्य परिसंख्याः गणना भेदा इतियावत् आख्यायन्ते। तत्र सदृशस्य तुल्यस्य संचारणं संक्रामणं समक्रमो नाम आलेख्यप्रख्यस्य प्रथमो भेदः।

अस्ताद्रीति। अस्ताद्रिरूपे वेश्मनि सद्मनि तिर्यक् अपयन्त्रणम् अनियमम् कथञ्चित्स्वेच्छयेतिभावः। आस्थितायाः वरुणप्रियायाः प्रतीच्या दिशः कुङ्कुमस्य केशरस्य पंकस्तं चुम्बतीति तत् सकेशरतिलकमिति भावः। गण्डस्य एकपार्श्वमिव एकप्रदेश इव रुचां कान्तीनाम् अधिपतेः चन्द्रमसो बिम्बम्। अगुणम् ईषद्गुणम्। अत्र नञ ईषदर्थकता। अनुदरा कन्येतिवत्। गण्डैक पार्श्वमिव कुंकुमपङ्कचुम्बीत्यनेनाऽपि गुणस्येषत्वं प्रतीयते।

नञर्थाश्च—

तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता।
अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्तिताः ॥ इति।

यथा स्यात्तथा रराज शुशुभे।

प्राग्दिश इति। हे सुन्दरि? कलितः स्वीकृतः उदयकालिको रागो रक्तिमा येन स तुषारमयूखो हिमकरः, प्रतिकलं प्रतिक्षणं विलसन्त्याः क्रीडन्त्याः, अतएव कपोलारुणयम् प्राग्दिशः प्राच्याः कुङ्कुमेन अरुणं रक्तं यत् कपोलतलं तेन साम्यं तुल्यतामेति

अलङ्कृतमनलङ्कृत्याभिधीयत इति विभूषणमाषः ।

यथा—

"कुवलयसिति मूले बालचन्द्राङ्कुराभं तदनु खलु ततोऽग्रे पाकपीताम्रपीतम् ।
अभिनवरविरोचिद् धूमधूम्रं शिखायामिति विविधविकारं दिद्युते दैपमर्चिः॥"

अत्रार्थे—"मनाङ् मूले नीलं तदनु कपिशोन्मेषमुदरे
ततः पाण्डु स्तोकं स्फुरदरुणलेखं च तदनु ।
शिखायामाधूम्रं धृतविविधवर्णक्रममिति
क्षणार्दर्चिर्दैपं दलयति तमः पुञ्जितमपि ॥"

क्रमेणाभिहितस्यार्थस्य विपरीताभिधानं व्युत्क्रमः ।

यथा तत्रैव—"श्यामं शिखाभुवि मनागरुणं ततोऽधः
स्तोकावपाण्डुरघनं च ततोऽप्यधस्तात् ।

---

याति इति त्वं पश्य । अनयोरुदाहरणयोः क्रमस्य समत्वं स्पष्टमेव ।

यत्र अलंकृतं सालंकारं वस्तु अनलंकृत्य अभिधीयते स विभूषणमोषो नाम आलेख्यप्रख्यस्य द्वितीयो भेदः ।

कुवलयेति । कश्चित् प्रदीपस्य रूपं वर्णयति । मूले प्रथमं वर्तिकायां ज्वलनप्रदेशे कुवलयवत् सिति नीलं; तदनु पुनः बालचन्द्रस्याङ्कुरवदाभा यस्येति तत् । तत उपरीत्यर्थः पाकेन पीतो य आम्रश्चूतस्तद्वत् पीतम् पीतवर्णम् । अग्रे उपरीति भावः अभिनवरवेर्बालार्कस्य रोचिरिव रोचिर्यस्य तत् । ततः शिखायां धूमवद्धूम्रं वर्त्तते इति सर्वत्राध्याहार्यम् । इत्येवं विविधो विकारो यस्मिन् तदनेकस्वरूपं दैपं दीपोत्पन्नमर्चीः रोचिः दिद्युते । दिदीपे अत्र सर्वत्र पदेषूपमा लुप्ता सती वर्त्तते ।

एतत्पद्यार्थमवलम्ब्य पद्यान्तरविरचना यथा-मनागिति । मूले मनाक् किञ्चिन्नीलं तदनु तदुत्तरमुदरे मध्ये कपिशवर्णस्य उन्मेष आविर्भावो यत्र तत् । ततः स्तोकमल्पं पाण्डु पीतम् । तदनु ततः पश्चात् स्फुरन्ती अरुणा रक्ता लेखा राजिर्यस्मिंस्तत् । शिखायामाधूम्रं धूम्रवर्णयुतम् । इति एवं धृतः विविधो वर्णानां नीलपीतादीनां क्रमः परिपाटी येन तत् । दैपं प्रदीपोद्भवमर्चिः ज्योतिः क्षणात् पुञ्जितमपि समूहीभूतमपि तमः अन्धकारं दलयति विशीर्णयति निराकरोतीति भावः ।

पूर्वत्र पद्ये लुप्तोपमा अत्र च तस्या अभावः ( किन्तु उभयत्रापि दैपार्चीरूपस्यैव वस्तुनो वर्णनम् ) अत एतद्विभूषणमोषोदाहरणम् ।

क्रमेणेति । यत्र क्रमेण यथाक्रममभिहितस्योक्तस्य अर्थस्य विपरीततया व्युत्क्रमेणा भिधानं कथनं स व्युत्क्रमो नाम आलेख्यप्रख्यस्य तृतीयो भेदः ।

यथा तत्रैव उक्तपद्ययोरर्थ एव व्युत्क्रमत्वम् । श्याममिति । सर्वतः प्रथमं शिखा-

आपिञ्जरं तदनु तस्य तले च नील-
मन्धं तमः पटलमर्दति दैपमर्चिः ॥"

सामान्यनिबन्धे विशेषाभिधानं विशेषोक्तिः ।

यथा—

"इत्युद्गते शशिनि पेशलकान्तदूतीसंलापसञ्चलितलोचनमानसाभिः ।
अग्राहि मण्डनविधिर्विपरीभूषाविन्याससहासितसखीजनमङ्गनाभिः ॥"

अत्रार्थे—"चकार काचित्सितचन्दनाङ्के काञ्चीकलापं स्तनभारपृष्ठे ।
प्रियं प्रति प्रेषितचित्तवृत्तिर्नितम्बबिम्बे च बबन्ध हारम् ॥"

उपसर्जनस्यार्थस्य प्रधानतायामुत्तंसः ।

---

भुवि शिखायां श्यामम् कृष्णम् । ततोऽधः मनाक् किंचित् अरुणं रक्तम् । ततोऽप्यधस्तात् स्तोकमल्पम् अवपाण्डुरघनम् पीतसघनम् । तदनु तत उत्तरम् आपिञ्जरं कपिशवर्णम् श्वेतमितियावत् । तस्य आपिञ्जरवर्णस्य च तले नीलं दैपमर्चिः प्रदीपज्योतिः अन्धं कृष्णं तमःपटलं अन्धकारसमूहमर्दति विदलति । प्राक्पद्ययोः दैपार्चिषः क्रमेण वर्णनमत्र च तस्य व्युत्क्रमेण वर्णनम् ।

सामान्यस्य निबन्धे उल्लेखे कर्त्तव्ये विशेषस्य वस्तुनः अभिधानं कथनं विशेषोक्तिर्नाम आलेख्यप्रख्यस्य चतुर्थो भेदः । तदुदाहरणं यथा—

इत्युद्गत इति । इत्येवं प्रकारेण शशिनि चन्द्रमसि उद्गते उदयं प्राप्ते सति पेशलो मनोहरः कान्तस्य वल्लभस्य दूत्याः संलापः त्वद्विरहदावाग्निर्मां परितापयति आगत्यं तं निर्वाप्य उज्जीवय त्वमेव शरणं ममेति तत्संदेशकथनम् तेन संचलितानि लोचने मानसं च यासां ताभिः । अङ्गनाभिः स्त्रीभिः । विपरीतो यो भूषायाः विन्यासो धारणं तेन हासितः उपहासितः सखीजनो यस्मिन् कर्मणि तत् यथा स्यात तथा मण्डनविधिः प्रसाधनकृत्यमग्राहि स्वीकृतः ।

चकारेति । काचिन् नायकं संगन्तुं त्वराकुलत्वेन विपरीतमात्मानं साधयित्री नवोढा सितस्य चन्दनस्य अंको यस्मिंस्तस्मिन् स्तनभारपृष्ठे काञ्चीकलापं संयोजयांचकार । तथा नितम्बबिम्बे हारं बबन्ध विन्यास । कुत एतदित्यत आह प्रियमिति । प्रियं प्रेयांसं प्रति प्रेषिताचित्तवृत्तिर्यया यस्या वा सा प्रियासक्तमानसतया भूषणयोजनस्य युक्तायुक्तत्वेऽविमर्शं इति विमर्शः ।

पूर्वत्र सायन्तनीनशृङ्गारविधौ प्रियं प्रति प्रेरितचित्तवृत्तिया भूषासंयोजनं विपरीत तया कृतमिति यत्सामान्येन उक्तं तदेवात्र हारसंयोजनोपयुक्तस्तनयोः काञ्चीकलापस्य, तद्योग्यनितम्बे हारस्य च संयोजनं कृतमिति विशिष्य उक्तम् ।

उपसर्जनस्य गुणीभूतस्य अर्थस्य वाच्यस्य प्रधानतायां सत्यामुत्तंसनाम्नी

यथा--"दीपयन्नथ नभः किरणौघैः कुङ्कुमारुणपयोधरगौरः ।
हेमकुम्भ इव पूर्वपयोधेरुन्ममज्ज शनकैस्तुहिनांशुः ॥"

अत्रार्थे--"ततस्तमः श्यामलपट्टकञ्चुकं विपाटयत्किञ्चिददृश्यतान्तरा ।
निशातरुण्याः स्थितशेषकुङ्कुमस्तनाभिरामं सकलं कलावतः ॥"

तदेव वस्तूक्तिवशादन्यथा क्रियत इति नटनेपथ्यम् ।

यथा--"आननेन्दुशशलक्ष्मकपोले सादरं विरचितं तिलकं यत् ।
तत्प्रिये विरचितावधिभङ्गे धौतमीक्षणजलैस्तरलाक्ष्याः ॥"

अत्रार्थे--"शोकाश्रुभिर्वासरखण्डितानां सिक्ताः कपोलेषु विलासिनीनाम् ।

---

आलेख्यप्रख्यस्य पंचमो भिदा । सोदाह्रियते यथा-दीपयन्निति । अथ सूर्यास्तमनानन्तरं किरणानामोघाः समूहास्तैः नभः आकाशं दीपयन् प्रकाशयन् कुङ्कुमेनारुणो यः पयोधरस्तद्वद्गौरः सितः तुहिनांशुः हिमांशुः पूर्वपयोधेः प्रागुदधेः सकाशात् हेमकुम्भ इव सुवर्णघटो यथा उन्ममज्ज निश्चक्राम उदयं गत इति भावः ।

ततस्तम इति । ततो निशाप्रवृत्त्यनन्तरं तम एव श्यामलं पट्टकञ्चुकं पट्टवस्त्रनिर्मितं कञ्चुकं तत् विपाटयत् विनाशयत् कलावतः शकलं चद्रमसः खण्डं निशातरुण्या रात्रिनायिकायाः स्थितं विद्यमानं शेषकुङ्कुमं स्वकर्तृककुचमर्दनावशिष्टकाश्मीरं यत्र एवंभूतो यः स्तनस्तद्वदभिरामं सुन्दरं यथा स्यात्तथा अन्तरा आकाशस्य मध्ये किञ्चित्स्वल्पमदृश्यत दृष्टमभूत् ।

पूर्वत्र पद्ये कुङ्कुमारुणपयोधरगौरस्तुहिनांशुरित्युक्त्या तुहिनांशोः प्राधान्यं पयोधरगौरत्वस्य विशेषणत्वम् । इदानीन्तु कलावच्छकलोद्देश्येन स्तनाभिरामत्वं विहितमिति उद्देश्यविधेयभावेन विशेषणीभूतस्तनाभिरामस्य प्राधान्यम् ।

तदेवेति । तदेव एकमेव वस्तु अर्थः उक्तिवशात् कथनपरिपाट्या अन्यथा अर्थात् भिन्नं क्रियते इत्यतः तन्नटनेपथ्यम् । नटस्य नेपथ्यमिव नेपथ्यं श्रृंगारो यत्रेति व्युत्पत्या नूतनवेषभूषादिमन्नामा षष्ठः प्रकार आलेख्यप्रख्यस्य । तदुदाहरणं यथा-

आननेन्दुशशलक्ष्मेति । कयाचिन्नायिकया कपोले गण्डस्थले आननमेवेन्दुस्तस्मिन् शश इव लक्ष्म चिह्नं यत्तिलकं सादरं प्रेमातिशयेनेत्यर्थः । विरचितं सम्पादितम् । तत्तिलकं प्रिये प्रेयसि । विरचितोऽवधेर्भङ्गो येन तस्मिन् जाते सति तरलाक्ष्याः चञ्चलनयनायाः ईक्षणजलैः नेत्रनीरैः धौतम् प्रक्षालितम् । तस्मिन्समयेऽहमागमिष्ये इति कृतेऽपि संकेते वल्लभो नागत इत्यवमानशोकार्त्तनायिकारोदनाश्रुभिस्तिलकस्य धावनं जातमिति भावः । अत्र विप्रलब्धा तरलाक्षी वर्त्तते । यथोक्तम्

प्रियः कृत्वाऽपि संकेतं यस्या नायाति संनिधिम् ।
विप्रलब्धा तु सा ज्ञेया नितान्तमवमानिता । इति ।

एतदेव वस्तूक्त्यान्यथाकृत्य दर्श्यते यथा-शोकाश्रुभिरिति । वासरखण्डितानां

कान्तेषु कालात्ययमाचरत्सु स्वल्पायुषः पत्रलता बभूवुः ॥"

परिकरसाम्ये सत्यपि परिकार्यस्यान्यथात्वादेकपरिकार्यः ।

"अव्याद्गजेन्द्रवदनः स इमां त्रिलोकीं यस्याद्गतेन गगने महता करेण ।

मूलावलग्नसितदन्तबिसाङ्कुरेण नालायितं तपनबिम्बसरोरुहस्य ॥"

अत्रार्थे—"सरलकरदण्डनालं गजवपुषः पुष्करं विभाजयति ।

मूलबिसकाण्डभूमौ यत्राभूदेकदंष्ट्रैव ॥"

---

अष्टावसत्सणाम् । निष्ठेति शास्त्रेण खण्डितेत्यस्य पूर्वनिपातो भवितुं न्याय्यस्तथापि आहिताग्न्यादित्वकल्पनात्साधुः । अद्य तदा आवयोः सम्मेलनसंकेतः इति कृतं परन्तु नागतम् । एवं चात्र वञ्चिता नायिका नतु खण्डिता इत्यतः खण्डितात्र नायिका इति तु न भ्रमितव्यम् । यत्र प्रियः अन्यसंयोगचिह्नितः सन् आगच्छति सा खण्डिता यत्र तु आगच्छत्येव नहि सा वञ्चिता ( विप्रलब्धा ) यथोक्तम्

पार्श्वमेति प्रियो यस्याः अन्यसंयोगचिह्नितः
सा खण्डितेति कथिता धीरैरीर्ष्या कषायिता । इति ।
प्रियः कृत्वापि सकेतं यस्या नायाति सन्निधिम्
विप्रलब्धा तु सा ज्ञेया नितान्तमवमानिता । इति ।

विप्रलब्धानां विलासिनीनाम् रमणीनां कपोलेषु गण्डेषु विद्यमानाः पत्रलताः पत्रलेखाः कान्तेषु प्रियेषु कालात्ययं समयातिपातमाचरत्सु कुर्वत्सु सत्सु शोकाश्रुभिः सिक्ताः प्रक्षालिता सत्यः स्वल्पायुषो विशीर्णा बभूवुर्जाता ।

अत्रोभयश्लोकयोरेक एवार्थः किन्तु एकत्र ईक्षणजलैस्तिलकं धौतम् अपरत्र शोकाश्रुभिः सिक्ता अत एव स्वल्पायुषः पत्रलता बभूवुरिति भिन्न इव भाति ।

परिकरेति । परिकरस्य उपायस्य अलंकारस्येत्यर्थः । साम्ये तौल्ये सत्यपि जातेऽपि परिकार्यस्य उपेयस्य अलंकार्यस्येत्यर्थः । अन्यथात्वात् भिन्नत्वाद् एकेन परिकार्यः एकपरिकार्य इति आलोच्यप्रत्यस्य सप्तमो भेदः उदाहरणं यथा—

अव्यादिति । स पुराणादिप्रसिद्धो गजेन्द्रवदनो गणपतिः इमां त्रिलोकीम् अव्यात् पायात् । यस्य गणपतेः गगने आकाशे उद्गतेन उत्थितेन । मुलेऽवलग्नः सम्बद्धः सितदन्तः श्वेतदशन एव विसाङ्कुरो यस्मिन् तेन महता विशालेन करेण शुण्डादण्डेन तपनबिम्ब एव सूर्यबिम्ब एव सरोरुहम् तस्य नालायितम् पद्मदण्ड इवाचरितम् ।

एतमेवार्थमभिप्रेत्य परिकार्यभेदेन श्लोकान्तरं यथा सरलेति । सरलः करदण्ड एव शुण्डादण्ड एव नालं यस्य तत् । गजवपुषः गजाननस्य पुष्करं हस्ताग्रमेव पुष्कर कमलं जयति । कीदृशस्य गजवपुषः विभोर्व्यापकस्य । यत्र मुलाबसकाण्डभूमौ मूला·

विकृतेः प्रकृतिप्रापणं प्रत्यापत्तिः ।

यथा--"रविसङ्क्रान्तसौभाग्यस्तुषारावृतमण्डलः ।
निःश्वासान्ध इवादर्शश्चन्द्रमा न प्रकाशते ॥"

अत्रार्थे—"तस्याः प्रतिद्वन्द्विभवाद्विषादात्सद्यो विमुक्तं मुखमाबभासे ।
निःश्वासबाष्पापगमे प्रपन्नः प्रसादमात्मीयमिवात्मदर्शः ॥"

ता इमा आलेख्यप्रख्यस्य भिदाः । सोऽयमनुग्राह्यो मार्गः ।

आहुश्च—"सोऽयं भणितिवैचित्र्यात्समस्तो वस्तुविस्तरः ।
नटवद्वर्णिकायोगादन्यथात्वमिवाच्छति ॥"

---

वलग्नविसकाण्डस्थाने एकदंष्ट्रा एवाभूत् । गजाननस्य "अप्येकदन्तहेरम्बलम्बोदरगजाननाः" इति कोषप्रामाण्यादेकदन्तत्वम् । पूर्वत्र तपनबिम्बे सरोरुहत्वमारोपितम् । अत्र च निजहस्ताग्रे तत्वमारोपितम् । अन्यत्समं समम् । तथाचात्र तपनबिम्बहस्ताग्रयोः परिकार्ययोर्भेदः परिकरसमुदायस्तु स एवेति लक्षणसंगतिः ।

विकृतेः विकृतभूतस्यार्थस्य प्रकृतौ नैसर्गिकावस्थायां प्रापणं स्थापनं प्रत्यापत्तिः । रवाविति । रवौ सूर्ये संक्रान्तं सौभाग्यं यस्यः स तुषारेणावृतं मण्डलं यस्य सः चन्द्रमाः निःश्वासेन श्वासपवनेनान्धोऽप्रकाश आदर्शो दर्पण इव न प्रकाशते । अत्र अन्धशब्दो मुख्यार्थे दृष्टिहीनरूपे वाधितः सन् चाकचिक्याभावरूपमर्थं प्रकाशयति तथा चात्र अत्यन्तनिरस्कृतवाच्यध्वनिः ।

तस्या इति । प्रतिद्वन्द्विनः प्रतियोगिनो भवात् जन्यात् विषादात् दुःखात् सद्यो झटिति विमुक्तं तस्या नायिकाया मुखमाबभासे शुशुभे । क इव । निःस्वासवाष्पस्य अपगमे दूरीभूते सति आत्मीयं स्वीयं प्रसादं स्वच्छतां प्रपन्नः प्राप्तः । आत्मा दृश्यते यस्मिन्नसौ आत्मदर्श इव दर्पण इव । निःश्वासवाष्पप्राप्तिरूपविकारेण दर्पणे आन्ध्यं प्रसक्तम् तस्यापगमे तु प्रसादः । इति पूर्वत्र पद्ये दर्पणस्य अन्धत्वं विकृतिः । उत्तरत्र प्रसादः प्रकृतिः तयोश्च पूर्वोत्तरयोः पद्ययोः सत्वम् ।

ताः इमा पूर्वपद्येषु निर्दिष्टाः आलेख्यप्रख्यस्य काव्यस्य भिदाः भेदाः निर्दिष्टाः । सोयमालेख्यप्रख्यात्मको मार्गः पन्थाः अनुग्राह्यः स्वीकार्यः ।

आहुश्चेति बहुवचनेन प्रामाणिकानां पद्यमेवावतारयति—सोयमिति । सोऽयं काव्यादिषूपात्तः समस्तो वस्तुविस्तरः पदार्थसंभारः भणितेः उक्तेः वैचित्र्यात् वैलक्षण्यात् वर्णिकायाः रूपादेः योगात् सम्बन्धात् नटवत् अन्यथात्वं भिन्नत्वमिव ऋच्छति गच्छति । नटो यथा नानावेषभूषादेः संयोगादेकोपि नानात्वं भजते तथायं काव्योपात्तो वस्तुविस्तरोपीति भावः ।

अथ तुल्यदेहितुल्यस्य भिदाः। तस्यैव वस्तुनो विषयान्तरयोजनादन्यरूपापत्तिर्विषयपरिवर्त्तः।

यथा--"ये सीमन्तितगात्रभस्मरजसो ये कुम्भकद्वेषिणो
ये लीढाः श्रवणाश्रयेण फणिना ये चन्द्रशैत्यद्रुहः।
ते कुप्यद्गिरिजाविभक्तवपुषश्चित्तव्यथासाक्षिणः
स्थाणोर्दक्षिणनासिकापुटभुवः श्वासानिलाः पान्तु वः॥"

अत्रार्थे--"ये कीर्णक्वथितोदराब्जमधवो ये म्लापितोरःस्रजो
ये तापात्तरलेन तल्पफणिना पीतप्रतापोज्झिताः।
ते राधास्मृतिसाक्षिणः कमलया सासूयमाकर्णिता
गाढान्तर्दवथोः प्रतप्तसरलाः श्वासा हरेः पान्तु वः॥"

द्विरूपस्य वस्तुनोऽन्यतररूपोपादानं द्वन्द्वविच्छित्तिः।

---

अथेति। अथ आलेख्यप्रख्यभेदकथनानन्तरम् तुल्यदेहितुल्यभिदाः कथ्यन्ते। तस्यैवेति। तस्यैव वस्तुनो विषयान्तरस्य प्रमेयान्तरस्य योजनात्सम्बन्धात् अन्यस्य रूपस्य आपत्तिः प्राप्तिः यत्र भवति स विषयपरिवर्त्तः।

ये सीमन्तितेति। स्थाणोः शिवस्य दक्षिणस्या नासिकाया पुटाद्भवन्तीति ते वक्ष्यमाणगुणविशिष्टाः श्वासानिला निःश्वासवायवो वो युष्मान् पान्तु रक्षन्तु। ते के। ये, सीमन्तितानि केशवेशत्वं गतानि गात्रभस्मनां रजांसि येभ्यस्ते, पुनः कीदृशाः ये, कुम्भकाख्यं प्राणामायामं द्विषन्तीति ते। पुनः कीदृशाः श्रवणमाश्रयो यस्य तेन फणिना सर्पेण लीढा आस्वादिताः। पुनः कीदृशाः ये, चन्द्रस्य शैत्यं शीतलत्वं दुह्यन्तीति ते। पुनः कीदृशाः ये, कुप्यन्ती या गिरिजा पार्वती तया विभक्तं वपुः शरीरं येषां ते। पुनः कीदृशाः ये, चित्तस्य मनसः व्यथाया साक्षिणः।

अयमेव हरगौर्य्योः सम्बद्धः श्वासानिलरूपोर्थः लक्ष्मीनारायणरूपस्य विषयान्तरस्य योजनादन्यथात्वं गतो यथा—ये कीर्णेति। हरेः श्रीकृष्णस्य ते वक्ष्यमाणगुणविशिष्टाः श्वासाः वो युष्मान् पान्तु रक्षन्तु। ते के। ये, कीर्णः इतस्ततो निपतितः क्वथितोदराब्जस्य मधुर्मकरन्दो येभ्यस्ते। पुनः के म्लापिता उरःस्रक् येभ्यस्ते। पुनः के ये तापात् ऊष्मणः सकाशात् तरलेन विसंष्ठुलेन तल्पभूतेन फणिना सर्पेण पूर्वं पीताः प्रतीपं विनिमयेनोज्झितास्त्यक्ताः। पुन कीदृशाः, राधायाः स्मृतेः साक्षिणः प्रतिभुवः अत एव कमलया लक्ष्म्या सासूयं सेर्ष्यं सदुःखमाकर्णिताः श्रुताः। पुनः कीदृशाः गाढो गभीरो योऽन्तर्दवथुरन्तर्दाहः तस्मात् प्रतप्ता अत एव सरलाः लम्बायमानाः।

द्विरूपस्येति। यत्र द्विरूपस्य द्व्यात्मकस्य वस्तुनोऽन्यतरस्य। अन्यतमस्येति

यथा--"उत्क्लेशं केशबन्धः कुसुमशररिपोः कल्मषं वः स मुष्या-
द्यत्रेन्दुं वीक्ष्य गङ्गाजलभरलुलितं बालभावादभूताम् ।
क्रौञ्चारातिश्च फाण्टस्फुरितशफरिकामोहलोलेक्षणश्रीः
सद्यः प्रोद्यन्मृणालीग्रहणरसलसत्पुष्करश्च द्विपास्यः ॥"

अत्रार्थे--"दिश्याद्धूर्जटिजूटकोटिसरिति ज्योत्स्नालवोद्भासिनी
शाशाङ्की कलिका जलभ्रमिवशाद्द्राग् दृष्टनष्टा सुखम् ।
यां चञ्चत्सफरीभ्रमेण मुकुलीकुर्वन्फणालीं मुहु-
र्मुह्यल्लक्ष्यमहिर्जिघृक्षतितमामाकुञ्चनप्राञ्चनैः ॥"

पूर्वार्थानामर्थान्तरैरन्तरणं रत्नमाला ।

---

अशुद्धः पाठः । यतो डतमज् प्रत्ययस्तत्रैव भवति यत्र बहूनां विषयत्वं स्यात् अत्र तु द्विरूपस्येत्युक्त्या द्वयोरेव निर्धारणमतो डतरचा भाव्यम् । रूपस्य वर्णस्योपादानं ग्रहणं स द्वन्द्वविच्छित्तिः ।

उत्क्लेशमिति । कुसुमान्येव शरा यस्य तस्य कामरिपोः शिवस्य स वक्ष्यमाणगुणविशिष्टः केशबन्धो जटाजूटः । वो युष्माकम् । उत्पन्नः क्लेशो दुःखं येन तत् कल्मषं पापं मुष्यात् चोरयेत् नाशयेदित्यर्थः । यत्र केशबन्धे जटाजूटे गङ्गायाः जलभरेण लुलितं लोलन्तमिन्दुं चन्द्रमसं वीक्ष्य दृष्ट्वा बालभावात् क्रौञ्चारातिद्विपास्यौ इत्थमभूताम् जातौ । इत्थमिति कथम् । क्रौञ्चारातिः कार्त्तिकेयः फाण्टं यथा स्यात्तथा अनायासं यथास्यात्तथा स्फुरिताः चञ्चलाः याः शफरिकाः । तासु मोहेन लोला ईक्षणश्रीः दृष्टिशोभा यस्यासौ तथाभूतः । द्विपास्यो गजाननः सद्यस्तत्क्षणे प्रोद्यन्त्या उद्गच्छन्त्या मृणाल्या बिसिन्याः ग्रहणे उपादाने यो रसस्तेन लसन् शोभमानः पुष्करः शुण्डादण्डो यस्यासौ तथाभूतः ।

अत्रार्थे अस्मिन् काव्यार्थे द्वितीयं काव्यं यथा–दिश्यादिति । धूर्जटेः शिवस्य जूटस्य कपर्दस्य कोटावेकदेशे विद्यमानायां सरिति नद्यां जलगतभ्रमेः वशात् द्राग् झटित्येव पूर्वं दृष्टा पश्चान्नष्टा अत एव ज्योत्स्नायाः चन्द्रिकाया लवेन लेशेन उद्भासिनी शशांकसम्बन्धिनी कलिका सुखं दिश्यात् दद्यात् । यां शाशाङ्कीं कलिकां चञ्चन्तीनां स्फुरितानां सफरीणां भ्रमेण भ्रान्त्या मुहुर्वारंवारम् फणालीं मुकुलीकुर्वन् फणापङ्क्तिं कुड्मलीकुर्वन् अहिः सर्पः । आकुञ्चनैस्तिर्यक्करणैः प्राञ्चनैः मुह्यल्लक्ष्यं यथातथा जिघृक्षतितमाम् स्वीचिकीर्षतितमाम् । अत्र पूर्वत्र पद्ये इन्दोः फाण्टस्फुटितशफरिकासादृश्यं प्रोद्यन्मृणालीसादृश्यमिति चन्द्रमसो द्वैरूप्यमुन्मीलितम् । तत्रान्यतरस्य चञ्चत्सफरीसादृश्यस्योट्टंकना अत्र पद्ये कृता ।

पूर्वेति । यत्र पूर्वं केनचिदुक्तानामर्थानामन्यकर्तृकमर्थान्तरद्वारा अन्तरणं व्यवहि-

यथा--"कपाले मार्जारः पय इति करांल्लेढि शशिनः
तरुच्छिद्रप्रोतान्बिसमिति करेणुः कलयति ।
रतान्ते तल्पस्थान्हरति वनिताप्यंशुकमिति
प्रभामत्तश्चन्द्रो जगदिदमहो विभ्रमयति ॥"

अत्रार्थे--"ज्योत्स्नाचिर्दुग्धबुद्ध्या कवलितमसकृद्भाजने राजहंसैः
स्वांसे कर्पूरपांसुच्छुरणरभसतः सम्भृतं सुन्दरीभिः ।
पुम्भिर्व्यस्तं स्तनान्तात्सिचयमिति रहः सम्भ्रमे वल्लभानां
लीढं द्राक्सिन्धुवारेष्वभिनवसुमनोलम्पटैः षट्पदैश्च ॥"

---

तीकरणं भवति सा रत्नमाला ।

कपाल इति । भासकवेः पद्यमिदमिति शार्ङ्गधरपद्धतौ स्पष्टम् । प्रभया कान्त्या मत्तः क्षीबश्चन्द्रः इदं जगत् इति विभ्रमयति विप्लवयति सर्वस्यापि भ्रममुत्पादयतीत्यहो महदाश्चर्यम् मत्ता हि स्वयं भ्रमन्ति न तु परान् भ्रमयन्ति अयं परानेव भ्रान्तान् करोतीति । इतीति किम् । मार्जारो विडालः कपाले खर्परे स्थितानिति शेषः शशिन इन्दोः करान् मयूखान् पय इति इदं दुग्धमिति भ्रमेण लेढि आस्वादयति दुग्धास्वादानुपलब्धावपि भ्रमप्रभावशाज्जिह्वया कपालं घर्षतीति भावः । करी हस्ती तरूणां वृक्षाणां छिद्रेषु प्रोतान् प्रविष्टान् यद्वा वृक्षपल्लवाभ्यन्तरेण भूमिं प्राप्तान् शशिनः करान् बिसमिति मृणालमिति भ्रान्त्या संकलयति संगृह्णाति । स्पर्शानुपलम्भेऽपि शुण्डादण्डेन आददातीत्यर्थः । वनिता योषिदपि रतान्ते सुरतावसाने तल्पस्थान् शय्यास्थान् जालमार्गेण शय्यायां प्राप्तान् शशिनः करान् अंशुकमिति भ्रान्त्या हरति रतिकलहच्युतशुभ्रवस्त्रबुद्ध्या गृह्णातीत्यर्थः ।

अस्मिन्नर्थे काव्यार्थो यथा-ज्योत्स्नार्चिरिति । राजहंसैः ज्योत्स्नारूपमर्चिः भाजने पात्रे असकृत् मुहुर्मुहुः कवलितम् । चञ्चूचरणाभ्यां लोहिताःस्वयं सिता हंसविशेषाः । राजहंसास्तु ते चञ्चूचरणैर्लोहितैःसिताः इत्यमरः । दुग्धस्य पयसो बुद्ध्या भ्रमप्रभया । कर्पूरस्य पांसुर्धूलिः । तेषां छुरण आलेपने यो रभसो हर्षस्तस्मात् । रभसो वेगहर्षयोरित्यमरः । ज्योत्स्नारूपमर्चिस्तेजः स्वांसे स्वकीयस्कन्धे सम्भृतं पुञ्जीकृतम् । कर्पूरधूलिरियमिति बुद्ध्या आलेपनं करोतीत्यर्थः। आलेपनाभावेऽपि भ्रमेण पुञ्जीकरोतीति भावः । तदेव ज्योत्स्नार्चिः रहःसंभ्रमे एकान्तसम्मिलनसमये वल्लभानां प्रेयसीनां स्तनान्तात् कुचप्रान्तात् सिचयमिति वस्त्रमिति बुद्ध्या पुम्भिः पुरुषैः व्यस्तं क्षिप्तम् । सिचयाभावेपि भ्रान्त्या क्षेपणं क्रियते कामिभिरिति भावः। अभिनवेषु नूतनेषु सुमनःसु पुष्पेषु लम्पटैरासक्तैः षट्पदैः भ्रमरैः सिन्धुवारेषु । सिन्धुर्गजमदः तमपि स्वीयेन तिक्तरसेन वारयंति तिरस्कुर्वन्ति-इति सिन्धुवारा निर्गुण्डीनाम्ना प्रसिद्धा वृक्षाः । तेषु द्राक् झटिति लीढमास्वादितम् । लेहनयोग्यद्रव्याभावेऽपि भ्रमेण जिह्वाघर्षणं कृतम् ।

सङ्ख्यावैषम्येणार्थप्रणयनं सङ्ख्योल्लेखः।

यथा--"नमन्नारायणच्छायाच्छुरिताः पादयोर्नखाः।
त्वच्चन्द्रमिव सेवन्ते रुद्र रुद्रेन्दवो दश॥"

अत्रार्थे--"उमैकपादाम्बुरुहे स्फुरन्नखे कृतागसो यस्य शिरः समागमे।
षडात्मतामाश्रयतीव चन्द्रमाः स नीलकण्ठः प्रियमातनोतु वः॥"

सममभिधायाधिकस्योपन्यासश्चूलिका। द्विधा च सा संवादिनी विसंवादिनी च।

तयोः प्रथमा यथा--"अङ्गणे शशिमरीचिलेपने सुप्तमिन्दुकरपुञ्जसन्निभम्।
राजहंसमसमीक्ष्य कातरा रौति हंसवनिताश्रुगद्गदम्॥"

---

*संख्येति। संख्याया वैषम्येण एकत्र या संख्या प्रोक्ता तदपेक्षया वैधर्म्येण अर्थस्य काव्यरूपवस्तुनः प्रणयनं रचनं यत्र भवति स संख्योल्लेखः।

नमदिति। हे रुद्र ? नमतो नारायणस्य प्रह्वीभूतस्य विष्णोः छायया कान्त्या छुरिताः सम्बद्धाः पादयोर्नखा। दश एतत्संख्याका रुद्रेन्दवः रुद्ररूपा इन्दवः। त्वमेव चन्द्रः त्वच्चन्द्रस्तमिव सेवन्ते भजन्ते। नारायणकान्तिसंक्रान्तियुक्तपादनखरूपदशरुद्रेन्दवः एकादशं रुद्रं भवन्तं भजन्ते इति भावार्थः।

अत्रत्यमर्थमवलम्ब्य श्लोकरचनं यथा—उमैकेति। स एवंगुणको नीलकण्ठः शिवः वो युष्माकं प्रियमातनोतु। कीदृग्गुणकः शिवः कृतमागो येन स कृतागास्तस्य कृतापराधस्य यस्य नीलकण्ठस्य शिरः समागमे प्रणामकरणसमये भगवतीचरणयोः स्वशिरसः संयोगे जाते सति। स्फुरन्तो नखाः यस्मिंस्तस्मिन्। उमाया एकस्मिन् पाद एवाम्बुरुहे कमले चन्द्रमाः इन्दुः षडात्मतां षट्स्वरूपतामाश्रयतीव भजतीव।

पूर्वत्र द्वयोः पादयोर्नखानां दशत्वात् इन्दूनामपि दशत्वम्। अत्रतु पादस्यैकतया पञ्चतन्नखाङ्किता इन्दवोऽपि पञ्चैव इति दशपञ्चसंख्ययोः वैषम्येण अर्थरचना।

सममिति। समं तुल्यमर्थभिधाय प्रतिपाद्य अधिकस्य तदपेक्षया विशिष्टस्यार्थस्योपन्यासः उल्लेखः चूलिका। साच चूलिका द्विधा द्विप्रकारा। एका संवादिनि सदृशी द्वितीया विसंवादिनी विसदृशी।

तयोः संवादिनोविसंवादिन्योर्मध्ये प्रथमा संवादिनी यथा—अङ्गण इति। शशिमरीचीनां लेपनं शशिमरीचिलेपनं तदस्ति यत्रेति शशिमरीचिलेपने अङ्गणे प्राङ्गणे सुप्तं निद्रितं इन्दोः चन्द्रस्य करपुञ्जस्य किरणसमुदायस्य सन्निभम् तुल्यम् राजहंसं शशिमरीचिसंन्निभत्वात्तस्येति। तमसमीक्ष्य अदृष्ट्वा अत एव कातरा दीना हंसवनिता वरटा। हंसस्य योषिद्वरटेत्यमरः। अश्रुभिर्गद्गदं यथा स्यत्तथा रौति रोदनं करोति। अत्र विरावे हेतुः राजहंसादर्शनं तत्र च शशिमरीचिसन्निभत्वमिति पदार्थं हेतुकः काव्य-

अत्रार्थे--
"चन्द्रप्रभाप्रसरहासिनि सौधपृष्ठे दुर्लक्ष्यपक्षतिपुटां न विवेद जायाम् ।
मूढश्रुतिर्मुखरनूपुरनिःस्वनेन व्याहारिणीमपि पुरो गृहराजहंसः ॥"
द्वितीया तत्रैवार्थे यथा--
"ज्योत्स्नाजलस्नायिनि सौधपृष्ठे विविक्तमुक्ताफलपुञ्जगौरम् ।
विवेद हंसी दयितं कथञ्चिच्चलत्तुलाकोटिकलैर्निनादैः ॥"
निषेधस्य विधिना निबन्धो विधानापहारः ।
यथा--"कुरबक कुचाघातक्रीडारसेन वियुज्यसे
बकुलविटपिन् स्मर्त्तव्यं ते मुखासवसेचनम् ।
चरणघटनाशून्यो यास्यस्यशोक सशोकता-
मिति निजपुरत्यागे यस्य द्विषां जगदुः स्त्रियः ॥"

---

लिङ्गालङ्कारः ।

चन्द्रेति । चन्द्रस्य प्रभायाः कान्तेः प्रसरेण विस्तारेण हासिनि धवलिते सौधस्य पृष्ठे दुर्लक्षौ चन्द्रप्रभाश्वेतिमान्तर्भूतत्वात् द्रष्टुमशक्यौ पक्षत्योः पुटौ यस्यास्ताम् तथा पुरोऽग्रे व्याहारिणीमपि भाषमाणामपि । व्याहार उक्तिर्लपितं भाषितं वचनं वच इत्यमरः । जायां स्वपत्नीम् । मुखराणां शब्दायमानानां नूपुराणां पादभूषणानां निःस्वनेन ध्वनिना मूढे श्रुती यस्यासौ हतकर्णो राजहंसः न विवेद न विज्ञातवान् । अत्रोभयोः पद्ययोः समान एवार्थः स्वेष्टाविज्ञानरूपः ।

द्वितीया विसंवादिनी तस्मिन्नेवार्थे उदाह्रियते यथा—ज्योत्स्नेति । ज्योत्स्नारूपेण जलेन स्नातुं शीलमस्येति तस्मिन् सौधपृष्ठे विद्यमानं शुद्धानां मुक्ताफलानां पुञ्जवद्गौरं दयितं हंसं चलन्तीनां तुल्यकोटीनां नूपुराणाम् । पादाङ्गदं तुलाकोटिर्मञ्जीरो नूपुरोऽस्त्रियामित्यमरः । कलैर्मधुरैः निनादैः शब्दैः कृत्वा नायं हंसस्वरः किन्तु नूपुरध्वनिः अयन्तु हंसस्वरः इत्येवं शब्दद्वारा कथञ्चित्कृच्छ्रेण विवेद ज्ञातवती । अत्रत्यश्चार्थः पूर्वविसदृशः स्वेष्टज्ञानरूपः ।

निषेधस्येति । निषेधस्य प्रतिषेधस्य विधिना विधिरूपेण निबन्धः उल्लेखो यत्र भवति स विधानापहारो नाम षष्ठो भेदः ।

कुरबकेति । हे कुरवक ? एतन्नामा कश्चिद्वृक्षविशेषः अचेतने चेतनात्वाध्यारोपेण सम्बोध्यते । त्वं कुचयोराघातेन या क्रीडा तस्याः रसेन आनन्देन वियुज्यसे वियुक्तो भवसि । अर्थात् शत्रुभिराक्रान्तोयं देशः तेनात्र स्थातुमशक्यतयाऽस्मत्कर्तृककुचाहतिकेलिसमास्वादेन रहितो भवसीति परं दुःखा-

अत्रार्थे--"मुखमदिरया पादन्यासैर्विलासविलोकितै-
बंकुलविटपी रक्ताशोकस्तथा तिलकद्रुमः ।
जलनिधितटीकान्ताराणां क्रमात्ककुभां जये
झगिति गमिता यद्वर्ग्याभिर्विकासमहोत्सवम् ॥"

बहूनामर्थानामेकत्रोपसंहारो माणिक्यपुञ्जः ।

यथा--"शैलच्छलेन स्वं दीर्घ भुजमुत्तम्य भूवधूः ।
निशासख्योः करोतीव शशाङ्कतिलकं मुखे ॥"

यथा च—
"फुल्लातिमुक्तकुसुमस्तबकाभिरामदूरोल्लसत्किरणकेसरमिन्दुसिंहम् ।
दृष्ट्वोदयाद्रिशिखरस्थितमन्धकारदुर्वारवारणघटा व्यघटन्त सद्यः ॥

---

यते चेतः इत्येवंरूपेण निजस्य स्वस्य पुरस्य नगरस्य त्यागसमये यस्य भवतो राज्ञो द्विषां रिपूणां स्त्रियो नार्यः जगदुः प्रोचुः । हे वकुलविटपिन् ? एतन्नामकवृक्ष ? अतः परं ते त्वया अस्मत्कर्तृकम् मुखासवकरणकं सेचनं स्मरणीयं स्मर्त्तव्यं भविष्यति न प्राप्तव्यमिति भावः । हे अशोक ? चरणयोर्घटनया शून्यस्त्वं सशोकतां यास्यसि अस्मच्चरणसम्बन्धजन्यमानन्दं न प्राप्तुं शक्ष्यसि । अत्र वियुज्यसे स्मर्त्तव्यमित्यादिपदैः तत्तद्वस्तु नामभावः प्रकाश्यते अर्थात् युष्माभिस्तद्वस्तु प्राप्तुं न शक्यते इति व्यञ्जनया निषेधस्योपनिबन्धः कृतः ।

यत्र च तद्विपरीतः तद्यथा-मुखेति । जलनिधेः समुद्रस्य तटीयकान्ताराणां तटीयवनानां ककुभां दिशां जये विजये कृते सति यद्वर्गभवाभिः कामिनीभिः क्रमात् मुखस्य मदिरया वकुलनामा विटपी वृक्षः, पादन्यासैः चरणघटनाभिः रक्ताशोकः, विलासपूर्वकैः विलोकितैः दर्शनैः तिलकद्रुमः तिलकवृक्षः झगिटि झटिति विकासरूपं महोत्सवं गमिता प्रापयिता । अत्र च पूर्वपद्ये यः निषेध्यतयोपनिबद्धः स एवात्र विधिकोटिप्रविष्टतया आटीकितः ।

बहूनामिति । यत्र बहूनामर्थानामेकस्मिन् स्थले उपसंहारः समाहारीयदिशा निर्देशः क्रियते सा माणिक्यपुञ्जनाम्नी तुल्यदेहितुल्यस्य सप्तमी भिदा । तदुदाहरणं यथा शैलेति । भूरेव वधूर्नायिका भूवधूः, शैलस्य पर्वतस्य छलेन व्याजेन स्वं निजं दीर्घं लम्बायमानं भुजं वाहुमुत्तम्य उत्थाप्य निशा एव सखी तस्या मुखे आनने प्रारम्भे शशाङ्करूपं तिलकं करोति सम्पादयति । भूवध्वादिपदेषु रूपकालंकृतिः । शैलच्छलेनेति नायं शैलः किन्तु निशासख्यास्तिलकसम्पादनार्थमुत्थापितो भूवध्वा बाहुरिति कैतवापन्हुतिः । उभयोरर्थालंकारयोः श्लोकरूपैकवाक्ये संसृष्टिः ।

फुल्लेति । फुल्लानि विकसितानि यानि अतिमुक्तस्य वासन्तीलतायाः । अतिमु-

यथा च—"संविधातुमभिषेकमुदासे मन्मथस्य लसदंशुजलौघः ।
यामिनीवनितया ततचिह्नः सोत्पलो रजतकुम्भ इवेन्दुः ॥"
यथा च—"उदयति पश्य कृशोदरि दलितत्व(क्)क्षीरकरणिभिः किरणैः ।
उदयाचलचूडामणिरेष पुरा रोहिणीरमणः॥"
यथा च—"उदयति नवनीतपिण्डपाण्डुः कुमुदवनान्यवघट्टयन्कराग्रैः ।

---

क्तः पुण्ड्रकः स्याद्वासन्ती माधवी लता इत्यमरः । कुसुमानि प्रसूनानि । प्रसूनं कुसुमं सुममित्यमरः । तेषां स्तबकवत् गुच्छकवत् । स्याद्गुच्छकस्तु स्तबक इत्यमरः अभिरामाः सुन्दराः दूरादेव उल्लसन्तो देदीप्यमानाः किरणा मयूखाः । किरणोस्रमयूखांशुगभस्तिघृणिरश्मयः इत्यमरः । एव केसरा स्कन्धकेशाः ।

केसरो नागकेसरे
तुरङ्गसिंहयोः स्कन्धकेशेषु वकुलद्रुमे ।
पुंनागवृक्षे किंजल्के स्यात्केसरं तु हिङ्गुनि । इति हैमः ।

यस्य तम् । इन्दुरेव सिंहस्तम् । उदयाद्रेः उदयाचलस्य शिखरे स्थितं मूर्ध्नि विद्यमानं दृष्ट्वा आलोक्य । अन्धकारा ध्वान्तान्येव । अन्धकारोऽस्त्रियां ध्वान्तं तमिस्रं तिमिरं तम इत्यमरः । दुर्वारा निरोद्धुमशक्या वारणा गजाः । तेषां घटाः समूहाः सद्यो झटिति व्यघटन्त निरभिवन्त । अत्रापि इन्द्वादौ सिंहादेरारोपतया साङ्गं रूपकम्

संविधातुमिति । मन्मथस्य कामस्य । अभिषेकं स्नानं संविधातुं कर्त्तुं लसन्तश्चञ्चन्तोंऽशव एव जलौघो यत्र सः । यामिनी रात्रिरेव वनिता । तया ततं कृतञ्चिह्नं लक्षणम् । चिह्नं लक्ष्म च लक्षणमित्यमरः । यत्र सः । उत्पलेन सहितः सोत्पलः रजतनिर्मित कुम्भ इव इन्दुश्चन्द्र उदासे उदयं गतः । अत्र रजतकुम्भ इवेन्दुरिति—उपमालंकृतिः लसदंशव एव जलौघो यत्रेति रूपकानुप्राणिता ।

उदयतीति । हेकृशोदरि ? हे अनुदरे ? दलिताया विमृदितायास्त्वचः क्षीरं दुग्धं करणं हेतुर्विद्यते यत्र तैः । अत इतिठनाविति इन् । विमृदित वल्कलदुग्धजन्यै रित्यर्थः । त्वक्क्षीरसदृशैरिति भावः । त्वक्षीरेत्यत्रत्यककारस्य झरो झरीति लोपः ।

करणं हेतुकर्मणोः ।
वानरादौ हसे लेपे नृत्यगीतप्रभेदयोः ।
क्रियाभेदेन्द्रियक्षेत्रकायसंवेशनेषु च ॥
कायस्थे व्रतवन्धे च पुमान् शूद्राविशोः सुते । इति विश्वः

किरणेरंशुभिरुपलिक्षितः । उदयाचलस्य चूडामणिः उदयाद्रेः शेखरीभूतः एष रोहिणीरमणश्चन्द्रः पुरोऽग्रे उदयति उदयं गच्छतीति पश्य ।

उदयतीति । नवनीतस्य हैयंगवीनस्य पिण्डवत् पुञ्जवत् पाण्डुगौरः । उदयगिरे-

उदयगिरितटस्फुटाट्टहासो रजनिवधूमुखदर्पणः शशाङ्कः ॥"

यथा च—"प्रोषितैकेन्दुहंसेऽस्मिन्सस्नाविव तमोऽम्बुभिः ।
नभस्तडागे मदनस्ताराकुमुदहासिनि ॥"

अत्रार्थे—"रजनिपुरन्ध्रिरोध्रतिलकस्तिमिरद्विपयूथकेसरी
रजतमयोऽभिषेककलशः कुसुमायुधमेदिनीपतेः ।
अयमुदयाचलैकचूडामणिरभिनवदर्पणो दिशा-
मुदयति गगनसरसि हंसस्य हसन्निव विभ्रमं शशी ॥"

कन्दभूतोऽर्थः कन्दलायमानैर्विशेषैरभिधीयत इति कन्दः ।

यथा—"विशिखामुखेषु विसरति पुञ्जीभवतीव सौधशिखरेषु ।

---

स्तटं गतो यः स्फुटः स्वच्छः अट्टहासस्तत्स्वरूपः । रजनिरेव वधूस्तस्या मुखावलोकनार्थमुपस्थापितो दर्पणः आदर्शः शशाङ्कश्चन्द्रः कराग्रैः किरणप्रान्तैः कुमुदवनानि कुमुदसमूहानि अवघट्टयन् उल्लासयन् सन् उदयति ।

प्रोषितैकेति । मदनः कामः प्रोषितः अविद्यमान इत्यर्थः एक इन्दुरेव हंसो यस्मात् तस्मिन् । तारा एव कुमुदास्ते हासिनि हासयुतेऽस्मिन् नभ एव तडागस्तस्मिन् नभस्तडागे आकाशतटाके । तमांसि एवाम्बूनि जलानि तैः सस्नाविव स्नानं चकार इव । प्रायशः एषु पद्येषु रूपकालङ्कारः ।

अत्रेति । पृथक् पृथक् पद्येषु एकैकभावापन्नानां पद्यार्थानामुद्भूततिरोहितावयवशक्तिसम्पन्नवनवृक्षवत एकत्रोपसंहारोऽत्राऽस्मिन् पद्यार्थे यथा–रजनीति । रजनी रात्रिरेव पुरन्ध्रिः कुटुम्बिनी । स्यात्कुटुम्बिनी पुरन्ध्री इत्यमरः । ह्रस्वदीर्घकारावप्येतौ शब्दौ । तत्र दीर्घान्तस्तु कोशप्रामाण्यादेव । ह्रस्वान्तश्च "तौ स्नातकैर्बन्धुमता च राज्ञा पुरन्ध्रिभिश्च क्रमशः प्रयुक्तम्" इति महाकविप्रयोगप्रामाण्यात् । तस्या रोध्रनिर्मितः । लोध्रविरचितः रलयोरैक्यात् रोध्र इति पठितः । तिलकः । रात्रिरूपवध्वा मुखे श्वेततिलकः । गालवः शावरो लोध्र इति श्वेतलोध्रस्य नामनि शासनात् । तिमराण्येव द्विपा गजा तेषां यूथे (विनाशयितुं तमिति भावः) । केशरी सिंहः । कुसुमायुधः काम एव मेदिनीपतिः महीपतिस्तस्य । रजतमयः रजतनिर्मितः । विकारार्थे मयट् । अभिषेकार्थं सम्भृतः कलशः उदयाचलस्य एकश्चूडामणिः । दिशामाशामभिनवो नूतनो दर्पण आदर्शः शशी चन्द्रः हंसस्य विभ्रमं विलासं हसन्निव तिरस्कुर्वन्निव गगनसरसि उदयति । उदयं गच्छति । अत्रैकैकपादे पूर्वपद्योक्तानामर्थानां क्रमादुपसमाहारः कृतः । पादेष्वेषु सर्वत्र रूपकालङ्कारः ।

कन्देति । कन्दभूतः मूलभूत एकोऽर्थः कन्दल इव अङ्कुर इवाचरमाणैरनेकैः विशेषैः प्रकारैरभिधीयते निबध्यते यत्र स कन्दनामा तुल्यदेहितुल्यस्याष्टमो विशेषः । उदाहृत्य दर्शयति । विशिखेति । शशिः कलानिधिरेव (कलशः तस्मात परिस्रुता अभिस्यन्दिता

कुमुदाकरेषु विकसति शशिकलशपरिस्रुता ज्योत्स्ना ॥"

अत्रार्थे—"वियति विसर्पतीव कुमुदेषु बहूभवतीव योषितां
प्रतिफलतीव जरठशरकाण्डपाण्डुषु गण्डभित्तिषु ।
अम्भसि विकसतीव लसतीव सुधाधवलेषु धामसु
ध्वजपटपल्लवेषु ललतीव समीरचलेषु चन्द्रिका ॥
स्फटिकमणिघट इवेन्दुस्तस्यामपिधानमाननमिवाङ्कः ।
क्षरति चिरं येन यथा ज्योत्स्ना घनसारधूलिरिव ॥

---

ज्योत्स्ना चन्द्रिका । विशिखाया रथ्याया । रथ्या प्रतोली विशिखेत्यमरः । मुखेषु प्रारम्भेषु ।

मुखं निसरणे वक्त्रे प्रारम्भोपाययोरपि
सन्ध्यन्तरे नाटकादेः शब्देऽपि च नपुंसकम् । इत्यमरः ।

विसरति विशीर्णा भवति । सौधानां राजसदनानाम् । सौधोऽस्त्री राजसदनम् इत्यमरः । शिखरेषु शिरःसु । शिरोऽग्रं शिखरं वा ना इत्यमरः । पुञ्जीभवति समूहीभवति । कुमुदानां कैरवाणाम्—

कुमुदं कैरवे रक्तपद्मे स्त्री कुम्भिकौषधौ
जम्भायां पुंसि दिङ् नागे नागशाखामृगान्तरे इति मेदिनी ।

आकरेषु खनिषु विकसति प्रफुल्ला भवति । अत्रैकैव ज्योत्स्ना नाना स्थलेषुविशीर्णा इव पुञ्जीभूता इव विकसिता इव दृश्यत इतिदिशा उपमानुप्राणितं रूपकं व्यङ्ग्यम् ।

अत्र अस्मिन् श्लोकार्थे पद्यानि यथा-वियतीति । अम्भसीति । चन्द्रिका कौमुदी वियति गगने विसर्पति धावतिइव गगनस्यातिविस्तृततया विसर्पणयोग्यत्वमुत्प्रेक्षते । कुमुदेषु कैरवेषु वहूभवति घनीभवति इव । चन्द्रिकैव केरवसमूहरूपेण परिणतेवाभाति इत्युत्प्रेक्षते । जरया जीर्णा ये शरकाण्डास्तद्वत् पाण्डुषु धवलासु योषितामवलानां गण्डभित्तिषु गण्डेष्वित्यार्थः । प्रतिफलतीव प्रतिप्रसूत इव द्विगुणीभूतेवेति । अम्भसि जले विकसति इव प्रफुल्लति इव । जले यद् पुष्पाणां विकासो दृश्यते न तानि पुष्पाणि किन्तु चन्द्रिकैवेत्यनया रीत्या अपन्हुतिध्वनिर्बोध्यः । सुधया धवलेषु गौरेषु धामसु सद्मसु लसतीव शोभत इव । समीरेण चलेषु वायुना प्रेरितेषु । ध्वजानां पटरूपेषु पल्लवेषु ललतीव क्रीडतीव ।

स्फटिकेति । तस्यां शरत्पूर्णिमायाम् । इन्दुः कलानिधिः स्फटिकमणिनिर्मितघट इव । मध्यमपदलोपी समासः । भाति । अङ्कः इन्दुगतकलङ्कः । अपिधानम् पिधानमाच्छादनं तद्रहितम् । आननं कलशमुखमिव । यतो घटमुखमपिहितं तेन हेतुना, अतः क्षरतिसम्बन्धात्तेनेत्यत्र पञ्चम्या भवितव्यमिति न भ्रमितव्यम् । ज्योत्स्ना चन्द्रिका घनसारस्य कर्पूर

सितमणिकलशादिन्दोर्हरिणहरित्तृणपिधानतो गलितैः ।
रजनिभुजिष्या सिञ्चति नभोऽङ्गणं चन्द्रिकाम्भोभिः ॥
संविधातुमभिषेकमुदासे मन्मथस्य लसदंशुजलौघः ।
यामिनीवनितया ततचिह्नः सोत्पलो रजतकुम्भ इवेन्दुः ॥"

ता इमास्तुल्यदेहितुल्यस्य परिसंख्याः । "सोऽयमुल्लेखवाननुग्राह्यो मार्गः" इति सुरानन्दः ।

तदाह--"सरस्वती सा जयति प्रकामं देवी श्रुतिः स्वस्त्ययनं कवीनाम् ।
अनर्घतामानयति स्वभङ्ग्या योल्लिख्य यत्किञ्चिदिहार्थरत्नम् ॥"

अथ परपुरप्रवेशसदृशस्य भिदाः । उपनिबद्धस्य वस्तुनो युक्तिमती परिवृत्तिर्हुड्डयुद्धम् ।

---

स्य धूलिरिव रेणुरिव । रेणुः स्त्रियां तथा धूलिः पांसुर्ना न द्वयो रज इत्यमरः । यथा यथायोग्यमित्यर्थः । चिरं चिररात्राय । चिराय चिररात्राय चिरस्याद्याश्चिरार्थकाः इत्यमरः । क्षरति अभिष्यन्दते । स्वच्छत्वगुणयोगादिन्दुघटयोः सादृश्यम् । एवमेव ज्योत्स्नाघनसारधूल्योः घटमुखगतच्छायेन्दुकलंकयोः कृष्णिम्ना सादृश्यं तथा चात्रोपमालङ्कारः ।

सितमणीति । रजनिरेव भुजिष्या किंकरी । नियोज्यकिङ्करप्रेष्यभुजिष्यपरिचारकाः इत्यमरः । हरिणरूपं हरित्तृणं पिधानं यस्य तस्मात् । सितमणिनिर्मितकलशरूपादिन्दोः गलितैः प्रसृतैः । चन्द्रिकारूपैरम्भोभिर्जलैः । नभ एवाङ्गणं सिञ्चति आर्द्रीकरोति । अत्र रजन्यादिषु भुजिष्यादीनां समारोपादत्र रूपकालंकृतिः ।

संविधातुमिति । व्याख्यातमिदं प्राक् ।

ता इति । ता इमाः अनन्तरमेवोक्ताः । परिसंख्याः परिगणिताः । सोयमनन्तरोक्तः । उल्लेखवान् प्रतिभया प्रादुर्भावितोऽत एवानुग्राह्यो मार्गः परिशीलनीयः पन्थाः उक्तार्थं प्रावादुकपद्यमुपस्थापयति । तदाहेत्यादिना । सरस्वतीति । सा श्रुतिस्मृतिपुराणादिषु प्रसिद्धा श्रुतिरूपा । कवीनां कवयितॄणां स्वस्त्ययनं प्रसिद्धिकारकत्वान् मङ्गलायतनं सरस्वती देवी प्रकाममत्यन्तं जयति सर्वोत्कर्षेण वर्त्तते । सा का देवी या यत्किञ्चिदर्थरत्नं पदार्थमपि स्वभङ्ग्या निजपरिपाट्या प्रतिभयेत्यर्थः । उल्लिख्य उद्भाव्य अनर्घताममूल्यतामानयति प्रापयति । प्रतिभाया एष प्रभावो यत्सर्वजनसाधारणा अपि शब्दार्थौ कामपि अनर्घताकोटीमासादयतः ।

अथेति । अथ तुल्यदेहितुल्यनामकाव्यप्रभेदनिरूपणानन्तरं परस्य अन्यस्य पुरे नगरे प्रवेशेन सदृशस्तुल्यः तस्य भिदाः भेदाः निरूप्यन्ते । यथा लोके वैदेशिकं पुमांसं तत्रत्या जना परमिव मन्वते सोपि स्वं वदेशिकमिव मनुते तथैव तैरेव शब्दैर्यत्रान्यार्थ

यथा--"कथमसौ न भजत्यशरीरतां हतविवेकपदो हतमन्मथः ।
प्रहरतः कदलीदलकोमले भवति यस्य दया न वधूजने ॥"

अत्रार्थे--"कथमसौ मदनो न नमस्यतां स्थितविवेकपदो मकरध्वजः ।
मृगदृशां कदलीललितं वपुर्यदभिहन्ति शरैः कुसुमोद्भवैः ॥"

प्रकारान्तरेण विसदृशं यद्वस्तु तस्य निबन्धः प्रतिकञ्चुकम् ।

तथा--"माद्यच्चकोरेक्षणतुल्यधाम्नो धारां दधाना मधुनः पतन्तीम् ।
चञ्च्वग्रदष्टोत्पलनालहृद्या हंसीव रेजे शशिरत्नपारी ॥"

---

उपस्थाप्यते तत्राद्यं परपुरप्रवेशसदृशः काव्यभेदः । अथ तद्भेदाः सोदाहरणाः सलक्षणाः प्रदर्श्यन्त-उपनिबद्धेति । उपनिबद्धस्य केनचित् कविना पूर्वं काव्यरूपेणोपस्थापितस्य वस्तुनोऽर्थस्य युक्तिमती ससंगतिका परिवृत्तिः विनिमयो यत्र भवति तद् हुडयुद्धं नाम काव्यम् ।

कथमिति । हतं नष्टं विवेकस्य ज्ञानस्य पदं स्थानमात्मेत्यर्थः । आत्मनो ज्ञानाधिकरणत्वात् । यस्यासौ । हतमन्मथः दुष्टकामः अशरीरताम् अनङ्गत्वं कथं न भजति । यतो यस्य कामस्य हृदये इति शेषः । दया अनुकम्पा न भवति नोदेति । कीदृशस्य तस्य कदलीदल ..कोमले सुकुमारे वधूजने कामिनीलोके प्रहरतः स्वास्त्रान् विक्षिपतः । य ईदृग्विधो निर्दयः सोऽवश्यमनङ्गत्वं गच्छतीति भावः ।

अत्रेति । अत्रार्थे प्रागुक्तार्थविषये पद्यान्तरं यथा-कथमिति । स्थितं निश्चितं दोषरहितं विकारशून्यमित्यर्थः । विवेकपदं यस्यासौ मकरध्वजः मीनकेतनो मदनः कामः । कथं नमस्यत्वं प्रणम्यत्वं न गच्छतीति शेषः । यद्यस्मादयं मृगदृशां नायिकानां कदलीललितं कदलीवत्सुन्दरं वपुः शरीरं कुसुमोद्भवैः कुसुमजन्यैरर्थात् तद्रूपैः शरैर्बाणैः । यद्यपि मदनस्य कुसुमायुधत्वाच्छराणां कुसुमरूपत्वमेव न तु कुसुमजन्यत्वं तथापि राहोः शिर इतिवत्काल्पनिकं भेदमुररीकृत्य प्रयोगः इति भावः । पूर्वपद्ये उपघातकत्वेन निबद्धस्य मदनस्य अत्र युक्त्या यथायोग्यकारित्वरूपया निबन्धनं कृतमिति स्पष्टा लक्षणसंगतिः ।

प्रकारान्तरेणेति । विसदृशं विशिष्टसादृश्यवत् यद्वस्तु एकत्र वर्त्तते तस्यैव वस्तुनोऽन्यत्र प्रकारान्तरेणोपनिबन्धो यत्र जायते तत्प्रतिकञ्चुकं नाम परपुरप्रवेशसदृशस्य काव्यस्य द्वितीयः प्रकारः ।

उदाहरणं यथा—माद्यदिति । माद्यन्तः क्षीबा ये चकोरास्तेषामीक्षणेन तुल्यं समानं धाम प्रभावो यस्य तस्य मधुनो मद्यस्य, पतन्तीं श्रवन्तीं धारां दधाना शशिवदुज्वला रत्नैर्निर्मिता पारी पात्री, अथवा शशिरत्नं चन्द्रकान्तमणिस्तेन निर्मिता पारी पात्री, चञ्च्वा अग्रेण दष्टं यदुत्पलं तस्य नालवद् हृद्या हंसी इव रेजे बभौ ।

अत्रार्थे—"मसारपात्रेण बभौ ददाना काचित्सुरां विद्रुमनालकेन ।
वल्लूरवल्लीं दधतेव चञ्च्वा केलीशुकेनाञ्जलिना धृतेन ॥"

उपमानस्योपमानान्तरपरिवृत्तिर्वस्तुसंचारः ।

यथा—

"अविरलमिव दाम्ना पौण्डरीकेण बद्धः स्नपित इव च दुग्धस्रोतसा निर्भरेण।
कवलित इव कृत्स्नश्चक्षुषा स्फारितेन प्रसभममृतमेघेनेव सान्द्रेण सिक्तः ॥"

अत्रार्थे—"मुक्तानामिव रज्जवो हिमरुचेर्मालाः कलानामिव
क्षीराब्धेरिव वीचयः क्लममुषः पीयूषधारा इव ।
दीर्घापाङ्गनदीं विलङ्घ्य सहसा लीलानुभावाञ्चिताः
सद्यः प्रेमभरोल्लसा मृगदृशो मामभ्यषिञ्चन्दृशः ॥"

---

अत्रास्मिन्नेव काव्यार्थविषये काव्यान्तरं यथा-मसारेति । चञ्च्वा वल्लूरस्य शुष्कमांसस्य । वल्लूरं शुष्कमांसं स्यादित्यमरः । वल्लीं लतां दधता अञ्जलिस्थकेलिशुकेन इव, विद्रुमनिर्मितं नालकं प्रणालिका यत्र तेन मसारपात्रेण इन्द्रनीलमणिनिर्मितपात्रेण सुरां मद्यं ददाना दापयन्ती काचिन्नायिका बभौ रेजे । अत्रोभयत्रापि पद्ये विशिष्टसदृशमेव मद्यपात्रं वस्तु वर्त्तते किन्तु पात्रयोः चन्द्रकान्तेन्द्रनीलमणिनिर्मितत्वेन क्रमात् हंसीशुकसादृश्योद्भावनरूपप्रकारान्तरेण वर्णनं कृतम् ।

उपमानस्येति । उपमानस्य उपमानभूतस्य वस्तुनः उपमानान्तरेण परिवृत्तिः अर्थात् यस्योपमेयस्य यदुपमानं विन्यस्तं तदुपमानस्थानेऽन्यदुपमानं क्रियते सैव तस्य अन्यपरिवृत्तिः सा यत्र जायते स वस्तुसंचारनामा परपुरप्रवेशसदृशस्य तृतीयो भेदः ।

उदाहरणं यथा-अविरलमिवेति । कश्चित्सखा सखायं वक्ति । तया नायिकया यन्मयि दृष्टिनिपातः कृतः स विलक्षणप्रकार एवानुभूयते । यतः पौण्डरीकेण कमलनिर्मितेन दाम्ना रज्ज्वा अविरलं यथास्यात्तथा बद्धोऽस्मीति आत्मनि अनुभवामि । निर्भरेण विपुलेन दुग्धस्रोतसा पयःप्रवाहेण स्नपित इव स्नानं कारित इव । स्फारितेन विस्तारितेन चक्षुषा नेत्रेण कवलित इव ग्रासीकृत इव, सान्द्रेण सघनेन सातिशयवता अमृतसम्भृतेन मेघेन जलदेन प्रसभं बलात्सिक्त इव आत्मानं मन्ये ।

मुक्तानामिति । मुक्तानां मौक्तिकमणीनां रज्जव इव दामसदृशाः स्वच्छत्वात् । तेन चाकर्षकत्वम् । हिमरुचेः शीतगोः कलानां मालासदृशाः आह्लादकत्वात् । क्षीराब्धेः क्षीरसागरस्य वीचिसदृशाः चञ्चलत्वात् । क्लमं मुष्णातीति क्लममुट् ताः पीयूषस्य अमृतस्य धारासदृशाः संतापनाशकत्वात् । लीलायाः क्रीडायाः अनुभावेन अञ्चिताः पूजिताः । प्रेम्णः भरेण अतिशयेन उल्लसाः पूर्णाः मृगदृशः कुरङ्गलोचनायाः

शब्दालङ्कारस्यार्थालङ्कारेणान्यथात्वं धातुवादः ।

यथा—

"जयन्ति बाणासुरमौलिलालिताः दशास्यचूडामणिचक्रचुम्बिनः ।
सुरासुराधीशशिखान्तशायिनो भवच्छिदस्त्र्यम्बकपादपांशवः ॥"

अत्रार्थे—"सन्मार्गालोकनप्रौढिनीरजीकृतजन्तवः ।
जयन्त्यपूर्वव्यापाराः पुरारेः पादपांसवः ॥"

तस्यैव वस्तुन उत्कर्षेणान्यथाकरणं सत्कारः ।

यथा—"स्नानार्द्रार्द्रैर्विधुतकबरीबन्धलोलैरिदानीं

---

दृशो नेत्राणि । दीर्घः अपाङ्ग एव नदी तां सहसा अकस्मात् विलङ्घ्य उत्तीर्य सद्यो झटिति मामभ्यषिञ्चत् । उभयत्र पद्ययोः दृग् उपमेयं तथा उपमानान्येकत्र कमलादीनि अपरत्र तत्स्थानीयानि मौक्तिकानि ।

शब्दगतालङ्कारस्य अर्थगतालंकारेण अन्यथात्वं वैपरीत्यं यथा भवति स धातुवादः ।

जयन्तीति । वाणासुरस्य मौलिना लालिताः सङ्गताः दशास्यस्य चूडामणीनां चक्रं चुम्बितुं शीलमेषां ते तथोक्ताः सुरासुराधीशानां देवदैत्याधिपतीनां शिखान्तेषु शायिनः । भवं छिन्दन्तीति ते भवच्छिदः । त्र्यम्बकस्य शिवस्य पादपांसवः चरणरेणवो जयन्ति सर्वोत्कर्षेण वर्त्तन्ते । अत्र "लिलालि" इत्यत्र "चूडामणि" । "चक्रचुम्बित" इत्यत्र च तृतीयपादे "सशयोः" साम्यात् वृत्त्यनुप्रासः ।

सन्मार्गेति । सतो मार्गस्यालोकने अन्येभ्यः प्रदर्शने या प्रौढिस्तया नीरजीकृता जन्तवो यैस्ते तथोक्ताः । अत एव अपूर्वो विलक्षणः व्यापारः कर्त्तृसामर्थ्यमेषु ते अपूर्वव्यापाराः पुरारेः शिवस्य पादपांसवो जयन्ति । ये पांसवः स्वयमेव रजोरूपा स्ते कथमन्यान् रजोरहितान् कर्त्तुं पारयन्ति इति विरोधः, रजोगुणरहितानिति तत्परिहारः । तथा स्वयं रजोरूपा अपि रजोरहितान् लोकान् कुर्वन्ति अत एव अपूर्वव्यापारा इति काव्यलिङ्गम् । पूर्वत्र पादपांसुविशेषणेषु शब्दालंकारः, अत्र च तेषु अर्थालंकारः इयदेवाऽन्यथात्वम् ।

तस्यैवेति । तस्यैव सामान्यस्य वस्तुनः उत्कर्षेण विशेषेण अन्यथाकरणं पूर्वापेक्षया विपरीतीकरणं यत्र भवति स सत्कारनाम्नी परपुरप्रवेशसदृशस्य काव्यस्य पञ्चमी भिदा ।

उदाहरणं यथा—स्नानार्द्रार्द्रैरिति । व्याख्यातं प्राक् । पल्लवैः प्रान्तैरित्यर्थः । अत्र "नायिकानां स्नानक्लिन्नकेशपाशेभ्यः पतितान् जलबिन्दून् हंसाः पिबन्ति" इति सामान्यभूतोर्थः उक्तः । अयमेवार्थो यदा उत्कर्षेणाभिधीयते तदोदाहरणं यथा—

श्रोणीभारः कृतपरिचयः पल्लवैः कुन्तलानाम् ।
अप्येतेभ्यो नभसि पततः पङ्क्तिशो वारिबिन्दून्
स्थित्वोद्ग्रीवं कुवलयदृशां केलिहंसाः पिबन्ति ॥"

अत्रार्थे—"लक्ष्म्याः क्षीरनिधेरुदक्तवपुषो वेणीलताग्रच्युता
ये मुक्ताग्रथनामसूत्रसुभगाः प्राप्ताः पयोबिन्दवः ।
ते वः पान्तु विशेषसंस्पृहदृशा दृष्टाश्चिरं शार्ङ्गिणा
हेलोद्ग्रीवजलेशहंसवनितालीढाः सुधास्वादवः ॥"

पूर्वं सदृशः पश्चाद्भिन्नो जीवञ्जीवकः ।

यथा—

"नयनोदरयोः कपोलभागे रुचिमद्रत्नगणेषु भूषणेषु ।
सकलप्रतिबिम्बितेन्दुबिम्बा शतचन्द्राभरणेव काचिदासीत् ॥"

अत्रार्थे—

"भास्वत्कपोलतलकुण्डलपारिहार्यसन्मेखलामणिगणप्रतिबिम्बितेन ।
चन्द्रेण भाति रमणी रमणीयवक्त्रशोभाभिभूतवपुषेव निषेव्यमाणा ॥"

---

लक्ष्म्याः इति । क्षीरनिधेः क्षीरसमुद्राद् उदक्तं प्रकटं वपुः शरीरं यस्यास्तस्या लक्ष्म्याः, वेणीलतायाः केशपाशस्य अग्रात् च्युताः पतिताः, सूत्रं विनैव सुभगाः सुन्दराः, मुक्ताग्रथनां मुक्तामयीमालावत् गुम्फनां प्राप्ताः जाता ये पयोबिन्दवो जलकणाः वर्त्तन्ते ते, विशेषं यथा स्यात्तथा सस्पृहा सोत्सुकेति भावः, या दृक् तया तद्द्वारा शार्ङ्गिणा विष्णुना दृष्टाः, सुधावत्स्वादवो मधुरा अत एव हेलया लीलया उद्ग्रीवाभिः उत्कन्धराभिः जले शय्यमानानां हंसानां वनिताभिः लीढा आस्वादिताः पयोबिन्दवो वो युष्मान् पान्तु रक्षन्तु । अत्र पूर्वपद्योक्त एवार्थो लक्ष्मीनारायणसम्बन्धेन उत्कर्षतां नीतः ।

पूर्वमिति । यः पूर्वमारम्भे सदृशः पश्चादुपसमावर्त्तनसमये भिन्नः सः जीवञ्जीवक नामा षष्ठः काव्यप्रकारः ।

नयनेति । काचिन्नायिका, नयनयोः नेत्रयोरुदरयोर्मध्यभागे कपोलभागे गण्डतले, रुचिमन्तः कान्तिमन्तः रत्नानां गणा येषु तेषु भूषणेषु आभरणेषु सकल एव प्रतिबिम्बित इन्दुबिम्बो यस्यां सा । शतं चन्द्रा एवाभरणानि यस्याः सा एव आसीत् अभवत् ।

भास्वदिति । काचिद्रमणी, भास्वन्तो देदीप्यमानाः ये, कपोलयोस्तले कुण्डले पारिहार्यौ, सत्यां समीचीनायां मेखलायां स्थिता मणिगणाश्च, तेषु प्रतिबिम्बितेन

प्राक्तनवाक्याभिप्रायनिबंधो भावमुद्रा ।

यथा—

"ताम्बूलवल्लीपरिणद्धपूगास्वेलालतालिङ्गितचन्दनासु ।
तमालपत्रास्तरणासु रन्तुं प्रसीद शश्वन्मलयस्थलीषु ॥"

अत्रार्थे—"निश्चेतनानामपि युक्तयोगदो नूनं स एनं मदनोऽधितिष्ठति ।
एला यदाश्लिष्टवतीह चन्दनं पूगद्रुमं नागलताधिरोहति ॥"

पूर्वार्थपरिपन्थिनी वस्तुरचना तद्विरोधी ।

यथा—हारो वक्षसि दन्तपत्रविशदं कर्णे दलं कौमुदं
मालामूर्ध्नि दुकूलिनी तनुलता कर्पूरशुक्तौ स्तनौ ।

---

प्रतिफलितेन चन्द्रेण इन्दुना रमणीयस्य शोभनस्य वक्त्रस्य शोभया अभिभूतं वपुः शरीरं यस्य तेन, अत एव निषेव्यमाणा इव भाति शोभते । अत्र पद्ययोरेतयोरारम्भसमये साम्यं स्पष्टमेव । उपसंहारे च चन्द्रप्रतिबिम्बनस्य नायिकामुखशोभानिर्जितत्वात्तेन सेव्यत इवेति उत्प्रेक्षणं कृतमतो भेदः ।

प्राक्तनेति । प्राक्तनकविनिर्मितवाक्यानामभिप्रायस्य आशयस्य निवन्ध उल्लेखः यत्र क्रियते स भावमुद्रानामेति व्यवह्रियते काव्यप्रकारः परपुरप्रवेशसदृशस्य सप्तमः ।

ताम्बूलेति । ताम्बूलस्य वल्ल्या लतया परिणद्धाः संसक्ताः पूगाः क्रमुकाः । गुवाकः क्रमुकः पूगः इत्यमरः । यासु तासु । एलाया लतया आलिङ्गितानि चन्दनानि यासु तासु । तमालपत्राणामास्तरणानि यासु तासु । मलयस्याद्रेः स्थलीषु शश्वद्रन्तुं निरन्तररमणाय प्रसीद ।

निश्चेतनानामिति । नूनमवश्यं निश्चेतनानां स्थावराणामपि युक्तं संवद्धं योगं अलभ्यलाभं ददातीति युक्तियोगदोः मदनः एनं वसन्तमधितिष्ठति । यद्यस्मादिह वसन्ते एलाचन्दनमाश्लिष्टवती नागलता ताम्बूललता पूगद्रुमं क्रमुकवृक्षमधिरोहति अधितिष्ठति । अत्रोत्तरार्धे प्राक्तनस्य महाकविकालिदासप्रथितवस्तुनो रघुवंशस्य पद्यपूर्वार्धगताशयमनुरुध्य जग्रन्थ कविः कश्चित्पद्यमेतत् ।

पूर्वार्थेति । पूर्वं केनापि उक्तस्यार्थस्य परिपन्थिनी विरुद्धा वस्तुनः काव्यार्थस्य रचना निर्मितिः यत्र जायते स तद्विरोधी इत्याख्यां स्वीकरोति ।

हार इति । शुक्लाभिसारिकाया वर्णनपरमिदं पद्यम् । हे सुन्दरि ? नायिके ? किमेष वक्ष्यमाणो वेषो नेपथ्यम् त्वया शरच्चन्द्रात् शिक्षितः अधीतः । चन्द्रस्य सर्वतो भावेन श्वेतत्वान्महानुभावत्वाच्च शिक्षितुं युज्यते । वक्षसि उरः स्थले हारः मुक्तावलीः । कर्णे अर्थात् कर्णयोः ( जात्या एकत्वमभिहितं कर्णपदे एकस्मिन् कर्णे भूषणधारणं श्राङ्गारिकरीतिविरुद्धम् ) दन्तपत्रवद्विशदं धवलंकौमुदं कैरवीयं दलं पत्रम् । पत्रं पलाशं

वक्त्रे चन्दनबिन्दुरिन्दुधवलं बालं मृणालं करे
वेषः किं सित एष सुन्दरि शरच्चन्द्रात्त्वया शिक्षितः ॥"

अत्रार्थे—"मूर्तिर्नीलदुकूलिनी मृगमदैः प्रत्यङ्गपत्रक्रिया
बाहू मेचकरत्नकङ्कणभृतौ कण्ठे मसारावली ।
व्यालम्बालकवल्लरीकमलिकं कान्ताभिसारोत्सवे
यत्सत्यं तमसा मृगाक्षि विहितं वेषे तवाचार्यकम् ॥"
इत्यर्थहरणोपाया द्वात्रिंशदुपदर्शिताः ।
हानोपादानविज्ञाने कवित्वं तत्र मां प्रति ।

छदनं दलं पर्णं छदः पुमानित्यमरः । मूर्ध्नि मस्तके माला श्वेतपुष्पाणामावलीः । तनु लता देहयष्टिः दुकूलिनी श्वेतोर्ध्ववस्त्रवती अर्थात् देहे दुकूलम् , स्तनौ कर्पूरेण शुक्लौ पाण्डुरौ अर्थात् स्तनयोः कर्पूरधूलिः, उभयस्मिन्नस्मिन् वाक्ये प्रक्रमभङ्गः यतः पूर्वत्र उत्तरत्र च पदार्थानां परस्परमाधाराधेयभावोऽभिहितः अत्र तु विशेष्यविशेषणतया समानकुक्षिनिक्षिप्तौ ताविति । वक्त्रे मुखे इन्दुवद्धवलश्चन्दनबिन्दुः । इन्दुधवल इति सपुंस्त्वपाठः समीचीनः यतो बिन्दुशब्दस्य पुंस्त्वात् तस्य चैतद्विशेषणत्वात् । तथाच अभियुक्तानां समाचारः "यल्लिङ्गं यद्वचनं या च विभक्तिर्विशेष्यस्य तल्लिङ्गं तद्वचनं सा च विभक्तिर्विशेषणस्यापि विहायाजहल्लिङ्गमिति । तत्पुंस्त्वं च "पृषन्ति बिन्दुपृषताः पुमांसो विप्रुषः स्त्रियामि"ति कोषप्रामाण्यात् । इन्दुधवलम् , अथ च बालं मृणालमिति रीत्या तु क्लीब एव पाठः । करे ( करयोरिति तदर्थः ) बालमभिनवं मृणालम् नलिनम् ।

मूर्तिरिति । इह कृष्णाभिसारिकाया वर्णनं कृतम् । हे मृगाक्षि ? एणनयने ? कान्ताभिसारोत्सवसामयिके वेषरचने तमसा अन्धकारेण तव भवत्या आचार्यकम् उपाध्यायकर्म विहितं सम्पादितं, सत्यमेतत्, यद्यतः मूर्तिः शरीरम् । गात्रं वपुः संहननं शरीरं वर्ष्म विग्रहः । कायो देहः क्लीवपुंसोः स्त्रियां मूर्तिस्तनुस्तनूरित्यमरः । नीलरंगवोद् दुकूलवती, मृगमदकरणिका कस्तूरीकरणिका प्रत्यङ्गं पत्रक्रिया विशेषककृत्यम् । मेचकरत्नं नीलमणिः । तैः प्रत्युप्ताभ्यां कङ्कणाभ्यां भृतौ पूर्णौ बाहू भुजे । कण्ठे गले मसाराणामिन्द्रनीलमणीनामावली माला । अलिकं ललाटं व्यालम्बा अधः प्रसरन्त्य अलकवल्लर्यः चूर्णकुन्तलता यस्मिँस्तत् ।

इत्यर्थेति । इत्येवं प्रकारेण द्वात्रिंशत् अर्थस्य काव्यार्थस्य हरणे ग्रहणे उपायाः साधनानि उपदर्शिता प्राकट्यं नीताः । तत्र द्वात्रिंशदुपायेषु अस्य हानं त्यागः कर्त्तव्यम्, अस्य च उपादानं स्वीकारः कर्त्तव्यमिति विशिष्टज्ञाने सत्येव मां प्रति मन्मते कवित्वं काव्यं सिद्धं भवतीति शेषः ।

किं चैते हरणोपाया ज्ञेयाः सप्रतियोगिनः ।
अर्थस्य वैपरीत्येन विज्ञेया प्रतियोगिता ॥

किञ्च—शब्दार्थशासनविदः कति नो कवन्ते
यद्वाङ्मयं श्रुतिधनस्य चकास्ति चक्षुः ।
किन्त्वस्ति यद्वचसि वस्तु नवं सदुक्ति
सन्दर्भिणां स धुरि तस्य गिरः पवित्राः ॥

॥ इति राजशेखरकृतौ काव्यमीमांसायां कविरहस्ये प्रथमेऽधिकरणे
अर्थहरणेष्वालेख्यप्रख्यादिभेदास्त्रयोदशोऽध्यायः ॥

---

किंचेति । किंच अन्यच्च एते पूर्वोक्ता हरणोपायाः सप्रतियोगिनः सप्रतिद्वन्द्विनो-ज्ञेयाः । कुतः सप्रतियोगित्वमत आह-अर्थस्येति । अर्थस्य वैपरीत्येन एकत्र योऽर्थः निर्दिष्ट उपपादितो वा तत्प्रतिकूलतया निर्देशे कृते प्रतियोगिता विज्ञेया विज्ञातव्या ।

अन्यदपि उपसंहारदिशा निदर्शयति-शब्दार्थेति । कति । शब्दश्चार्थश्चेति शब्दार्थौ तयोः शासनं विदन्तीति ते शाब्दिका नैयायिकाश्च नो कवन्ते काव्यं न कुर्वन्ति । अपि तु कुर्वन्त्येव; किन्तु यद्वाङ्मयं यच्छास्त्रं श्रुतिधनस्य अध्ययनशीलस्येति भावः । चक्षुः नेत्ररूपेण चकास्ति शोभते । यथा चोक्तम् ।

चक्षुष्मत्ता तु शास्त्रेण सूक्ष्मकार्यार्थदर्शिना इति ।

तथा यद्वचसि यस्य वाक्ये नवं नूतनं सदुक्ति सुभासितं वस्तु अस्ति । स सन्दर्भिणां ग्रन्थकाराणां धुरि अग्रे कीर्त्तनीयः, तस्य गिरः पवित्रा पूताः सन्ति ।

इति साहित्याचार्याहिताग्निश्रीमधुसूदनशर्मणः कृतौ मधुसूदनीविवृतौ अर्थहरणेषु आलेख्यप्रख्यादिविवरणं नाम त्रयोदशोऽध्यायः ।

---

# चतुर्दशोऽध्यायः

# कविसमयः ।

## तत्र जातिद्रव्यक्रियासमयस्थापना ।

अशास्त्रीयमलौकिकं च परम्परायातं यमर्थमुपनिबध्नन्ति कवयः स कविसमयः ।

---

॥ श्रीः ॥

भक्ते वाञ्छितदा वराभयकरा सिंहाधिरूढा शुभा
कुर्वन्ती निजमञ्जुहास्यकलया मन्दप्रभं शीतगुम् ।
माहेन्द्रीं श्रियमातनोति विपुलां संसेवनाद्या हि तां ।
तप्तस्वर्णनिभामसद्विदलनीं देवीं समराधये ॥

अथ क्रमपरम्परायातं कवीनां संप्रदायमाख्यातुं सूत्रमवतारयति-कविसमय इति । कवीनां स्वकर्मणि यः समयः सिद्धान्तो रहस्यं सम्प्रदाय इति यावत् । समयः शपथाचारकालसिद्धान्तकोविदाः इति कोषात समयशब्दस्यानेकार्थकत्वम् । तथाच कुत्रचित् समयपदेन आचारो वक्ष्यते-यथा मकरादीनां गङ्गादिसरित्स्वपि सम्भवः तथापि समुद्रेष्वेव ते वर्ण्यंते, तथा ग्रीष्मादौ सम्भवतोपि कोकिलविरावस्य वसन्तर्त्तावेव निबन्धा भवति एष कवीनामाचारः । सचायमाचारो नियमपदेन वक्ष्यति ग्रन्थकारः । क्वचिच्च समयपदेन सिद्धान्तो गृह्यते, यथा-कामस्य मूर्त्तत्वं हरनेत्रवह्निभस्मीकृतत्वेनानङ्गत्वेपि । अत एव समयपदस्य रहस्यपदेन विवरणं कृतम् । सचायं कविसमयः चतुर्दशपञ्चदशषोडशाध्यायः क्रमशः स्फुटीकरिष्यते ग्रन्थकारेणेति शेषः ।

सोयं कविसमयः किंलक्षणक कतिभेदभिन्नः किमात्मकः इति ग्रन्थकृत्स्वयमेव कथयिष्यति—तत्र किंलक्षणक इत्याह-अशास्त्रीयमिति । अशास्त्रीयं शास्त्रबहिर्भूतम्, अलौकिकं लोकाविज्ञातमपि । चकारोऽप्यर्थः समुच्चयार्थको वा । परम्परायातं कविसम्प्रदायसम्प्राप्तं यं कञ्चिदर्थं कवयः उपनिबध्नन्ति काव्ये संजाघटन्ति स कविसमयः काव्यकर्तॄणां सिद्धान्त सम्प्रदाय आचारो वा ।

अत्र आचार्यविप्रतिपत्तिं दर्शयति-नन्विति । ननु शङ्कायाम् । एष अशास्त्रीयालौकिकार्थोपनिबन्धः दोषः, पुनरतः कथं काव्ये निवेशयितुं योग्यः । आचार्याणामयं भावः यो हि पदार्थः शास्त्रसंम्मतो नास्ति अथ च लोकविरुद्धोऽपि वर्त्तते अर्थान्नास्ति शास्त्रलोकयोः कतरेणापि सम्मतः प्रत्युत विरोधितामापन्नः स कथं साहित्यशास्त्रे प्रवेशं लब्धुं शक्नुयात्, अन्यथा च उन्मत्तप्रलपितवदेतच्छास्त्रं प्रेक्षावद्भिरुपेक्ष्यं स्यात् । इति ।

"नन्वेष दोषः कथङ्कारं पुनरुपनिबन्धनार्हः ?" इति आचार्याः । "कविमार्गानुग्राही कथमेष दोषः ?" इति यायावरीयः । "निमित्तं तर्हि वाच्यम्" इति आचार्याः ॥

"इदमभिधीयते" इति यायावरीयः । पूर्वे हि विद्वांसः सहस्रशाखं साङ्गं च वेदमवगाह्य, शास्त्राणि चावबुध्य, देशान्तराणि द्वीपान्तराणि च परिभ्रम्य, यानर्थानुपलभ्य प्रणीतवन्तस्तेषां देशकालान्तरवशेन अन्यथात्वेऽपि तथात्वेनोपनिबन्धो यः स कविसमयः । कविसमयशब्दश्चायं मूलमपश्यद्भिः प्रयोगमात्रदर्शिभिः प्रयुक्तो रूढश्च ।

तत्र कश्चिदाद्यत्वेन व्यवस्थितः कविसमयेनार्थः, कश्चित्परस्परोपक्रमार्थं

---

उत्तरति स्वयं ग्रन्थकारः-कविमार्गेति । एष एतादृश उपनिबन्धः कवीनां मार्गस्य अनुग्राही वर्त्तते, अतः कथं दोषः । अयं भावः—कवयः प्रबन्धयितुं चेष्टन्ते तत्र केनापि मार्गपरिदर्शकेनावश्यं भाव्यम्; अस्य च मार्गपरिदर्शकत्वान्न दोषवत्त्वमिति । एवं स्थितिश्चेत्तर्हि निमित्तं वाच्यम्, अर्थात् शास्त्रासम्मतलोकविरुद्धपदार्थोपनिबन्धे केनापि कारणेनावश्यं वक्तव्यं तच्च कारणं किम् इत्याशयवन्त आचार्याः ।

कारणमिदमेतदभिधीयते प्रोच्यते इति ग्रन्थकारः ।

पूर्वे प्राक्तनाः विद्वांसः प्रेक्षा वन्तः सहस्रशाखायुतभंगैः सहितं वेदं श्रुतिमवगाह्य आलोड्य शास्त्राणि च अवबुद्धय ज्ञात्वा देशान्तराणि अन्यदेशेषु द्वीपान्तराणि भिन्नभिन्नद्वीपेषु परिभ्रम्य आहिण्डय ये ये अर्थाः पदार्थाः उपलब्धा ते च तैः प्रबन्धरूपेण प्रणीताः तेषां पदार्थानां देशान्तर वशेन कालान्तरवशेन च भिन्नत्वेऽपि तथात्वेन तद्रूपेणैव उपनिबन्धो ग्रथनं स कविसमयः । कविसमयशब्दप्रयोगे वस्तुस्थितिं दर्शयति-कविसमय इति । अयं शब्दः मूलकारणमपश्यद्भिः अजानद्भिः केवलं प्रयोगं दर्शिभिः प्रयुक्तः प्रयोगतां नीतः पश्चाच्च रूढः ।

तत्रेति । कश्चिदर्थः आद्येन प्रथमेन प्राचीनेन कविसमयेन व्यवस्थितः, कश्चिच्च परस्परस्य अन्योन्यस्य उपक्रमार्थं आरम्भाय प्रसिद्ध्यार्थमिति भावः । स्वार्थाय स्वार्थसिद्धिकरणाय धूर्त्तःप्रवर्त्तितः प्रचारितः । सचेति । सच कविसमयः । भौमः भूमिसम्बन्धवान् । स्वर्ग्यः स्वर्गसम्बद्धः । पातालीयः पातालगतः । स्वर्गपातालगतयोः कविसमययो र्मध्ये भौमः कविसमयः प्रधानः । प्रधाने हेतुं दर्शयति—महाविषयः । इतरापेक्षया तस्य महाविषयत्वात् । स च भौमः कविसमयः जातिरूपाथतया द्रव्यरूपार्थतया गुणरूपार्थतया क्रियारूपार्थतया चतुर्द्धा चतुः संख्याकः । तेपि जात्यादयोऽपि । असतो निबन्धादिति, यो हि पदार्थः लोकादृष्टः शास्त्रे अश्रुतः तस्य निबन्धः काव्यघटकतयोल्लेखात् । सतोप्यनि-

स्वार्थाय धूर्त्तैः प्रवर्त्तितः। स च त्रिधा स्वर्ग्यो भौमः पातालीयश्च। स्वर्ग्यपातालीययोर्भौमः प्रधानः। स हि महाविषयकः। स च चतुर्द्धा जातिद्रव्यगुणक्रियारूपार्थतया। तेऽपि प्रत्येकं त्रिधा असतो निबन्धनात्, सतोऽप्यनिबन्धनात्, नियमतश्च। तत्र सामान्यस्यासतो निबन्धनम्, यथा—नदीषु पद्मोत्पलादीनि, जलाशयमात्रेऽपि हंसादयो, यत्र तत्र पर्वतेषु सुवर्णरत्नादिकं च।

नदीपद्मानि यथा—"दीर्घीकुर्वन्पटुमदकलं कूजितं सारसानां
प्रत्यूषेषु स्फुटितकमलामोदमैत्रीकषायः।
यत्र स्त्रीणां हरति सुरतग्लानिमङ्गानुकूलः
शिप्रावातः प्रियतम इव प्रार्थनाचाटुकारः॥"

नदीनीलोत्पलानि--"गगनगमनलीलालम्भितान्स्वेदबिन्दून्
मृदुभिरनिलवारैः खेचराणां हरन्तीम्।

---

बन्धादिति, यो हि पदार्थः उभयत्र शास्त्रलोकयोः विद्यते तस्य अनिबन्धात् अनुल्लेखात्। नियमतश्चेति पदार्थविषयकोल्लेखानुल्लेखनियन्त्रणाच्च भिन्ना अतः त्रिप्रकारवन्तः।

नदीष्विति। नदीषु पद्मानाम्, उत्पलानाम्, आदिशब्दात् कुमुदादीनां संग्रहः। अवर्त्तमानानामपि वर्त्तमानत्वेन निबन्धो भवतीति कविसमयसिद्धसंप्रदायः। यावन्तो जलाशयाः तत्र सर्वत्रापि हंसादीनां निबन्धः कार्यः एषो हि कवीनामागमः। यत्र तत्र पर्वतेषु न तु पर्वतमात्रे सुवर्णस्य रत्नानां च।

नदीषु पद्मानामुल्लेखो यथा-दीर्घीकुर्वन्निति यत्र यस्यामलकायां प्रत्यूषेषु अहर्मुखेषु पटु श्राव्यं मदेन कलं मधुरं सारसानां हंसविशेषाणां कूजितं ध्वनितं दीर्घीकुर्वन् विशदयन्, स्फुटितानां विकसितानां कमलानामामोदेन अतिनिर्हारिसौरभेण। "आमोदः सोतिनिर्हारी वाच्यलिङ्गत्वमागुणात्" इत्यमरः। या मैत्री संसर्गः, तया कषायः प्रियतम इव प्रेयानिव प्रार्थनायां चाटु, मधुरालापं करोतीति प्रार्थनाचाटुकारः अङ्गानामवयवानामनुकूलः शिप्रानाम्न्या नद्या वातः समीरः स्त्रीणां नायिकानां सुरतजन्यां निधुवनभवित्रीं ग्लानिं खेदं हरति दूरीकरोति। अत्र शिप्रावातस्य असतामपि कमलानामामोदमैत्रीकषायत्वमुपवर्णितम्।

नद्यां नीलोत्पलानां वर्णनं यथा-गगनेति। स अनिर्दिष्टनामा कश्चिद्दर्शकः, जाह्नवीं गङ्गामपश्यत् ददर्श। किंभूतां गङ्गां,मृदुभिः कोमलैः,अनिलवारैः समीरसमूहैः खेचराणां गगनचारिणां गगने खे गमनसमये या लीला तया लम्भितान् प्रापितान् स्वेदसम्बन्धिबिन्दून् घर्मसम्बन्धिकणान्। घर्मो निदाघः स्वेदः स्यादिति कोषोऽमरः। हरन्तीं दूरीकुर्व-

कुवलयवनकान्त्या जाह्नवीं सोऽभ्यपश्यत्
दिनपतिसुतयेव व्यक्तदत्ताङ्कपालीम् ॥"

एवं नदीकुमुदाद्यपि । सलिलमात्रे हंसा यथा—

आसीदस्ति भविष्यतीह स जनो धन्यो धनी धार्मिकः
यः श्रीकेशववत्करिष्यति पुनः श्रीमत्कुडुङ्गेश्वरम् ।
हेलान्दोलितहंससारसकुलक्रेंकारसम्मूर्च्छितै-
रित्याघोषयतीव तन्नवनदी यच्चेष्टितं वारिभिः ॥"

पर्वतमात्रे सुवर्णं यथा—

"नागावासश्चित्रपोताभिरामः स्वर्णस्फीतिव्याप्तदिक्चक्रवालः ।
साम्यात्सख्यं जग्मिवानम्बुराशेरेष ख्यातस्तेन जीमूतभर्ता ॥"

---

लीम् । पुनः कीदृशीं गङ्गां कुवलयानामुत्पलानाम् । स्यादुत्पलं कुवलयमित्यमरः । वनस्य काननस्य या कान्तिः शोभा तया । अटव्यरण्यं विपिनं गहनं काननं वनमित्यमरः । शोभा कान्तिर्द्युतिश्छविरित्यमरः । दिनपतेः सूर्यस्य या सुता पुत्री कालिन्दी । "कालिन्दी सूर्यतनया यमुना शमनस्वसा"इत्यमरः । तयेव व्यक्तं स्फुटं यथा स्यात्तथा दत्ता अङ्कपाली उत्सङ्गपाली यस्यै ताम् ।

पालिः कर्णलताग्रेऽस्त्रौ पंक्तावंकप्रभेदयोः ।
छात्रादिदेये स्त्री पाली यूकास्श्मश्रुयोषितोरिति मेदिनी ॥

अपश्यत् अवालुलोके । एवं पूर्वोक्तकारेण असदपि नदीगतत्वेन वर्णितं कुमुदादि अपि द्रष्टव्यम् ।

सलिलेति । सलिलपदस्य स्वाधारे ( सलिलाशये ) लक्षणा बोध्या । अन्यथा गेहस्थितघटगतजलपार्श्वेपि हंसस्य वर्णनं कर्त्तव्यं भविष्यति । मात्रशब्दः कृत्स्नार्थकः । हंसा वर्णिता यथा—आसीदिति । यत् हेलया लीलया आन्दोलितानि प्रेरितानि यानि हंसानां सारसानां कुलानि तेषां क्रेङ्कारेण क्रें क्रेमिति शब्देन सम्मूर्छितैः संपृक्तैः वारिभिर्जलैश्च चेष्टितं तत् नवा नूतना नदी सरित इतीत्थमाघोषयतीव डिण्डिमं कुर्वतीव । इतीति किम्, इह लोके । स जनः पुरुषः धन्यः प्रशस्यः, धनी आढ्यः धार्मिकः पुण्यात्मा आसीत्, तथा अस्ति, एवं भविष्यति च यः पुनः श्रीमत्कुडुङ्गेश्वरं कुडुङ्गदेशाधीश्वरं श्रिया विलसितकेशववत् श्रीकृष्णतुल्यं करिष्यति । अत्र सामान्येन उपात्तेषु जलेषु हंसानां वर्णनं कविना कृतम् ।

पर्वतेति । पर्वतमात्रे यावत्पर्वते सुवर्णं वर्णनीयं तद् यथा—नागावास इति । यत एव पुरो दृश्यमानो जीमूतानामद्रीणां मेघानां वा भर्त्ता अधीशः । जीवनस्य जलस्य

रत्नानि यथा—

"नीलाश्मरश्मिपटलानि महेभमुक्तसूत्कारसीकरविसृञ्जि तटान्तरेषु ।
आलोकयन्ति सरलीकृतकण्ठनालाः सानन्दमम्बुदधियाऽत्र मयूरनार्यः ॥"

एवमन्यदपि । सतोऽप्यनिबन्धनम्, तद्यथा—न मालती वसन्ते, न पुष्प-

---

मूतः पट इति जीमूतः । पृषोदरादित्वात्साधुः । तेषां भर्त्ता धारकः । उभथापि पवतः । भर्त्ता धातरि पोष्टरीत्यमरः । जीमूतोऽद्रौ भृतिकरे देवताडे पयोधरे इति मेदिनी । नागान् मेघान् आवासयतीति नागावासः । अम्बुराशिपक्षे च नागानां जलगजानामावासः निवासस्थानमिति यावत । अथवा जीमूतश्चासौ भर्त्ता जीमूतभर्त्ता जीमूतवाहनः श्रीहर्षकृतवासवदत्तानाटकीयो नायकः । अस्मिन् पक्षे नागाः सर्पाः तान् आवासयति गारुडीयभयराहित्येन निवासयतीति नागावासः ।

नागो मतङ्गजे सर्पे पुंनागे नागकेशरे
क्रूराचारे नागदन्ते मुस्तके वारिदेऽपि च ।
देहानिलविशेषे च श्रेष्ठे स्यादुत्तरस्थितः
नागं रङ्गे सीमपत्रे स्त्रीवन्धे करणान्तरे ॥ इति हैमः
पक्षान्तरे च पोतैः वहित्रैः । पक्षान्तरे पोतैः वासोभिः ।
पोतैः क्रीडार्थमागतदंपतीनां गृहस्थानविशेषैः ।
पोतः शिशौ वहित्रे च गृहस्थाने च वाससि । इति अजयः ।

चित्रैः नानावर्णैः । अभिरामः सुन्दरः स्वर्णस्य शोभनस्य जलस्य या स्फीतिः वृद्धिः । तया व्याप्तं दिशामाशानां चक्रवालं मण्डलं येनासौ । चक्रवालं तु मण्डलमित्यमरः । स्वर्णं सुवर्णम् । स्वर्णैः शोभनाक्षरैः व्याप्तं दिक्चक्रवालं येनासौ । अम्भोर्णस्तोयपानीयमित्यमरः ।

अर्णसोऽक्षरपर्यायत्वे प्रमाणं तु नवार्णो मंत्रो दुर्गायाः । ऐंह्रींक्लीं चामुण्डायै विच्चे इत्यात्मकः । नव अर्णांसि अक्षराणि यस्मिन्नसौ । बहुव्रीहौ डज् । एतादृशो वर्त्ततेऽतः साम्याद् अम्बुराशेः समुद्रस्य सख्यं मैत्री जग्मिवान् गतः तेनहेतुना चायं ख्यातः प्रसिद्धः ।

पर्वतमात्रे रत्नानि मणयो वर्णनीयानि, तानि यथा—नीलाश्मेति । अत्र नीलाद्रौ सरलीकृतः अविषमीकृतः वक्रतारहितः कण्ठ एव नालो यासां ताः । मयूराणां नार्यः स्त्रियः । तटान्तरेषु पर्वतैकदेशेषु महेभैः महागजैः मुक्तास्त्यक्ता ये सूत्कारा जलमिश्रित सूदितिध्वनयः । तेभ्यः आगत्य सन्तान् सीकरान् जलकणान् विसृजन्ति मुंचन्ति तानि तथोक्तानि । नीलाश्मन इन्द्रनीलमणेः रश्मिपटलानि किरणवृन्दानि अम्बुदधिया जलदबुद्ध्या सानन्दं यथा स्यात्तथा आलोकयन्ति ।

द्वितीयं नियमं दर्शयति—सत इति । सतस्तत्तत्काले तत्तद्वस्तुनः सद्भावेऽपि तस्य

फलं चन्दनद्रुमेषु, न फलमशोकेषु ।

तत्र प्रथमः--"मालतीविमुखश्चैत्रो विकासी पुष्पसम्पदाम् ।
आश्चर्यं जातिहीनस्य कथं सुमनसः प्रियाः ॥"

द्वितीयः--"यद्यपि चन्दनविटपी विधिना फलकुसुमवर्जितो विहितः ।
नाशोकऽस्य किसलयैर्वृक्षान्तरपल्लवास्तुल्याः ॥"

अनेकत्र प्रवृत्तवृत्तीनामेकत्राचरणं नियमः, तद्यथा-समुद्रेष्वेव मकराः, ताम्रपर्ण्यामेव मौक्तिकानि ।

तयोः प्रथमः--"गोत्राग्रहारं नयतो गृहत्वं स्वनाममुद्राङ्कितमम्बुराशिम् ।
दायादवर्गेषु परिस्फुरत्सु दंष्ट्रावलेपो मकरस्य वन्द्यः ॥"

---

काव्यघटकतया उल्लेखो न कार्यः । यथा-न स्याज्जातिर्वसन्त इति रीत्या वसन्ततौं समुत्पन्नाया अपि मालत्या वर्णनीयतया काव्ये उल्लेखो न कर्तव्यः । एवमेव चन्दनद्रुमेषु पुष्पफलयोः, अशोकेषु फलस्य वर्णनं नाचरणीयम् ।

मालतीति । मालत्या विमुखो रहितः चैत्रो मासः पुष्पसम्पदां पुष्पलक्ष्मीणाम् विकासी । चैत्रे मालतीं विहाय सर्वासां लतानां पुष्पाणि विकसन्ति इति भावः । जात्या मालत्या पक्षान्तरे जात्या ब्राह्मणरूपया हीनस्य रहितस्य चैत्रस्य, पक्षे च अधमस्य पुंसः । कथं सुनसः पुष्पाणि पक्षे देवाः प्रिया प्रेमाख्यचित्तवृत्तिविषयाः । इत्याश्चर्यम् ।

यद्यपीति । यद्यपि विधिना दैवेन चन्दनविटपी चन्दनद्रुमः फलैः कुसुमैश्च वर्जितो रहितो विहितः कृतः, तथापि निजवपुषा एव स्वशरीरेणैव अपरेषां सन्तापमपहरतीति भावः । धनसमृद्ध्यापि रहितस्य किन्तु स्वशरीरेणैव केवलं महोपकृतवतः कस्यचिन्महापुरुषस्य समाचारः प्रतीयते । यः स्वशरीरेणैव एवं परानुपकारोति तस्य यदि धनसमृद्ध्यादीनि भवेयुस्तर्हि कियदुपकारो न संम्भाव्येतास्मात्किन्तु दैवायत्ते फले किं क्रियताम् । अत्राशोकविषये एतत्तु वदामः । अस्याशोकस्य किसलयैः दलैः तुल्याः सदृशाः वृक्षान्तराणां पल्लवा पलाशानि न सन्ति । एतेन सततं कर्म कुर्वतोपि नैष्फल्यमाप्नुवतो महापुरुषस्यापि समाचारः प्रतीयते । यद्यपि अस्य कर्मणः फलसिद्धिर्नास्ति तथापि साहश्यस्य शततमीमपि कलां नारोढुमितरे प्रभवन्ति इत्यत्राप्रस्तुतप्रशंसालंकारः ।

अनेकत्रेति । यद् बहुषु स्थलेषु प्रवृत्तवृत्तीनां संजातव्यवहाराणां केवलमेकस्मिन्नेव स्थले आचरणं व्यवहरणं स नियमः । तद्यथा--समुद्रेषु एव सागरेषु एव मकराः वर्णनीयाः । ताम्रपर्ण्यां नद्यामेव मौक्तिकानि वर्णनीयानि ।

द्वितीयः--

"कामं भवन्तु सरितो भुवि सप्रतिष्ठाः स्वादूनि सन्तु सलिलानि च शुक्तयश्च ।
एतां विहाय वरवर्णिनि ताम्रपर्णीं नान्यत्र सम्भवति मौक्तिककामधेनुः ॥"

असतोऽपि द्रव्यस्य निबन्धनम्, तद्यथा—मुष्टिग्राह्यत्वं सूचीभेद्यत्वं च तमसः, कुम्भापवाह्यत्वं च ज्योत्स्नायाः ।

तत्र प्रथमम्--"तनुलग्ना इव ककुभः भूवलयं चरणचारमात्रमिव ।
दिवमिव चालिकदघ्नीं मुष्टिग्राह्यं तमः कुरुते ॥"

यथा च--पिहिते कारागारे तमसि च सूचीमुखाग्रनिर्भेद्ये ।
मयि च निमीलितनयने तथापि कान्ताननं व्यक्तम् ॥"

---

गोत्रेति । गोत्रायाः पृथिव्याः । गोत्रा कुः पृथिवी पृथ्वी क्ष्मावनिर्मेदिनी मही त्यमरः । अग्रं श्रेष्ठं हारं मौक्तिकमालारूपम् । ( अथवा गोत्राणां सगोत्राणामग्र प्रथमो हारो भोजनं यत्र तम्) स्वनाम्नो मुद्रयाऽङ्कितम् । मकरालयेति संज्ञितम् । अम्बुराशिं समुद्रं गृहत्वं नयतः प्रापयतः मकरस्य, परिस्फुरत्सु साधारणोन्नतिकार्यकारणेन स्वप्रौढिं प्रख्यापयत्सु दायादवर्गेषु स्वसपिण्डसमुदायेषु । दायादस्तु भवेत्पुंसि सपिण्डे तनयेऽपि चेति मेदिनी । दंष्ट्राया अवलेपो गर्वो वन्द्यः प्रशंसनीयः ।

काममिति । भुवि लोके सरितो नद्या कामं सप्रतिष्ठाः प्रशंसनीया भवन्तु तथा तत्र सलिलानि स्वादूनि मधुराणि, एवं शुक्तयश्च सन्तु, किन्तु हे वरवर्णिनि ? एतां ताम्रपर्णीं नदीं विहाय अन्यत्र नदीषु मौक्तिकानां कामधेनुर्न सम्भवति । मौक्तिकप्रसवितॄणां शुक्तीनां तु सम्भवोऽत्रैवेति भावः ।

असत इति । असतोऽपि लोकेऽविद्यमानस्यापि द्रव्यस्य वस्तुनः कविसमयसिद्धत्वान्निबन्धनमुल्लेखो भवति । तद्यथेति दर्शयति—मुष्टिग्राह्यत्वमिति । तमसोऽन्धकारस्य अतिशयगाढत्वप्रतिपादनाय मुष्टिद्वारा ग्राह्यत्वम् , सूच्या भेद्यत्वं छेदनीयत्वम् तथा ज्योत्स्नायाः कौमुद्याः कुम्भैः घटैरपवाह्यत्वं नेयत्वमुपवर्ण्यते ।

तत्र तमोज्योत्स्नयोर्मध्ये प्रथमं तमसो मुष्टिग्राह्यत्वं यथा-तनुलग्ना इति । मुष्ट्या ग्राह्यमुपादातुं योग्यं गाढमिति भावः। तमोन्धकारः, ककुभो दिशस्तनुलग्ना इव शरीरसंपृक्ता इव कुरुते । तथा भुवो वलयं महीमण्डलम् । चरणैः । चार एव चारमात्रं गन्तव्यमात्रमिव । दिवमाकाशम् । अलिकदघ्नीमिव भालपरिमाणामिव कुरुते तनोति । एतेन अन्धकारेण सर्वं जगत् संकुचितमिव जातमिति प्रतीयते ।

तमसः सूचीग्राह्यत्वोदाहरणं यथा—पिहित इति । केनचित् परस्त्रीव्यभिचारप्रयोजककारागारावरोधदुःखितेन प्रलप्यते। यद्यपि कारागारे बन्धनागारे पिहिते,तमसि च चोप्यर्थे । अन्धकारेऽपि सूच्या मुखाग्रेण भेदयितुं योग्ये जाते सति एवमपिच । चः समु·

द्वितीयम्--"यन्त्रद्रावितकेतकोदरदलस्रोत:श्रियं बिभ्रती
येयं मौक्तिकदामगुम्फनविधेर्योग्यच्छविः प्रागभूत् ।
उत्सेच्या कलशीभिरञ्जलिपुटैर्ग्राह्या मृणालाङ्कुरैः ।
पातव्या च शशिन्यमुग्धविभवे सा वर्त्तते चन्द्रिका ॥"

द्रव्यस्य सतोऽनिबन्धनं, तद्यथा-कृष्णपक्षे सत्या अपि ज्योत्स्नायाः, शुक्लपक्षे त्वन्धकारस्य । तयोः प्रथमम्—

"ददृशाते जनैस्तत्र यात्रायां सकुतूहलैः ।
बलभद्रहृषीकेशौ पक्षाविव सितासितौ ॥"

द्वितीयम्—"मासि मासि समा ज्योत्स्ना पक्षयोः शुक्लकृष्णयोः ।

---

क्षये । निमीलिते नयने येन तस्मिन् जाते । तथापि कान्ताननं व्यक्तम् प्रेयसीमुखं स्पष्टं प्रतीयते । कान्ताननव्यञ्जनकारणानां कारागाराविहितत्वतमःसूचीमुखाग्रानिर्भेद्यत्वानिमीलितनयनत्वानामभावेऽपि कान्ताननव्यक्तिर्भवत्यताऽत्र विभावनालंकारच्छाया । उदाहरणसंगतिस्तु अत्र प्रकरणे सुस्पष्टातो न विशकलिता सुधीभिः पाठकैः स्वयं संयोज्या ।

द्वितीयं ज्योत्स्नायाः कुम्भापवाह्यत्वं यथा—यन्त्रद्रावितेति । या इयं चन्द्रिका प्रागुत्पत्त्यवच्छिन्नकाले यन्त्रेण द्रावितं विलापितम् । विलीने विद्रुतद्रुते इत्यमरः । केतकस्य उदरगतं दलं तज्जन्यस्य स्रोतसः श्रियं शोभां बिभ्रती धारयन्ती मौक्तिकस्य दाम्नो गुम्फनविधेर्योग्या तुल्या या च्छविः कान्तिरभूत् आसीत् । सा चन्द्रिका शशिनि चन्द्रे अमुग्धविभवे पूर्णतां गते सति कलशीभिः घटीभिरुत्सेच्या अञ्जलिपुटग्राह्या समासाद्या मृणालांकुरैः पाव्या पेया वर्त्तते ।

ददृशाते इति । तत्र यात्रायां गमनवेलायां सकुतूहलैः सकौतुकैः जनैर्लोकैः बलभद्रहृषीकेशौ । अत्र मुद्रितपाठस्तु बलभद्रप्रलम्बघ्नौ इति आसीत् स तु नितरामशुद्धः । तथाहि-बलभद्रः प्रलम्बघ्नो बलदेवोऽच्युताग्रजः इति कोशप्रमाणात् उभाभ्यां शब्दाभ्यां एकैव व्यक्तिरभिधीयते । एवं च सितत्वासितत्वयोः परस्परविरुद्धधर्मयोरेकत्रासमावेशात्, पक्षाविवेति पक्षद्वयसादृश्यव्याघाताच्चेति । सितासितौ शुक्लकृष्णौ पक्षौ पक्षती इव ददृशाते अवलोकितौ । बलदेवे सितपक्षसादृश्यं तस्य शुक्लवर्णत्वात् कृष्णे चासितपक्षस्य, तस्य तादृशवर्णत्वात् । यद्यपि ज्योत्स्नाया उभयगतत्वं वर्त्तते सितपक्षे रात्रेः पूर्वभागगतत्वेन, असितपक्षे अपररात्रावलम्बितत्वेन; किन्तु तस्या वर्द्धमानत्वक्षीयमाणत्वधर्मवत्तया तादृशो लोकानां व्यवहारस्तथैव च काव्ये । इति बोध्यम् ।

मासि मासि इति । मासि मासि प्रतिमासम् शुक्लकृष्णयोः सितासितयोः पक्ष-

तत्रैकः शुक्लतां यातो यशः पुण्यैरवाप्यते ॥"

द्रव्यनियमः, तद्यथा–मलय एव चन्दनस्थानं, हिमवानेव भूर्जोत्पत्तिस्थानम् ।

तत्र प्रथमः—"तापापहारचतुरो नागावासः सुरप्रियः ।
नाऽन्यत्र मलयादद्रेर्दृश्यते चन्दनद्रुमः ॥"

द्वितीयः—"न्यस्ताक्षरा धातुरसेन यत्र भूर्जत्वचः कुञ्जरबिन्दुशोणाः ।
व्रजन्ति विद्याधरसुन्दरीणामनङ्गलेखक्रिययोपयोगम् ॥"

प्रकीर्णकद्रव्यकविसमयस्तु, तद्यथा—क्षीरक्षारसमुद्रयोरैक्यं, सागरमहासमुद्रयोश्च ।

तयोः प्रथमः—

"शेतां हरिर्भवतु रत्नमनन्तमन्तर्लक्ष्मीप्रसूतिरिति नो विवदामहे हे ।
हा दूरदूरसपयास्तृषितस्य जन्तोः किं त्वत्र कूपपयसः स मरोर्जघन्यः ॥"

---

योः ज्योत्स्ना समा तुल्या, तथापि एकः पक्षः शुक्लतां यातो गतः । कुत एतदित्यत आह–यश इति । पुण्यैर्यशो लभ्यते । अत्र शुक्लत्वरूपपदार्थे यशः पुण्यै रवाप्यते इति वाक्यार्थो हेतुरिति काव्यलिङ्गालंकारः ।

कविसमयेषु द्रव्याणां नियमोऽपि वर्त्तते । यथा तेषां तेषां द्रव्याणां तत्तदेवोत्पत्तिस्थानं नान्यत् । यथा मलयपर्वत एव चन्दनजन्मभूः । हिमालयपर्वत एव भूर्जाणामुत्पत्तिस्थानमित्यादि बोध्यम् ।

तापापेति । तापस्य ऊष्णः अपहारे विनाशने चतुरः योग्यः । नागानां सर्पाणामावासभूतः सुराणां देवानां प्रिय इष्टः चन्दनद्रुमः मलयात् मलयनामकादद्रेः पर्वतात् अन्यत्र स्थानान्तरे न दृश्यते,चन्दनं तत्रैवोत्पद्यते नान्यत्र पर्वतादिषु इति भावः।

न्यस्तेति । यत्र हिमालये धातुरसेन गैरिकादिधातुद्रवेण न्यस्ताक्षरा दत्तवर्णाः कुञ्जरस्य हस्तिनः विन्दुवच्छोणाः रक्ताः भूर्जत्वःच विद्याधराणां सुन्दरीणां नायिकानाम् अनङ्गोद्देश्यकलेखक्रियाद्वारा उपयोगं सार्थकत्वं व्रजन्ति प्राप्नुवन्ति ।

प्रकीर्णकद्रव्यविषयकोपि कवीनां समयो दृश्यते यथा—क्षीरसमुद्रक्षारसमुद्रयोः दूरं विभेदेऽपि ऐक्यमेवोपलभ्यते वर्ण्यते च । तथैव सागरमहासमुद्रयोरपि समानत्वम् ।

उभयोः पूर्वो यथा—शेतामिति । हे जनाः ? अत्र समुद्रे हरिः नारायणः शेताम्, अनन्तं रत्नं भवतु उत्पद्यताम्, अयं लक्ष्म्याः प्रसूतिरिति विषये नो विवदामहे नहि विवादं कुर्मः, किन्तु एतदवश्यं ब्रूमहे, यद् दुष्टं रसं दूरसम् । दूरमत्यन्तं दूरसं विरसं पयो नीरं यस्यासौ समुद्रः तृषितस्य पिपासाकुलस्य जन्तोः प्राणिनः कृते, कूपः लक्षणया

द्वितीयः—"रङ्गत्तरङ्गभ्रूभङ्गैस्तर्जयन्तीमिवापगाः ।
स ददर्श पुरो गङ्गां सप्तसागरवल्लभाम् ॥"

असतोऽपि क्रियार्थस्य निबन्धनम्, यथा–चक्रवाकमिथुनस्य निशि भिन्नतटाश्रयणं, चकोराणां चन्द्रिकापानं च ।

तत्र प्रथमः—"सङ्क्षिपता यामवतीस्तटिनीनां तनयता पयः पूरान् ।
रथचरणाह्वयवयसां किं नोपकृतं निदाघेन ॥"

द्वितीयः—"एतास्ता मलयोपकण्ठसरितामेणाक्षि रोधोभुव-
श्चापाभ्यासनिकेतनं भगवतः प्रेयो मनोजन्मनः ।
यासु श्यामनिशासु पीततमसो मुक्तामयीश्चन्द्रिकाः
पीयन्ते विवृतोर्ध्वचञ्चु विचलत्कण्ठं चकोराङ्गनाः ।"

---

तद्गतं पयो यत्रासौ तस्य कूपपयसो मरोरपि जघन्यः । यद्यपि क्षीरसमुद्रे नेदृग् दौष्ट्यम्, वर्त्तते च क्षारसमुद्रे, किन्तु क्षीरक्षारसमुद्रयोरैक्यात्ताहृशत्वमुपवर्ण्यते ।

सागरमहासमुद्रयोरैक्यं यथा-*रङ्गदिति* । स अनिर्दिष्टनामा कश्चिद्राजा पुरोऽग्रे रंगन्तः संचलन्तो ये तरङ्गास्त एव भ्रूभङ्गास्तैः, आपगा इतरनद्यस्तर्जयन्तीमिव भर्त्संयन्तीमिव सप्तसागराणां वल्लभां प्रेयसीं गङ्गां ददर्श । अत्र तलवितलसुतलतलातल महातलपातालादिसप्त समुद्राः पृथक् । सागरश्च पृथक् । गङ्गायाः संगमश्च सागरेण न तु तैः; किन्तु तैः साकं तस्य ऐक्याध्यवसायात् सप्तत्वं सागरे । तथा च तेषां वल्लभत्वं गङ्गायामिति ।

एवमुपर्युक्तदिशा द्रव्यसम्बन्धि कविसमयं निर्दिश्य क्रियागतं तं निदर्शयति–*असतोपीति* । असतोऽविद्यमानस्य क्रियार्थस्य क्रियारूपस्य पदार्थस्य निबन्धनमुल्लेखो यथा-निशि रात्रौ चक्रवाकद्वन्द्वस्य भिन्नदेशसमाश्रयणं चकोराणां चन्द्रिकाचामकरणम् ।

तयोः द्वयोर्मध्ये चक्रवाकस्य भिन्नदेशाश्रयणोदाहरणं यथा-*संक्षिपतेति* । यामवती रात्रीः संक्षिपता, अल्पयता तटिनीनां नदीनां पयःपूरान् जलौघान् तनयता निदाघेन ग्रीष्मर्त्तुना रथचरणमेवाह्वयोऽभिख्या येषां ते रथचरणाह्वयाः । ते च ते वयसः पक्षिणः तेषां किं नोपकृतम् । यामवतीसंक्षेपेण वियोगस्य अल्पकालत्वं ध्वन्यते । तटिनीपयःप्रवाहतनूकरणेन भिन्नदेशस्थत्वेऽपि नैकट्यं प्रतीयते ।

द्वितीयः चकोराणां चन्द्रिकाचामदृष्टान्तः । *एतास्ता इति* । हे एणाक्षि ? एताः पुरो दृश्यमानास्ताः प्रसिद्धाः मलयाद्रेः उपकण्ठे समीपे वाहिनीनां सरितां नदीनां रोधोभुवस्तटभूमयो वर्त्तन्ते । यद् भगवतो मनोजन्मनः कामस्य प्रेयः प्रियतरं चापाभ्यासस्य निकेतनमाश्रयः । यदि भूमिषु चकोरांगनाः (कर्त्र्यः) । श्यामाश्च ता निशा

सतोऽपि क्रियार्थस्यानिबन्धनम्, तद्यथा–दिवा नीलोत्पलानमविकासो, निशानिमित्तश्च शेफालिकाकुसुमानामविस्रंसः।

तत्र प्रथमः—

"आलिख्य पत्रमसितागुरुणाभिरामं रामामुखे क्षणसभाजितचन्द्रबिम्बे।
जातः पुनर्विकसनावसरोऽयमस्येत्युक्त्वा सखी कुवलयं श्रवणे चकार॥"

द्वितीयः—

"त्वद्विप्रयोगे किरणैस्तथोग्रैर्दग्धाऽस्मि कृत्स्नं दिवसं सवित्रा।
इतीव दुःखं शशिने गदन्ती शेफालिका रोदिति पुष्पबाष्पैः॥"

नियमस्तु, तद्यथा–ग्रीष्मादौ सम्भवतोऽपि कोकिलानां विरुतस्य वसन्त एव, मयूराणां वर्षास्वेव विरुतस्य नृत्तस्य च निबन्धः।

तयोः प्रथमः—"वसन्ते शीतभीतेन कोकिलेन वने रुतम्।
अन्तर्जलगताः पद्माः श्रोतुकामा इवोत्थिताः॥"

---

स्तासु पीतं नाशितं तमो याभिस्ता मुक्तामयीः मौक्तिकस्वरूपाः। स्वरूपाथ मयट्। चन्द्रिकाः (कर्म) विवृता प्रसृता ऊर्द्ध्वा चञ्चुर्यस्मिन् कर्मणि तत। विचलन् कण्ठो यस्मिन् कर्मणि तत् यथा स्यात्तथा पीयन्ते आस्वाद्यन्ते।

नीलोत्पलानां नीलेन्दीवराणां दिवा अह्नि विकसनं न वर्णनीयं, वर्णनीयं च रात्रौ। निशायां शेफालिकाया निर्गुण्डिकाया विस्रंसनं न वर्णनीयं वर्णनीयं च दिवा।

उभयोः पूर्वः। *आलिख्येति*। काचित्सखी क्षणं मुहूर्तं यावत् सभाजितं पूजितं चन्द्रबिम्बं येन तस्मिन् रम्भामुखे रमणीवदने असितागुरुणा कालागुरुणा अभिरामं सुन्दरं पत्रं मकरीप्रभृति आलिख्य अयमस्य पुनर्विकसनावसरो जातः इत्युक्त्वा श्रवणे कुवलयं नीलोत्पलं चकार कृतवती।

*त्वद्विप्रयोग इति*। हे नाथ ? त्वद्विप्रयोगे तव विश्लेषसमये सवित्रा सूर्यण कृत्स्नं दिवसम्, उग्रैः तीक्ष्णैः किरणैर्मयूखैः दग्धाऽस्मि इति इत्थं शशिने दुःखमिव गदन्ती कथयन्ती शेफालिका पुष्परूपैर्बाष्पैः रोदिति। अत्र स्वाभाविकस्य पुष्पाणामधः पतनस्य रोदनक्रियया उत्प्रेक्षणात् क्रियोत्प्रेक्षा बोध्या।

क्रियाविषयको नियमस्तु ग्रीष्मादिसमये सम्भवतोऽपि जायमानस्यापि कोकिलानां विरुतस्य वसन्तर्त्तौ एव निबन्धनम्। मयूरविरुतनृत्तयोर्निबन्धनं वर्षास्वेव कार्यम्।

*वसन्त इति*। अन्तर्जलगताः पद्माः। यद्यपि पद्मस्य नपुंसके एव प्रसिद्धिस्तथापि वा पुंसि पद्ममिति कोशप्रामाण्यात्पुंस्त्वमपि। वनेऽरण्ये शीतभीतेन शीतत्रस्तेन कोकिलेन कृतं रुतं रोदनं श्रोतुकामा इव उत्थिताः जलाद्बहिर्निर्गताः।

द्वितीयः—"मण्डलीकृत्य बर्हाणि कण्ठैर्मधुरगीतिभिः ।
कलापिनः प्रनृत्यन्ति काले जीमूतमालिनि ॥"
कवीनां समयः सोऽयं जातिद्रव्यक्रियागतः ।
गुणस्थै(?)'स्यैष' ततः स्वर्ग्यः पातालीयश्च कथ्यते ॥

इति राजशेखरकृतौ काव्यमीमांसायां कविरहस्ये प्रथमेऽधिकरणे कविसमये जातिद्रव्यक्रियासमयस्थापना नाम चतुर्दशोऽध्यायः ॥

## पञ्चदशोऽध्यायः ।

## गुणसमयस्थापना ।

असतो गुणस्य निबन्धनं, यथा यशोहासप्रभृतेः शौक्ल्यम्, अयशसः

---

*मण्डलीकृत्येति* । कलापिनो मयूराः, जीमूता मेघास्तैर्मालते शोभते तस्मिन् काले समये बर्हाणि पिच्छानि मण्डलीकृत्य वलयीकृत्य मधुरा गीतयो येषु तैः कण्ठैरुपलक्षिता नृत्यन्ति ।

अध्यायमुपसंहरति–*कवीनामिति* । सोऽयं पूर्वोक्तः कवीनां समयः जातिगतः द्रव्यगतः क्रियागतो बोध्यः । तत उत्तरमेष कविसमयः गुणस्य गुणसम्बन्धी स्वर्ग्यः पातालीयः । चः समुच्चये । तेन भौमः समुच्चीयते । तथाच भौमः कथ्यते प्रतिपाद्यते । अत्र गुणस्थष इति मुद्रितः पाठोऽशुद्धः ।

इति साहित्याचार्याहिताग्निश्रीमधुसूदनशर्मणः कृतौ मधुसूदनीविवृतौ कविसमयेषु जातिद्रव्यक्रियासमयस्थापनाख्यश्चतुर्दशोऽध्यायः समाप्तिमापत् ।

॥ श्रीः ॥
हेरेः खरनखाघातत्रस्तः करिभिरीडितः ।
पातुं दधौ गजास्यत्वं तस्मै श्रीगणये नमः ॥

अथ अवसरप्राप्तं गुणविषयकं कविसमयं व्यवस्थापयितुमुपक्रमते–*गुणेति* । *समयेति* नाम्न्येकदेशे नामग्रहणं भवतीति न्यायानुरोधात् समयपदेन कविसमयो गृह्यते गुणे कविसमयः गुणकविसमयः तस्य स्थापना । तस्येति कर्तृकर्मणोः कृतिरिति शास्त्रेण स्थापनेति कृदन्तनिर्मित्तिका कर्मस्थाने षष्ठी, तेन कर्मत्वं तस्यार्थः, ल्युडर्थः कृतिस्तस्याः स्थापनेनेति क्रियायामनुकूलत्वसम्बन्धेनान्वयस्तस्याश्च आश्रयत्वसम्बन्धेन ग्रन्थकर्त्तरि अन्वयः । तथा च गुणविषयककविसमयकर्मकस्थापनानुकूलकृत्याश्रयो ग्रन्थकारः ।

*असत इति* । लोकेऽविद्यमानस्य गुणस्य शुक्लनीलादेः निबन्धनमुल्लेखो-

पापप्रभृतेश्च रक्तत्वम् । तत्र यशःशौक्ल्यम्—

"स्तेमः स्तोकोऽपि नाङ्गे श्वसितमविकलं चक्षुषां सैव वृत्ति-
र्मध्येक्षीराब्धि मग्नाः स्फुटमथ च वयं कोऽयमीदृक्प्रकारः ।
इत्थं दिग्भित्तिरोधःक्षतविसरतया मांसलैस्त्वद्यशोभिः
स्तोकावस्थानदुःस्थैस्त्रिजगति धवले विस्मयन्ते मृगाद्यः ॥"

हासशौक्ल्यम्—"अट्टहासच्छलेनास्याद्यस्य फेनौघपाण्डुराः ।
जगत्क्षय इवापीताः क्षरन्ति क्षीरसागराः ॥"

अयशःकृष्णत्वम्—
"प्रसरन्ति कीर्त्तयस्ते तव च रिपूणामकीर्त्तयो युगपत् ।
कुवलयदलसंवलिताः प्रतिदिनमिव मालतीमालाः ॥"

पापकार्ष्ण्यम्—
"उत्खातनिर्मलमयूखकृपाणलेखाश्यामायिता तनुरभूद्धयकन्धरस्य ।
सद्यःप्रकोपकृतकेशववंशनाशसङ्कल्पसंजनितपापमलीमसेव ॥"

---

भवति । यथा—यशसि हासे च शुक्लत्वमदृष्टचरमपि काव्येषूपनिबन्धनं दृश्यतेऽतः तादृशनिबन्धनं न दोषाय । एवमयशसः पापस्य कृष्णत्वं क्रोधस्य अनुरागस्य च रक्तत्वं बोध्यम् ।

यशसः शुक्लत्वनिबन्धने उदाहरणं यथा—*स्तेमः स्तोक इति* । व्याख्यातमिदं प्राक् । अत्र यशोभिर्धवले त्रिगति मृगाक्ष्यो विस्मयन्ते इत्यनया रीत्या यशसः शुक्लत्वमुपनिबद्धम् ।

हासस्य शौक्ल्ये उदाहरणं यथा-*अट्टहासेति* । यस्य शिवस्य आस्यान्मुखात् । जगतो लोकस्य क्षये प्रलये आपीता निपीता इव अट्टहासस्य छलेन व्याजेन फेनस्यौघवत्पाण्डुराः श्वेता क्षीरसागराः क्षरन्ति स्यन्दन्ति । नायमट्टहासः किन्तु जगत्क्षयकालिकपानानुसंभाविताः क्षीरसागरा इमे इति उत्प्रेक्षानुप्राणिता अपह्नुतिरलंकृतिः । अत्र हासस्य फेनौघपाण्डुरत्वोक्त्या धावल्यमाविष्कृतम् ।

अयशसः कृष्णिमा यथा-*प्रसरन्तीति* । हे देव ? प्रतिदिनम् अनुदिवसम् कुवलयानां नीलोत्पलानां दलैः संवलिताः संभिन्नाः मालत्या माला इव ते कीर्त्तयो यशांसि तव रिपूणां शत्रूणां कीर्त्तयश्च युगपदेककालावच्छेदेन जगति प्रसरन्ति व्याप्नुवन्ति । अकीर्त्तीनां कुलयदलसादृश्योद्भावनेन कृष्णत्वमुट्टङ्कितम् ।

पापस्य कृष्णिम्नि उदाहृयते-यथा *उत्खातेति* । हयवत्कन्धरा यस्यासौ । तस्य तनुरुत्खाता कोषान्निष्कासिता । निर्मला मयूखा यस्याः सा विमलकिरणा

क्रोधरक्तता—

"आस्थानकुट्टिमतलप्रतिबिम्बितेन कोपप्रभाप्रसरपाटलविग्रहेण ।
भौमेन मूर्च्छितरसातलकुक्षिभाजा भूमिश्चचाल चलतोदरवर्त्तिनेव ॥"

अनुरागरक्तता यथा—"गुणानुरागमिश्रेण यशसा तव सर्पता ।
दिग्वधूनां मुखे जातमकस्मादर्द्धकुङ्कुमम् ॥"

सतोऽपि गुणस्यानिबन्धनम्, (यथा)-कुन्दकुड्मलानां कामिदन्तानां च रक्तत्वं, कमलमुकुलप्रभृतेश्च हरितत्वं, प्रियङ्गुपुष्पाणां च पीतत्वम् ।

कुन्दकुड्मलाद्यरक्तता—

"द्योतितान्तःसभैः कुन्दकुड्मलाग्रदतः स्मितैः ।
स्नपितेवाभवत्तस्य शुद्धवर्णा सरस्वती ॥"

---

या कृपाणलेखा तरवारिधारा तथा शामायिता कृष्णायिता अभूत् । श्यामायितत्वं संभावनया दर्शयति-*सद्य इति* सद्य इत्यस्य जनितत्वेऽन्वयः । सद्यो झटिति प्रकोपेण कृतो यः केशववंशनाशार्थं संकल्पः तज्जनितेन पापेन मलीमसा मलिना इव । अत्र कृपाणलेखाकान्तिसमुद्भूतश्यामायितत्वे केशववंशनाशकृतपापमलीमसत्वं संभाव्यतेऽतः संभावनमथोत्प्रेक्षेत्युत्प्रोक्षालंकारः ।

*आस्थानेति* । आस्थानस्य सदसः । आस्थानी क्लीवमास्थानं स्त्रीनपुंसकयोः सदः इत्यमरः । कुट्टिमतलं तत्र प्रतिबिम्बितेन । कोपस्य प्रभायाः प्रसरेण पाटलं रक्तं विग्रहं शरीरं यस्यासौ तेन मूर्च्छितस्य रसातलस्य कुक्षिं भजतीति तेन । उदरवर्त्तिना जठरगतेन इव चलता संचरता भौमेन मंगलेन भूमिश्चचाल । उदरवर्त्तित्वं सादृश्यं चलने उत्प्रेक्ष्यते । कोपप्रभाप्रसरमाहात्म्याद् भौमस्य पाटलविग्रहत्वमिति पदार्थहेतुकं काव्यलिङ्गमलंकारः । तथा क्रोधस्य रक्तत्वेन निबन्धश्च बोध्यः ।

अनुरागरक्तत्वोदाहरणं यथा—*गुणानुरागेति* । समन्वितमिदं प्राक् । अत्र यशसोनुरागादिमिश्रतया दिग्वधूमुखे अर्द्धकुंकुमत्वप्राप्त्युत्प्रेक्षणं कविना कृतं रागस्य रक्तत्वादेवेति ।

*सतोपीति* । सतोपि विद्यमानस्यापि गुणस्य शुक्लादेर्निबन्धनमुल्लेखो न कर्त्तव्यः । यथा कुन्दस्य माघ्यपुष्पस्य कुड्मलानां कलिकानां, कामिनां दन्तानां च सत्यपि रक्तत्वे कमलीयमुकुलानां सत्यपि हरितत्वे तथा प्रियङ्गुपुष्पाणां सत्यपि पीतत्वे तादृश निबन्धनं कविसमयविरुद्धं ततो न तेषां तादृशनिबन्धनं कार्यमिति ।

कुन्दकुड्मलादीनामरक्तत्व उदाहरणं यथा-*द्योतितेति* । तस्य श्रीकृष्णस्य शुद्धः स्फीतः वर्णः ककारादिः शुक्लत्वं च यस्याः सा सरस्वती वाणी वाग्देवी च । द्योतिता प्रकाशिता अन्तः सभा यैस्तैः । कुन्दकुड्मलाग्रवद्दन्ता यस्य तस्य कुन्दकुड्मला-

पद्ममुकुलाहरितत्वम्—

"उद्दण्डोदरपुण्डरीकमुकुलभ्रान्तिस्पृशा दंष्ट्रया
मग्नां लावणसैन्धवेम्भसि महीमुद्यच्छतो हेलया।
तत्कालाकुलदेवदानवकुलैरुत्तालकोलाहलं
शौरेरादिवराहलीलमवतादभ्रंलिहाग्रं वपुः॥"

प्रियङ्गुपुष्पापीतत्वम्—"प्रियङ्गुश्याममम्भोधिरन्ध्रीणां स्तनमण्डलम्।
अलङ्कर्तुमिव स्वच्छाः सूते मौक्तिकसम्पदः॥"

गुणनियमस्तु तद्यथा—सामान्योपादाने माणिक्यानां शोणता, पुष्पाणां शुक्लता, मेघानां कृष्णता च।

तत्र प्रथमः—

"सांयात्रिकैरविरतोपहृतानि कूटैः श्यामासु तीरघनराजिषु सम्भृतानि।
रत्नानि ते दधति कच्चिदिहायताक्षि मेघोदरोदितदिनाधिपबिम्बशङ्काम्॥"

---

दतः। वयसि दन्तस्य दतृ इति दत्रादेशः। स्मितैः हासैः स्नपितेव कृतस्नाना इव अभवत् आसीत्।

*उद्दण्डेति*। लावणसैन्धवे लवणसमुद्रीये अम्भसि जले मग्नां ब्रुडितां महीं पृथ्वीम् हेलया लीलापूर्वकम्। उद्दण्डं यदुदरस्थं पुण्डरीकं तस्या मुकुलस्य सादृश्येन भ्रान्तिं स्पृशतीति तया दंष्ट्रया करणभूतया उद्यच्छतः आददानस्य शौरेः श्रीकृष्णस्य। तत्काले मह्या उद्यच्छनकाले आकुलानि यानि देवदानवानां कुलानि तत्कर्तृकम्। उद्गतस्तालः गीतकालक्रियामानं यस्मिंस्तदुत्तालं कोलाहलं यस्मिन् कर्मणि तद्यथास्यात्तथा आदिवराहस्य लीला यस्मिंस्तत्। अभ्रंलिहाग्रं वपुः शरीरमवतात् पायात्। अत्र दंष्ट्रायां पद्ममुकुलसादृश्यहेतुकाया भ्रान्तेरुन्मेषाद् भ्रान्तिमदलंकारः। पद्ममुकुलानां हारीत्याभावश्च सुस्पष्टः कस्यापि गुणस्यानुल्लेखात् प्रत्युत दंष्ट्राया साम्येन रक्तत्वमेव।

प्रियङ्गोः पुष्पाणां पीतत्वाभावो यथा—*प्रियङ्गुश्याममिति*। अम्भोधिः समुद्रः प्रियंगुवत् महिलह्वयालतावत् श्यामं कृष्णम्, अन्ध्रदेशीयस्त्रीणां स्तनमण्डलं कुचयुगमलंकर्तुमिव स्वच्छाः स्फीताः मौक्तिकसम्पदः मुक्तामणिसम्पत्तीः सूते जनयति। अत्र प्रियंगुपुष्पाणां पीतत्वमनिर्दिश्य श्यामत्वं निबद्धम्।

गुणानां नियमस्तु एवं बोध्यः। सामान्यतः उपादाने काव्यघटकतया वर्ण्यमाने माणिक्यानां शोणत्वमेव रक्तत्वमेव। पुष्पाणां शुक्लत्वमेव मेघानां च कृष्णत्वमेव। क्रमेण चैतेषामुदाहरणानि—यथा माणिक्यानां श्यामत्वम्।

*सायांत्रिकैरिति*। हे आयताक्षि? विशालनेत्रे? सांयात्रिकैः पोतवणिग्भिः।

पुष्पशुक्लता—"पुष्पं प्रवालोपहितं यदि स्यान्मुक्ताफलं वा स्फुटविद्रुमस्थम्।
ततोऽनुकुर्याद्विशदस्य तस्यास्ताम्रौष्ठपर्यस्तरुचः स्मितस्य॥"

मेघकार्ष्ण्यम्—"मेघश्यामेन रामेण पूतवेदिर्विमानराट्।
मध्ये महेन्द्रनीलेन रत्नराशिरिवाबभौ॥"

कृष्णनीलयोः, कृष्णहरितयोः, कृष्णश्यामयोः, पीतरक्तयोः, शुक्लगौरयोरेकत्वेन निबन्धनं च कविसमयः। कथं कृष्णनीलयोरैक्यम्—

"नदीं तूर्णं कर्णोऽप्यनुसृतपुलिनां दाक्षिणात्याङ्गनाभिः
समुत्तीर्णो वर्णामुभयतटचलाबद्धवानीरहाराम्।
ततः सह्यस्योच्चैः स्वसलिलनिवहो भाति नीलः स यस्याः
प्रियस्यांसे पीने लुलित इव घनः केशपाशः सुकेश्याः॥"

---

सांयात्रिकः पोतवणिक् इत्यमरः। अविरतं निरन्तरं यथास्यात्तथा उपहृतानि श्यामासु कृष्णासु तीरगतघनपंक्तिषु कूटैः यन्त्रैः।

मायानिश्चलयन्त्रेषु कैतवानृतराशिषु
ओयघने शैलशृङ्गे सीराङ्गे कूटमस्त्रियाम्। इत्यमरः।

करणे तृतीया। अथवा कूटैः समूहरूपैरित्यर्थः। सम्भृतानि संहीकृतानि रत्नानि माणिक्यानि ते तव मेघोदरादुदयं गतस्य दिनाधिपबिम्बस्य शंकां दधति जनयति कश्चित्। उदयकाले रवे रक्तत्वमेव भवति। रत्नानामपि सामान्यतः शोणत्वनिबन्धे नियमः। एवं च सादृश्यात् रत्नपुञ्जे औदयिकसूर्यबिम्बशङ्कानुभविकी।

*पुष्पमिति*। पुष्पम् कुसुमम् यदि प्रवालोपहितसम् विद्रुमस्थं स्यात्। वा अथवा मुक्ताफलं स्फुटविद्रुमस्थं स्वच्छप्रवालोपहितं स्यात्। ततस्तदा विशदस्य स्वच्छस्य ताम्रौष्ठे रक्ताधरे पर्यस्ता व्याप्ता रुक् कान्तिः यस्य तस्य ताम्रौष्ठपर्यस्तरुचस्तस्याः पार्वत्याः स्मितस्य अलक्षितदन्तमुकुलहासस्य अनुकुर्यात् अनुकूलत्वमुपगच्छेत्।

*मेघेति*। मेघवत् श्यामेन कृष्णेन रामेण पूता पवित्रिता वेदिः परिष्कृता भूमिर्यस्यासौ। वेदिः परिष्कृताभूमिरित्यमरः। विमानराट् पुष्पकम् मध्ये स्थितेन महेन्द्रनीलेन पर्वतेन उपलक्षितो रत्नराशिः समुद्र इव आबभौ शुशुभे।

एकत्वेन समानरूपत्वेनेत्यर्थः। उदाहरणं क्रमशो यथा—*नदीमिति*। कर्णोऽपि एतन्नामकः कश्चिद्राजापि दाक्षिणात्याभिरङ्गनाभिः कामिनीभिः अनुसृतं प्रतिगतं पुलिनं जलादचिरनिर्गतम्। तोयोत्थितं तत्पुलिनम् इत्यमरः। यस्यास्ताम्। उभयोस्तटयोश्चलश्चलायमानः आबद्धः आमोचितः वानीररूपो हारो यया तां वर्णामेतन्नाम्नीं नदीं तूर्णं समुत्तीर्णः। यस्या वर्णायाः स नीलः स्वसलिलस्य नि-

कृष्णहरितयोरैक्यम्—

"मरकतसदृशं च यामुनं स्फटिकशिलाविमलं च जाह्नवम् ।
तदुभयमुदकं पुनातु वो हरिहरयोरिव सङ्गतं वपुः ॥"

कृष्णश्यामलयोरैक्यम्—

"एतत्सुन्दरि नन्दनं शशिमणिस्निग्धालवालद्रुमं
मन्दाकिन्यभिषिक्तमौक्तिकशिले मेरोस्तटे नन्दति ।
यत्र श्यामनिशासु मुञ्चति मिलन्मन्तःप्रदोषानिला-
मुद्दामामरयोषितामभिरतं कल्पद्रुमश्चन्द्रिकाम् ॥"

पीतरक्तयोरैक्यम्—

"लेखया विमलविद्रुमभासा सन्ततं तिमिरमिन्दुरुदासे ।
दंष्ट्रया कनकभङ्गपिशङ्गया मण्डलं भुव इवादिवराहः ॥"

---

जजलस्य निवहः प्रवाहः सह्यस्य सह्याद्रेः उच्चैरुन्नते तटे तीरे तथा भाति शोभते यथा पीने पुष्टे प्रियस्य प्रेयसः अंसे लुलितः आलुडितः सुकेश्याः सुन्दरचिकुरायाः केशपाशः कचसमूहो भाति नीलस्य जलस्य कृष्णेन केशपाशेन सह साम्य-मुपनिबद्धं कृष्णनीलयोरैक्याध्यवसायात ।

*मरकतेति* । मरकतमणिना सदृशं समानं यमुनासम्बन्धि जलम् । स्फटिकशिलावद्विमलं जाह्नव्या सम्बन्धि जलम् । तदेतत्प्रसिद्धमुदकं जलम् हरिहरयोः त्रिविक्रमत्रिलोचनयोः वपुः शरीरमिव सङ्गतं वो युष्मान् पुनातु पवित्रमाचरतु । अत्र मरकतमणेर्नां हरितत्वेन यामुनजलस्य कृष्णत्वेन उभयोर्भिन्नत्वेऽपि कविसमयानुरोधादैक्यमुपनिबद्धम् ।

*एतदिति* । हे सुन्दरि ? शशिमणिनिर्मितैश्चन्द्रकान्तकल्पितैः स्निग्धैरालावालैर्युता द्रुमा यस्मिंतदेतन्नन्दनं वनम् । मन्दाकिन्या वियद्गङ्गया अभिषिक्ता मौक्तिकानां शिलाः पाषाणा यस्मिन्नेवंभूते मेरोस्तटे प्रान्तदेशे नन्दति समृद्धं वर्त्तते । यत्र नन्दने श्यामनिशासु बहुलपक्षीयरात्रिषु कल्पद्रुमः पारिजातवृक्षः मिलन्तो मन्दगतयः प्रदोषानिलाः प्रदोषकालिकवायवो यस्यां ताम् चन्द्रिकाम् । उद्दामानां यौवनेनोत्कटमदानाम् अमरयोषितां देवाङ्गनानां रतं निधुवनमभिलक्ष्यीकृत्य मुञ्चति अर्पयति । कल्पद्रुमस्य वाञ्छितफलदातृत्वशक्तिकत्वात् चन्द्रिकामर्पयति । निशानां कृष्णत्वेऽपि श्यामत्वोपनिबन्धो द्वयोः कृष्णश्यामलयोरैक्यात् ।

*लेखयेति* । इन्दुः विमलेन विद्रुमेण प्रवालेन तुल्या भाः कान्तिर्यस्यास्तया लेखया कलया सन्ततं व्याप्तं तिमिरं तम उदासे दूरीचकार । कः कमिव । आदिवराहः वराहत्वं

शुक्लगौरयोरैक्यम्—

"कैलासगौरं वृषमारुरुक्षोः पादार्पणानुग्रहपूतपृष्ठम् ।
अवेहि मां किङ्करमष्टमूर्त्तेः कुम्भोदरं नाम निकुम्भपुत्रम् ॥"

एवं वर्णान्तरेष्वपि । चक्षुरादेरनेकवर्णोपवर्णनम् ।

तत्र चक्षुषः शुक्लता—

"तिष्ठन्त्या जनसङ्कुलेऽपि सुदृशा सायं गृहप्राङ्गणे
तद्द्वारं मयि निःसहालसतनौ वीङ्खामृदु प्रेङ्खति ।
ह्रीनम्राननयैव लोलसरलं निःश्वस्य तत्रान्तरे
प्रेमार्द्राः शशिखण्डपाण्डिममुषो मुक्ताः कटाक्षच्छटाः ॥"

---

गतो विष्णुः कनकभङ्गवत् सुवर्णखण्डवत्पिशङ्गया पीतया दंष्ट्रया भुवः पृथिव्या मण्डलमिव । अत्र दंष्ट्राया रक्तत्वेऽपि कनकखण्डसादृश्योपनिबन्धः पीतरक्तयोरैक्याध्यवसायात् ।

*कैलासेति* । कैलासवद्गौरं शुक्लं वृषमारुरुक्षोरारोढुमिच्छोरष्टमूर्त्तेः शिवस्य पादयोरर्पणमेवानुग्रहस्तेन पूतं पृष्ठं यस्य तम् । निकुम्भस्य पुत्रम् सुतम् । रघुवंशे च निकुम्भमित्रमिति पाठः । किन्तु समुचितः पाठस्तु "निकुम्भपुत्रम्" इत्येव-यतोहि स्वपरिचयमाददानः सर्वो जनः स्ववंशोद्घोषणेन पित्रादिनामोच्चारणेन च परस्मै स्वं बोधयति न तु मित्रादिनाम्ना । अस्तु वा तथा । तथापि निकुम्भकुम्भोदरयोः कुम्भपदघटितनाम्ना सादृश्यं तु सवंश्यत्वमुद्घाटयति । इति । कुम्भोदरं नाम किङ्करं प्रेष्यं मामवेहि जानीहि । अत्र कैलासस्य शुक्लत्वेऽपि गौरत्वोपनिबन्धः शुक्लगौरयोरैक्याध्यवसायात् । एवमुपदर्शितपथेन अन्योन्यवर्णेष्वपि ऐक्यमध्यवसेयम् ।

चक्षुरादेरनेकवर्णशालितया उपवर्णनं कर्तव्यम् । तत्रानेकवर्णेषु चक्षुषः शुक्लत्वं यथा-*तिष्ठन्त्येति* । सायं समये जनैःमनुष्यैः सङ्कुले आकुलेऽपि गृहस्य गेहस्य प्राङ्गणे मध्यदेशे तिष्ठन्त्या सुदृशा नायिकया, तद्द्वारं नायिकागृहद्वारमभिलक्ष्य वीङ्खया नर्तनेन अथवा गतिभेदेन मृदु मनोहरं यथा तथा प्रेङ्खति गच्छति सति निःसहा पतनशीला एवमलसा तनुः शरीरं यस्य तस्मिन्मयि । तत्रान्तरे गमनवेलायां ह्रिया लज्जया नम्रमाननं यस्यास्तथाभूतयैव लोलं चञ्चलम् । एतेन नायकसम्मेलनकृते नायिकाया उद्वेगो व्यज्यते । सरलं कोमलम् । एतेन गुरुजननियन्त्रणत्वं लज्जालुत्वं च तस्या व्यज्यते । यथा तथा निःश्वस्य श्वासोत्क्षेपं विधाय प्रेमार्द्राः स्नेहसरसाः शशिखण्डस्य चन्द्रकलायाः पाण्डिमानं मुष्णन्तीति ते, तद्वत्स्वच्छाः कटाक्षच्छटाः मुक्ता नेत्रत्रिभागसमूहाः प्रेरिताः । अत्र कटाक्षाणां शशिखण्डपाण्डिमसदृशत्वोपवर्णनेन अवयविनो नेत्रस्यापि शुक्लत्वम्, कार्यं निदानाद्धि गुणानधीते इत्युक्तेः ।

श्यामता—

"अथ पथि गमयित्वा रम्यक्लृप्तोपकार्ये कतिचिदवनिपालः शर्वरीः शर्वकल्पः।
पुनरविशदयोध्यां मैथिलीदर्शिनीनां कुवलयितगवाक्षां लोचनैरङ्गनानाम् ॥"

कृष्णता—"पादन्यासक्वणितरशनास्तत्र लीलाबधूतै
रत्नच्छायाखचितवलिभिश्चामरैः क्लान्तहस्ताः ।
वेश्यास्त्वत्तो नखपदसुखान्प्राप्य वर्षाग्रबिन्दू-
नामोक्ष्यन्ते त्वयि मधुकरश्रेणिदीर्घान् कटाक्षान् ॥"

मिश्रवर्णता—"तामुत्तीर्य व्रज परिचितभ्रूलताविभ्रमाणां
पक्ष्मोत्क्षेपादुपरि विलसत्कृष्णशारप्रभाणाम् ।

---

चक्षुषः श्यामता यथा-*अथ पथीति* । अथ प्रस्थानानन्तरं शर्वकल्पः रुद्रदेश्योऽवनिपालः रम्यं मनोहरं यथास्यात्तथा क्लृप्ता विरचिता उपकार्या राजसदनं यस्मिंस्तस्मिन् पथि कतिचिद्यथेच्छं शर्वरीः विभावरीः गमयित्वा नीत्वा पुनः वनात्प्रत्यावर्त्तनोत्तरं मैथिल्या दर्शने समुत्सुकानामङ्गनानां वनितानां लोचनैर्नेत्रैः करणभूतैः कुवलयिताः सञ्जातनीलोत्पला गवाक्षा यस्याः तामयोध्यां इक्ष्वाकुवंश्यानां राजधानीमविशत् प्रविष्टः । अत्र लोचनानां कुवलयसादृश्यवर्णनेन श्यामत्वमुपनिबद्धम् ।

चक्षुषः कृष्णताया उदाहरणं यथा-*पादन्यासैरिति* । हे जलद? तत्र तस्मिन् संध्याकाले पादानां चरणानां न्यासास्तैः क्वणिताः शब्दायमाना रशनाः काञ्च्यो यासां ताः। स्त्रीकट्यां मेखला काञ्ची सप्तकी रशना तथा इत्यमरः । लीलया विलासेन अवधूतानि कम्पितानि तैः । रत्नानां मणीनां छायाभिः कान्तिभिः खचिताः युक्ता वलयश्चामरदण्डा येषान्ते तथोक्ताः । वलिश्चामरदण्डे च जराविश्लथचर्मणि इत्यमरः ।चामरैः वालव्यजनैः क्लान्ता हस्ता यासां ताः श्रान्तकराः वेश्याः वारनायिकाः । वारस्त्री गणिका वेश्येत्यमरः । त्वत्तो भवतो मेघादित्यर्थः । नखानां पदेषु स्थानेषु सुखान् सुखकरान् वर्षाणामग्रविन्दवस्तान् प्राप्य अधिगम्य त्वयि मेघे मधुकराणां श्रेणिवत् । एतेन कटाक्षाणां कज्जलयुक्ततया श्यामत्वं ध्वन्यते । दीर्घान् लम्बायमानान् कटाक्षान् अपाङ्गान् आमोक्ष्यन्ते त्यक्ष्यन्तीत्यर्थः। अत्र अवयवस्य कटाक्षस्य श्यामत्वादवयविनोऽपि तथात्वम् , अवयविनोऽवयवारब्धत्वात ।

चक्षुषो मिश्रवर्णता यथा-*तामुत्तीर्येति* ।हे मेघ ? त्वम् । तां चर्मण्वत्याख्यां नदीमुत्तीर्य पारङ्गत्वा आत्मबिम्बं स्वात्मानम् । परिचिता अभ्यस्ता लतासदृशभ्रूणां ( भ्रुवो लता इवेति भ्रूलताः ) विभ्रमा विलासा यैस्तेषाम् । पक्ष्मणां नेत्रलोचनानाम् उत्क्षेपात् त्वां द्रष्टुमुन्नमनात् । उपरि त्वामवलोकयितुमाकाशे प्रेरितत्वात् ऊर्ध्वं विल-

कुन्दक्षेपानुगमधुकरश्रीमुषामात्मबिम्बं
पात्रीकुर्वन्दशपुरवधूनेत्रकौतूहलानाम् ॥"

॥ इति राजशेखरकृतौ काव्यमीमांसायां कविरहस्ये प्रथममेऽधिकरणे
गुणसमयस्थापना पञ्चदशोऽध्यायः ॥

## षोडशोऽध्यायः ।

# स्वर्ग्यपातालीयकविरहस्य(समय)स्थापना ।

भौमवत्स्वर्ग्योऽपि कविसमयः, विशेषस्तु चन्द्रमसि शशहरिणयोरैक्यम् ।

यथा—"मा भैः शशाङ्क ? मम सीधुनि नास्ति राहुः
खे रोहिणी वसति कातर किं बिभेषि ।

---

सन्त्यः शोभमानाः । कृष्णेन नेत्रक्षपमीयकृष्णवर्णेन सह मिलिताः शाराः शवलाः श्वेत-श्यामाः इत्यर्थः प्रभाकान्तयो येषां तेषाम् । अत एव कुन्दक्षेपस्य क्षेपितमाध्यपुष्पस्य अनुगानामनुधाविनां मधुकराणां भ्रमराणां श्रियं मुष्णन्तीति तेषाम् । दशपुराणां वध्वस्तासां नेत्रकौतूहलानां पात्रीकुर्वन् विषयीकुर्वन् व्रज गच्छ । अत्र क्षिप्तकुन्दानुगमधुकरसादृश्याकलनेन नेत्रस्य मिश्रवर्णत्वं ( शवलत्वं ) प्रतीयते ।

इति साहित्याचार्याहिताग्निश्रीमधुसूदनशर्मणाः कृतौ मधुसूदनीविवृतौ
गुणसमयस्थापनाख्यो नाम पञ्चदशोऽध्यायः समाप्तः ।

॥ श्रीः ॥

भगवतीं प्रतिपद्य यथाविधि नियमतः परिचिन्तनया मुदा ।
यदिहलब्धपदं क्रमतः कवेः समयकं विवृणोमि यथामति ॥

अथेत्थं द्वाभ्यामध्यायाभ्यां जातिद्रव्यक्रियागुणगतं भौमं कविसमयं प्रपञ्च्य स्वर्ग्यपातालीयकविसमयं प्रपञ्चयितुमुपक्रमते-*स्वर्ग्येति* । स्वर्ग्यपातालीययोः कवि-समययोः स्थापना क्रियते इति । अत्र कविरहस्येत्यत्र रहस्यपदं समयार्थकम् । वस्तुतस्तु समय इत्येव पाठः उचितः पूर्वत्र सर्वत्र तथैव उल्लेखात् प्रसिद्धेश्च ।

*भौमवदिति* । सामान्यतो भौमकविसमयवत् स्वर्ग्योपि कविसमयो वर्त्ततेऽतस्तथैव ज्ञातव्य इति शेषः । विशेषस्तु चन्द्रमसि विद्यमानयोः शशहरिणयोरैक्यं यथा—

*मा भैरिति* । हे शशाङ्क ? माभैः भयं मा कुरु । ननु राहोः सकाशात् कुतो न विभेमि इत्यत आह-*ममेति* । पेयत्वेन पुरो निहिते मम सीधुनि मद्ये प्रतिबिम्बितो

प्रायो विदग्धवनितानवसङ्गमेषु
पुंसां मनः प्रचलतीति किमत्र चित्रम् ॥"

यथा च—"अङ्काधिरोपितमृगश्चन्द्रमा मृगलाञ्छनः ।
केसरी निष्ठुरक्षिप्तमृगयूथो मृगाधिपः ॥"

कामकेतने मकरमत्स्ययोरैक्यं यथा—

"चापं पुष्पमयं गृहाण मकरः केतुः समुच्छ्रीयतां
चेतोलक्ष्यभिदश्च पञ्च विशिखाः पाणौ पुनः सन्तु ते ।
दग्धा कापि तवाकृतेः प्रतिकृतिः कामोऽसि किं गूहसे
रूपं दर्शय नात्र शङ्करभयं सर्वे वयं वैष्णवाः ॥"

यथा च—

"मीनध्वजस्त्वमसि नो न च पुष्पधन्वा केलिप्रकाश तव मन्मथता तथापि ।

---

राहुर्नास्ति किन्तु मन्मुखम्, अतो न भेतव्यम् । ततः सस्मयात् स्वस्थीभूतेन निजसधर्मिणीं स्मृत्वा अनवलोक्य पृच्छ्यते ननु रोहिणी क्वास्ते? इत्येतदुत्तरन्त्याह–खइति। रोहिणी तव प्रिया खे गगने वसति । हे कातर ? किं कुतो ? बिभेषि । विदग्धवनितया धूर्त्तयोषिता सह नूतनसङ्गमसमये प्रायो बाहुल्येन पुंसां पुरुषाणां मनः चित्तं प्रचलति चकितं भवति इत्यतः अत्र विषये किं चित्रम् । अस्मिन्पद्ये चन्द्रमसि अङ्कत्वेन शश उपात्तः ।

यथा च उदाहरणान्तरम्–*अङ्केति* । अङ्के उत्सङ्गे अधिरोपितो निहितो मृगो येनासौ चन्द्रमाः मृगलाञ्छनः कथ्यते जनः । एतन्मार्दवस्य फलम् । निष्ठुरं यथा तथा क्षिप्तो मृगाणां यूथोऽनेनासौ केसरी मृगाधिपः प्रोच्यते लोकैः । एतच् छौर्यस्य फलम् अतः शौर्यमेवाश्रयणीयमिति वक्रोक्तिर्माघे । अत्र चन्द्रमसि अङ्कत्वेन मृगपदमुपात्तम् । हेतुश्चात्र शशमृगयोरैक्यम् ।

कामस्य केतने ध्वजायां मकरमत्स्ययोः समानत्वम् । यथा *चापमिति* । आत्मानं गूहन्तं कामं प्रति वैष्णवानामुक्तिः । त्वं कामोऽसि इत्यस्माभिर्ज्ञातमतः शंकरभयेन किमर्थं व्यर्थं स्वमात्मानं गूहसे अन्तरयसि । आत्मगूहनप्रयासेन अलम् । पुष्पमयं पुष्पनिर्मितं चापं धनुर्गृहाण । मकरः केतुभूतः समुच्छ्रीयताम् । कामिचेतोरूपस्य लक्ष्यस्य भेदका पञ्च विशिखाः बाणास्ते पाणौ करे सन्त्येव । तवाकृतेः कापि प्रतिकृतिः प्रतिमा हरेण दग्धा भस्मीकृता । तथा स्वं रूपं दर्शय प्रकाशय अत्र स्थले शङ्करभयं नास्ति । ननु भवन्तः के इत्यत आह—*सर्वे इति* । वयं सर्वे अत्रत्या वैष्णवाः, शाङ्करा अपि न स्म कुतोऽत्र शंकरः साक्षात् । अत्र पद्ये कामकेतनत्वेन मकर उपात्तः ।

यथा च उदाहरणान्तरम्–*मीनध्वज इति* । हे केलिप्रकाश ? क्रीडासहचरतया स्वा

इत्थं त्वया विरहितस्य मयोपलब्धाः कान्ताजनस्य जननाथ चिरं विलापाः ॥"

यथा च—

"आपातमारुतविलोडितसिन्धुनाथो हात्कारभीतपरिवर्त्तितमत्स्यचिह्नाम् ।
उल्लङ्घ्य यादवमहोदधिभीमवेलां द्रोणाचलं पवनसूनुरिवोद्धरामि ॥"

अत्रिनेत्रसमुद्रोत्पन्नचन्द्रयोरैक्यम्—

"वन्द्या विश्वसृजो युगादिगुरवः स्वायम्भुवाः सप्त ये
तत्रात्रिर्दिवि सन्दधे नयनजं ज्योतिः स चन्द्रोऽभवत् ।
एका यस्य शिखण्डमण्डनमणिर्देवस्य शम्भोः कला
शेषाभ्योऽमृतमाप्नुवन्ति च सदा स्वाहास्वधाजीविनः ॥"

---

त्मगोपनप्रकाशनस्वभाव ? (इत्यर्थो वा) केलौ निजसहृदयतां स्वसरसिकतां वा प्रकाशयतीति तथाभूत ? त्वं भवान् मीनो ध्वजायां चिह्नत्वेन यस्यासौ मीनध्वजोऽपि नासि । तथा पुष्पं धनुर्यस्येति । वा संज्ञायामनङ् । पुष्पधन्वाऽपि नासि । तथापि मीनध्वजत्वपुष्पधनुष्ट्वयोरभावेऽपि तव मन्मथता । मननं मत् चेतना संपदादित्वात् क्विप् नलोपे तुगागमे । मतो मथः मन्मथः । चेतनाविनाशित्वं वर्त्तते । इत्याश्चर्यम् हे राजन् त्वयि यत्कामसादृश्यं कविभिर्वर्ण्यते तन्नो मीनध्वजत्वेन नापि पुष्पधनुष्ट्वेन किन्तु सौन्दर्यसम्पत्त्या चेतनोन्माथकत्वेन अस्तीति भावः । इत्थं हेजननाथ ? त्वया विरहितस्य वियुक्तस्य कान्ताजनस्य चिरं बहुकालं विलापाः रोदनानि मया उपलब्धा श्रुताः । अत्र कामकेतनत्वेन मीन उपात्तः ।

यथा वा उदाहरणान्तरम्-*आपात इति* । अभिपतनमापातः तत्समये प्रादुर्भूतेन मारुतेन वायुना विलोडितः विह्वलीकृतः सिन्धुनाथः समुद्रो येन सोऽहम् । हात्कारशब्देन भीतः अत एव परिवर्त्तितः विचलितः मत्स्य एव चिन्हं यस्यास्ताम् । यादवरूपस्य महोदधेः भीमां वेलां तत्प्रान्तभूमिमुल्लङ्घ्य पवनसूनुरिव द्रोणाचलमुद्धरामि· अत्र मत्स्यः उपात्तः । कामस्यैव प्रद्युम्नरूपतया यादवेषु अवतीर्णत्वात् तद्ध्वजायां मत्स्यचिन्हत्वमपेक्षितमेव ।

*अत्रीति* । अत्रिमहर्षेः नेत्रसमुद्भूतस्य समुद्रादुत्पन्नस्य च चन्द्रस्य परस्परमैक्यम् । उदाहरणं यथा-*वन्द्या इति* । वन्द्याः विश्वस्य जनकत्वाद्वन्दनीयाः । विश्वसृजः सृष्टिप्रवर्त्तकाः युगादिगुरवः । युगे आदिगुरवः अथवा युगादौ गुरवः । ये प्रख्याता सप्त स्वयम्भुवः ब्रह्मणो मानसाः पुत्राः मरीच्यत्र्यङ्गिरोवशिष्ठाद्या ऋषयो वर्त्तन्ते । तत्र तेषु अत्रिनामा ऋषिः नयनजं नेत्रोत्पन्नं ज्योतिर्दिवि आकाशे सन्दधे स्थापयामास । स चन्द्रोऽभवत् । एतेन 'नेत्रोत्पन्नसमुद्रोत्पन्नयोश्चन्द्रयोर्भेदस्तैरोहित्यं नीत इति बोध्यम् । यस्य देवस्य एका कला शम्भोः शिवस्य शिखण्डमण्डनार्थं मणिः

बहुकालजन्मनोऽपि शिवचन्द्रमसो वालत्वम् ।

"मालायमानामरसिन्धुहंसः कोटीरवल्लीकुसुमं भवस्य ।
दाक्षायणीविभ्रमदर्पणश्रि बालेन्दुखण्डं भवतः पुनीतात् ॥"

कामस्य मूर्त्तत्वं च यथा—

"अयं स भुवनत्रयप्रथितसंयमः शङ्करो
बिभर्त्ति वपुषाधुना विरहकातरः कामिनीम् ।
अनेन किल निर्जिता वयमिति प्रियायाः करं
करेण परिताडयन् जयति जातहासः स्मरः ॥"

यथा च—"धनुर्माला मौर्वी क्वणदलिकुलं लक्ष्यमबला
मनो भेद्यं शब्दप्रभृति य इमे पञ्च विशिखाः ।

---

शेषाभ्यः कलाभ्यः स्वाहाकारेण आजीविनो देवाः, स्वधाकारेण उपजीविनः पितरः सदा अमृतमाप्नुवन्ति प्राप्नुवति ।

*बहुकालेति* । यस्य जन्मनि कालस्य बहुत्वं गतं तस्यापि शिवभालस्थचन्द्रमसो वालत्वं नवीनत्वमेव वर्णनीयम् ।

यथा-*मालायमानेति* । मालावदाचरमाणाया अमरसिन्ध्वा मन्दाकिन्या हंसः तत्र संचरणशीलो राजहंसः । भवस्य ईश्वरस्य कोटीरवल्ल्या विजयलताया कुसुमं पुष्पम् । दाक्षायण्या पार्वत्याः विम्भ्रमार्थं श्रृङ्गारभावजन्यक्रियावलोकनार्थं यो दर्पणः तद्वच्छ्रीः शोभा यस्य तत् । वालश्चासौ इन्दुस्तस्य खण्डम् भवतः श्रीमतः पुनीतात् पावयतु । अनादिकालावस्थायितया भवस्य तदीयवस्तुनोऽपि तथात्वमावश्यकं किन्तु तदीयवस्तुषु चन्द्रस्य केवलं नवीनत्वं कविभिरुपवर्ण्यते । एतादृशः कवीनामाचारः ।

कामस्य मूर्त्तत्वं मूर्त्तिमत्वं शरीरित्वमिति यावत् वर्णनीयम् । अत्र प्रकरणे सर्वत्र तस्य तादृशत्वं वर्णनीयम् , तच्च यथोदाहृते इति स्वत ऊह्यम् ।

*अयं स इति* । अयं पुरोवर्त्ती स शङ्करः यस्य भुवनत्रये संयमः प्रथितः । कामसम्बन्धिविकारहेतावपि अविकृतत्वं प्रसिद्धमासीत् । स एवाधुना विरहेण कातरः सन् वपुषा शरीरेण कामिनीं प्रेयसीं विभर्त्ति । मास्तु पुनरपि कदाचिद्वियोग इति धिया स्वाङ्गत्वमानयति । हे प्रिये ! अनेन महात्मना वयं निर्जिता इत्येवं प्रकारेण जातहासः प्रियायाः करं ताडयन् सन् स्मरो जयति । अत्र कामस्य शरीरित्वं निबद्धम् । करेण करस्य ताडनं जातहासत्वं तादृशस्यैव सभाव्यते ।

यथा च उदाहरणान्तरम् *धनुरिति* । माला पुष्पाणां स्रक् धनुः, क्वणत् गुन्जदलिकुलं भ्रमरसमूहः मौर्वी प्रत्यञ्चा । अवलाः यानिर्बलत्वेन प्रसिद्धास्तासामपि मनः

इयान् जेतुं यस्य त्रिभुवनमनङ्गस्य विभवः
स वः कामः कामान्दिशतु दयितापाङ्गवसतिः ॥"

द्वादशानामप्यादित्यानामैक्यम्—

"यस्याधोऽधस्तथोपर्युपरि निरवधि भ्राम्यतो विश्वमश्वै-
रावृत्तालातलीलां रचयति रयतो मण्डलं चण्डधाम्नः ।
सोऽव्यादुत्तप्तकार्त्तस्वरसरलशरस्पर्द्धिभिर्द्धामदण्डै-
रुद्दण्डैः प्रापयन्वः प्रचुरतमतमः स्तोममस्तं समस्तम् ॥"

नारायणमाधवयोश्च यथा—

"येन ध्वस्तमनोभवेन बलिजित्कायः पुरास्त्रीकृतो
यो गङ्गां च दधेऽन्धकक्षयकरो यो बर्हिपत्रप्रियः ।
यस्याहुः शशिमच्छिरोहर इति स्तुत्यं च नामामराः
सोऽव्यादष्टभुजङ्गहारवलयस्त्वां सर्वदोमाधवः ॥"

---

परमाणुरूपमतीन्द्रियं लक्ष्यं वेध्यम् । शब्दप्रभृति भेद्यम् । य इमे प्रसिद्धाः परिगणिताश्च उन्मादनतापनशोषणतापनसंमोहनाः पञ्चविशिखा वाणाः । इतीयान् एतावानेव यस्यानङ्गस्य कामस्य त्रिभुवनं भुवनत्रयं जेतुं स्वाधानीकर्त्तुं विभवः सम्पत्तिः । स दयितायाः प्रेयस्याः अपाङ्गमेव कटाक्ष एव वसतिर्यस्याऽसौ कामः वो युष्माकं कामान् अभिलाषान् दिशतु पूरयतु । अत्र मनोभवस्यामूर्त्तत्वमुपनिवद्धम् ।

द्वादशानामप्यादित्यानां सूर्याणामेकत्वमभेदत्वं वणनीयं यथा—*यस्याधोध इति* । अधोधः उपर्युपरि निरवधि मर्यादाशून्यं विश्वं संसारं रयतो वेगात अश्वैः करणभूतैः भ्राम्यतः परिक्रामतो यस्य चण्डधाम्नः सूर्यस्य मण्डलम् । आवृत्तानामाघूर्णमानानामलातानां स्फुलिङ्गानां लीलां रचयति प्रकटीकरोति । स श्रुतिस्मृतिपुराणादिप्रसिद्धः सूर्यः । उत्तप्तः अग्नौ तापितः यः कार्त्तस्वरः सुवर्णस्तद्वत् सरलान् स्वच्छान् शरान् स्पर्द्धितुं शीलं येषां तैः, उद्दण्डैः प्रचण्डैः धामदण्डैः तेजोदण्डैः किरणैरित्यर्थः समस्तं सम्पूर्णं प्रचुरतममधिकतमं तमःस्तोममन्धकारसमूहमस्तं विलयं प्रापयन् गमयन् सन् वो युष्मान् अव्याद् रक्षेत् ।

नारायणमाधवयोश्च अभेदो वर्णनीयः । स च यथा-*येनेति* । सर्वमभीष्टं ददातीति सर्वदो निखिलमनोरथपूरकः धवः पतिः । अथवा मधोरपत्यं माधवः श्रीकृष्णः । उमायाः "उ"मेति मात्रा तपसो निषिद्धा पश्चादुमाख्यां सततं गतायाः पार्वत्याः धवः स्वामी शिवः सर्वदा अथवा सर्वदाया उमाया शक्तेः धवः । यः सर्वदाया स्वामी सोपि सकलकामनापूरकः तस्याः तदधीनत्वात । पायात् रक्षेत । कीदृशो माधवः, अभवेन अजेनाऽपि

एवं दामोदरशेषकूर्मादेः । कमलासम्पदोश्च यथा—

"दोर्मन्देरितमन्दरेण जलधेरुत्थापिता या स्वयं
यां भूत्वा कमठः पुराणककुदन्यस्तामुदस्तम्भयत् ।
तां लक्ष्मीं पुरुषोत्तमः पुनरसौ लीलाञ्चितभ्रूलता-
निर्देशैः समवीविशत्प्रणयिनां गेहेषु दोष्णि क्षितिम् ॥"

भौमस्वर्ग्यवत्पातालीयोऽपि कविसमयः ।

---

भक्तोद्धारणाय जन्म गृहीतवता येन अनः शकटं ध्वस्तं शकटासुरः पादेन मारितः कृष्णत्वे । वलेरसुरराजस्य जेता कायः शरीरः । एतेन वामनावतारो वर्णितः । पुरा अमृतपरिवेषणावसरे स्त्रीकृतः । एतेन भगवतो मोहिनीरूपावतारो दर्शितः । अमृतार्थं कलहायमानानां सुरासुराणाममृतपरिवेषणाय मायया भगवता नारायणेन मोहिनीरूपं धृतमिति पुराणवार्त्ताऽत्रानुसन्धेया । यश्चोद्वृत्तस्य दुर्दम्यस्य भुजङ्गस्य अघासुरस्य यद्वा कालियस्य हन्ता नाशकरः पीडाकरो वा । अरीणां समूह आरः । आरञ्च तद्बलं सैन्यं तत् यातीति आरवलयः। यद्वा उद्वृत्तानां भुजङ्गानां हारं विनाशकं भक्षकं वलं यस्य तेन गरुडेन याति गच्छतीति तत्तथा । अगं गोवर्धनं कृष्णरूपेण गां पृथ्वीं कूर्मरूपेण योऽधारयत् । शशिनं मथ्नातीति शशिमद्राहुस्तस्य शिरोहरः। सुदर्शनचक्रेण सूर्याचन्द्रमोभ्यां निर्दिष्टेन भगवता नारायणेन अमृतपरिवेषणावसरे हृतमिति पुराणवार्ता । इति स्तुत्यं नाम यस्य अमराः आहुः । अन्धकानां यादवानां क्षयकरः द्वारकाख्यनिवाससम्पादकः । अन्धको यादवेऽसुरे इति । इन्दिरा लोकमाता मा इति । भवः क्षेमेथ संसारे सत्तायां प्राप्तिजन्मनोः इति । अनः क्लीवञ्जले शोके मातृस्यन्दनयोरपि इति । क्षयो गेहे च कल्पान्तेऽपचये रुति इति विश्वामरमेदिनीहैमाः । उमाधवः कीदृशः । ध्वस्तमनोभवेन नाशितकन्दर्पेण येन । पुरा त्रिपुरासुरनाशसमये वलिजितो नारायणस्य कायः अङ्गीकृतः वाणरूपतां प्रापितः । यश्च उद्वृत्तभुजङ्गा वासुक्यादयः हारा वलयानि च यस्य तादृशः । यः गङ्गां भागीरथीं अधारयत उत्तमांगेनेति शेषः । यस्य शिरः शशिमत्सचन्द्रकम् । यस्य हर इति पापादिसंहारकत्वेन स्तुत्यं प्रशंसनीयम् नामाहुरमराः । यः अन्धकासुरस्य क्षयकरः नाशकर्ता स शिवः सदा पायात् । अत्र नारायणवामनकूर्मावतारमोहिनीश्रीकृष्णानामेकत्वं निबद्धम् । एवं दामोदर नारायणयोः शेषकूर्मयोरैक्यमप्यूह्यम् ।

कमलासम्पदोश्च ऐक्यं यथा-*दोमन्देरितेति* । अत्र मुद्रितपुस्तकेषु दोर्मन्दीरितेति अपपाठः । या लक्ष्मीः दोर्भ्यां भुजाभ्याम् । भुजवाहुप्रवेष्टो दोरिति काषः । मन्दं यथा तथा ईरितेन प्रेरितेनैव मन्दराचलेन जलधेः सकाशात् स्वयमुत्थापिता निष्कासिता । पुराणेषु विष्णुप्रभृतिषु ककुदेन श्रेष्ठेन । ककुद्वत् ककुदंत् श्रेष्ठे वृषाङ्के राजलक्ष्मणे इति

तत्र नागसर्पयोरैक्यम्—

"हे नागराज बहुमस्य निस्तम्बभागं भोगेन गाढमभिवेष्ट्य मन्दराद्रेः।
सोढाविषह्यवृषवाहनयोगलीलापर्यङ्कबन्धनविधेस्तव कोऽतिभारः॥"

दैत्यदानवासुराणामैक्यम्, यथा तत्र हिरण्याक्षहिरण्यकशिपुप्रह्लादविरोचनबलिबाणादयो दैत्याः, विप्रचित्तिशम्बरनमुचिपुलोमप्रभृतयो दानवाः, वलवृत्रविक्षुरस्त(?)वृषपर्वादयाऽसुराः।

तेषामैक्यं यथा—

"जयन्ति वाणासुरमौलिलालिता दशास्यचूडामणिचक्रचुम्बिनः।

---

विश्वः। पितामहेनेत्यर्थः। न्यस्तां स्थापितां यां क्षितिं कमठो भूत्वा कूर्मो भूत्वा उदस्तम्भयत् उद्धार। तां लक्ष्मीं, तां क्षितिं पृथ्वीं च। पुनरसौ पुरुषोत्तमो नारायणो, लीलया अञ्चिताः पूजिताः या भ्रूलतास्तासां निर्देशैः 'क्रमशः' प्रणयिनां प्रेमपात्राणां भक्तानां गेहेषु, दोष्णि भुजे च समवीविशत् समवेशयत्। जलधेरुत्थापिता भगवदर्द्धाङ्गिनीरूपा लक्ष्मीः सम्पच्च प्रणयिनां गेहेषु समावेशिता। तयोरुभयोः ता (लक्ष्मी) मित्येकपदोपस्थापितत्वरूपेणैक्येन निवन्धनमत्र कृतम्।

इत्थं स्वर्ग्यकविसमये विशेषमुल्लिख्य पातालीये विशेषमुपदर्शयति*भौमेति* भौमस्वर्ग्यकविसमयाभ्यां तुल्यः पातालीयः कविसमयो ज्ञेयः।

नागानां काद्रवेयाणां सर्पाणां सामान्यजातिकानां परस्परमभेदः यथा-*हे नागराजे!ति*। हे नागराज! वासुके! अस्य मन्दराद्रेः बहुमधिकं नितम्बभागं कटिदेशं भोगेन स्वशरीरेण। भोगः सुखे धने चाहेः शरीरफणयोर्मतः। पालनेऽभ्यवहारे च योषिदादिभृतावपि। इति मेदिनी। गाढं यथा तथा अभिवेष्ट्य। सोढः स्वीकृतः अविषह्यः सोढुमशक्यः वृषवाहनस्य शिवस्य योगलीलायां पर्यङ्कबन्धस्य विधिर्येन तस्य तवैष मन्दराद्रिवेष्टनकः कः कियान् अतिभारः अतितुच्छः इत्यर्थः। अत्र मन्दराद्रिवेष्टनकर्त्तुर्नागराजस्य सर्पैः शिवालङ्कारभूतैः सह ऐक्यम्।

दैत्यानां दानवानाम् असुराणां च परस्परमभेदो निवन्धनीयः। क्रमशस्तान्निर्दिशति *तत्रेति*। हिरण्याक्षविप्रचित्तिवलादीनां वाणपुलोमवृषपर्वान्तानां क्रमशः इतरेतरयोगद्वन्द्वः। वलवृत्रविक्षुरहयग्रीववृषपर्वादयोऽसुराः इति सुपाठः, विक्षुरस्त इति तु अपपाठः।

*जयन्तीति*। वाणासुरस्य मौलिना किरीटेन। मौलिः किरीटे धम्मिल्ले चूडायामनपुंसक इति हैमः। लालिताः पूजिताः दशास्यस्य चूडामणिचक्रं चुम्बन्ति तच्छीलाः। सुरासुराधीशानां शिखान्तेषु शेरत इति तच्छीलाः शायिनः। भवं संसारं छिन्द-

सुरासुराधीशशिखान्तशायिनो भवच्छिदस्त्र्यम्बकपादपांसवः ॥"

यथा च—"तं शम्बरासुरशराशनिशल्यसारं केयूररत्नकिरणारुणबाहुदण्डम्।
पीनांसलग्नदयिताकुचपत्रभङ्गं मीनध्वजं जितजगत्त्रितयं जयेत्कः॥"

यथा च—"अस्ति दैत्यो हयग्रीवः सुहृद्वेश्मसु यस्य ताः।
प्रथयन्ति बलं बाह्वोः सितच्छत्रस्मिताः श्रियः॥"

यथा च—हयग्रीवं प्रति—
"दानवाधिपते भूयो भुजोऽयं किं न नीयते।
सहायतां कृतान्तस्य क्षयाभिप्रायसिद्धिषु॥"

यथा च—"महासुरसमाजेऽस्मिन् न चैकोऽप्यस्ति सोऽसुरः।
यस्य नाशनि-निष्पेष-नीराजितमुरःस्थलम्॥"

---

न्तीति ते। त्र्यम्बकस्य त्रिलोचनस्य पादपांसवः चरणरेणवः। अत्र पूर्वैस्त्रिभिर्विशेषणैः परमैश्वर्यं, चतुर्थेन च तेन संसारतापनिवर्त्तकत्वं त्र्यम्बकपादपांसूनामुद्योतितमिति भावः। जयन्ति सर्वोत्कर्षेण वर्तन्ते। अत्र बाणस्य दैत्यत्वेऽपि असुरत्वेनोपनिबन्धस्तेषामैक्यात्।

*तमिति*। शम्बरासुरस्य, शरगताशनेः शल्यतुल्यः सारो बलं यस्य तम्। केयूरस्य मणिकिरणैररुणो रक्तो बाहुदण्डो यस्य तम्। पीनांसे पीवरांसे लग्नः दयितायाः कुचस्य पत्रभङ्गो यस्य तम्। जितं जगत्त्रितयं येन तं मीनध्वजं कामं को जयेत्। अत्र शम्बरस्य दानवत्वेऽपि असुरत्वेन निबन्धस्तथात्वात्।

*अस्तीति*। हयग्रीवो दैत्यः अस्ति। यस्य बाह्वोर्बलं सुहृद्वेश्मसु स्थिताः। सितानि छत्राण्येव स्मितानि यासां ताः प्रसिद्धाः श्रियो लक्ष्म्यः प्रथयन्ति। अत्र हयग्रीवस्य असुरत्वेऽपि दैत्यत्वोपनिबन्धस्तथात्वात्।

हयग्रीवं प्रति कश्चित्कथयति-*दानवेति*। हे दानवाधिपते? अयं भुजः भूयः पुनः कृतान्तस्य यमस्य विनाशाशयविषयकसिद्धिषु सहायतां किन्न नीयते प्राप्यते। अत्र तस्य दानवत्वं तथात्वात्।

यथा च उदाहरणान्तरं-*महासुरेति*। अस्मिन् महतामसुराणां समुदाये स तादृश एकोपि असुरो नास्ति। यस्योरःस्थलं वक्षःस्थलं अशनेः वज्रस्य निष्पेषैस्तदाघातजनिताग्निसमुत्थज्वालैरित्यर्थः। वह्नेर्द्वयो ज्वालकीलावित्युक्तेः ज्वालाशब्दस्य पुंस्त्वमपि। नीराजितं कृताराात्तिकं न भवेत्

अयमत्र अध्यायद्वयोक्तसब्रह्मचारिपदार्थसङ्ग्रहः—

असतोऽपि निबन्धेनाऽनिबन्धेन सतोऽपि च।

नियमेन च जात्यादेः कवीनां समयस्त्रिधा ॥

तत्र असतो निबन्धो यथा—

रत्नादि यत्र तत्रादौ हंसाद्यल्पजलाशये ।
जलेभाद्यं नभो नद्यामंभोजाद्यं नदीष्वपि ॥
तिमिरस्य यथा मुष्टिग्राह्यं सूचीविभेद्यताम् ।
अञ्जलिग्राह्यताकुम्भोपवाह्यत्वे विधुत्विषः ॥
शुक्लत्वं कीर्तिहासादौ कार्ष्ण्यं दुष्कीर्त्यघादिषु ।
प्रतापे रक्ततोष्णत्वे रक्तत्वं क्रोधरागयोः ॥
विभावर्यां भिन्नतटाश्रयणं चक्रवाकयोः ।
ज्योत्स्नापानं चकोराणां वर्णयेदसदप्यदः ॥

सतोऽप्यनिबन्धो यथा—

वसन्ते मालती पुष्पं फलं पुष्पं च चन्दने ।
अशोके च फलं ज्योत्स्नाध्वान्ते शुक्लान्यपक्षयोः ॥
कामिदन्तेषु कुन्दानां कुड्मलेषु च रक्तताम् ।
प्रियङ्गुपुष्पे पीतत्वं सरोजमुकुलादिषु ॥
हरितत्वं दिवानीलोत्पलानां स्मेरतां दिवा ।
शेफालिकासुमे भ्रंशं वर्णयेन्न सदप्यदः ॥

नियमो यथा—

मुक्तास्ताम्रपर्णामेवाब्धिष्वेव मकरानपि ।
भूर्जद्रून् हिमवत्येव मलये ह्येव चन्दनम् ॥
सामान्यग्रहणे वारिमुचां कृष्णत्वमेव हि ।
रक्तत्वमेव रत्नानां पुष्पाणां शौक्ल्यमेव च ॥
तथा वसन्त एवान्यभृतानां ध्वनितोद्भवम् ।
वर्षास्वेव मयूराणां रुतं नृत्तं च वर्णयेत् ॥

यमगतविशेषो यथा—

नीलकृष्णयोर्हरितकृष्णयोस्तथा श्यामकृष्णयोः ।
पीतपाटलयोः शुक्लगौरयोर्नागसर्पयोः ॥
महार्णवसागरयाः क्षीरक्षारसमुद्रयोः ।
कमलासम्पदोः कामध्वजे मकरमत्स्ययोः ॥
द्वादशानामप्यर्काणां वार्ध्यत्रिदृग्जचन्द्रयोः ।
चन्द्रे शशैणयोर्विष्णुशेषकूर्मादिकस्य च ॥
नारायणदामोदरमाधवप्रभृतेरपि ।

एवमन्येऽपि भेदाः—सोऽयं कवीनां समयः काव्ये सुप्त इव स्थितः ।
स साम्प्रतमिहास्माभिर्यथाबुद्धि विबोधितः ॥"

॥ इति राजशेखरकृतौ काव्यमीमांसायां कविरहस्ये प्रथमेऽधिकरणे स्वर्ग्य-पातालीयकविसमयस्थापना षोडशोऽध्यायः ॥

---

दानवासुरदैत्यानामैक्यमेवाभि संमतम् ॥
दानवास्तु विप्रचित्तिः शम्बरो नमुचिस्तथा ।
प्रलामादयोऽथ दैत्या हिरण्याख्यो विरोचनः ॥
वाणो हिरण्यकशिपुर्बलिप्रह्लादकादयः ।
अथाऽसुरा वृषपर्वबलवृत्रादयः स्मृताः ॥
स्त्रीणामक्ष्णः कटाक्षाणां शुक्लता कृष्णताऽथवा ।
श्यामताप्यथवा शुक्लश्यामता शुक्लकृष्णता ॥
बहुकालजन्मनोऽपि शिवचन्द्रस्य बालता ।
मनोभवस्य मूर्त्तत्वममूर्तत्वं च वर्ण्यते ॥
देवदेवीस्थितिं विद्यान्नायिकानायकक्रमम् ।
स्वभावान् सर्वजीवानां व्यवस्थां देशकालयोः ॥ इति ।
"चतुष्टत्वं समुद्रस्य वियोगः कोकयोर्निशि ।
चकारोर्णा सुराणां च ज्योत्स्नावासो निगद्यते ॥
रमायाः पद्मवासित्वं राज्ञो वक्षसि च स्थितिः ।
समुद्रमथनं तत्र सुरेन्द्रश्रीसमुद्भवः" ॥ इति ।
"सामान्येन तु धावल्यं पत्रपुष्पाम्बुवाससाम् ।
अम्बुदाम्बुधिकाकाहिकेशभृङ्गेषु कृष्णताम् ॥
बिम्बबन्धूकनीरेषु सूर्यबिम्बे च रक्तताम् ॥ इति ।
नियमस्य विशेषोन्यः कश्चिदत्र प्रकाश्यते ।
शुभ्रमिन्द्राद्द्विपं ब्रूयात्रीणि सप्त चतुर्दश ।
भुवनानि, चतस्रोऽष्टौ दश वा ककुभो मताः" ॥ इति ॥
"मानवा मौलितो वर्ण्याः देवाश्चरणतः पुनः" । इति ।

उपसंहरन्नाह—*सोयमिति* । सोयं प्राङ्निर्दिष्टः कवीनां समयः, काव्ये सुप्त इव अज्ञात इव स्थितः आसीत् । साम्प्रतमिदानीं स समयः इह ग्रन्थेऽध्याये वा अस्माभिः यथाबुद्धि यथाज्ञानं विबोधितः जागरितः ।

इति साहित्याचार्याहिताग्निश्रीमधुसूदनशर्मणः कृतौ मधुसूदनी-विवृतौ स्वर्ग्य-पातालीयकविसमयस्थापनाख्यः षोडशोऽध्यायः पूर्त्तिमगात् ।

# सप्तदशोऽध्यायः

# देशकालविभागः ।

## तत्र देशविभागः ।

देशं कालं च विभजमानः कविर्नार्थदर्शनदिशि दरिद्राति । जगज्जगदेकदेशाश्च देशः । द्यावापृथिव्यात्मकमेकं जगदित्येके ।

तदाहुः—"हलमगु बलस्यैकोऽनड्वान्हरस्य न लाङ्गलं
क्रमपरिमिता भूमिर्विष्णोर्नगौर्न च लाङ्गलम् ।

---

॥ श्रीः ॥

साम्बं शिवं च सकलं नत्वा विद्यास्वरूपिणम् ।
देशकालविभागाख्यं सूत्रं व्याख्यातुमुद्यते ॥

अथक्रमप्राप्तं सप्तदशं सूत्रं व्याख्यातुं प्रक्रमते—*देशकालविभाग* इति । देशश्च कालश्च इति देशकालौ तयोः विभागो भेदेन प्रदर्शनम् अस्माभिः करिष्यते द्वाभ्यामध्यायाभ्याम् । तत्र पूर्वमत्र सप्तदशेऽध्याये देशानां भेदेन प्रदर्शनं भविष्यति इति दर्शयितुं प्रतिजानीते *तत्र देश विभाग इति* ।

ननु देशकालयोर्निरूपणं ज्योतिषिप्रभृतीनां निबन्धेषु पुराणेषु च बहुतरं वर्त्तते तन्निरूपणकर्त्तव्यताऽपि तानेवानुरुणद्धि न तु भवन्तमतः किमिति अकाण्डताण्डवमारब्धम् । अत्रोच्यते । *देशं कालं चेति* । अयमाशयः । यथा सिंहस्थे गुरौ सर्वप्रदेशेषु विवाहो निषिद्धः किन्तु काशीप्रदेशे न स दोषभाग् । एवं सूर्ये मेषस्थे तु तादृशे बृहस्पतावपि कुत्रापि देशे दोषो नास्ति । ततः तस्मिन्नेव काले यागः, उपनयनं, विवाहादि कर्त्तव्यं कारयितव्यमिति कर्त्तव्यत्वेन उपदेश्यत्वेन वा यथा तेषां विवेच्यमस्ति तथा कवेरपि अयमर्थः तस्मिन् एव देशे तस्मिन् एव काले वर्णनीयः इत्यालोच्यमस्ति अन्यथातु स उपहासास्पदो मूर्खतास्पदो वा भवेत्तन्मा भवतु इत्यर्थमयमारम्भः समुचित एवेति ।

*नार्थेति* । अर्थस्य दर्शनदिशि तस्य पदार्थस्य तदा तस्मिन् देशे उपलम्भः अतः तस्य तदा तद्देशीयत्वेन वर्णने अतीव माहात्म्यमुदीते इत्येवंरूपपदार्थविवेचनशैल्यां न दरिद्राति विमूढो न हि भवति । जगल्लोकः । एवं जगत एकदेशोपि देशपदवाच्यः । किंलक्षणं जगदित्याकाङ्क्षायामाह-*द्यावेति* । दिवस्पृथिव्यौ उभावपि मिलित्वा एकं जगदिति एके वदन्तीति शेषः ।

तदाहुरिति तेषां जगदेकत्ववर्णनपरं पद्यमवतारयति-*हलमिति* । बलस्य बलदेवस्य हलम् अगु गोरहितम् । अतो गां विना हलमकिञ्चित्करम् । हरस्य शिवस्य एक

प्रवहति कृषिर्नाद्याप्येषां द्वितीयगवं विना
जगति सकले नेदृग्दृष्टं दरिद्रकुटुम्बकम् ॥"

"दिवस्पृथिव्यौ द्वे जगती" इत्यपरे।

तदाहुः—"रुणद्धि रोदसी चास्य यावत्कीर्त्तिरनश्वरी।
तावत्किलायमध्यास्ते सुकृती वैबुधं पदम् ॥"

"स्वर्गमर्त्यपातालभेदात्त्रीणि जगन्ति" इत्येके।

यदाहुः—"त्वमेव देव पातालमाशानां त्वं निबन्धनम्।

---

एव अनड्वान् वृषः, लाङ्गलं हलं नास्ति। विष्णोः नारायणस्य क्रमैस्त्रिभिरिति शेषः। परिमिता कृतपरिमाणा। एतेन भूमेरपि भिक्षालब्धत्वं प्रकाश्यते। भूमिः केवलं पृथिवी एव न गौः न च लाङ्गलम्। एवं च एषां बलहरविष्णूनां द्वितीयगवं विना अद्यापि इदानीं यावत् कृषिर्न प्रवहति न प्रचरति। कृषिप्रचरणे कारणं गोमिथुनं, हलं भूमिरिति समुदितम्। तत्र बलस्य पार्श्वे यद्यपि हलं वर्त्तते किन्तु गोमिथुनं भूमिश्च न स्तः। अतः स तु तयोरभावात् कृषिं कर्त्तुं न प्रभवति। अथ हरः कुर्यात्तदा तस्य पार्श्वे एक एव वृषः न तन्मिथुनम्, अथापि वा एकेनैव करोतु तदा हलं भूमिश्च नास्ति ततः सोपि कर्त्तुं न पारयति। अथ विष्णोः पार्श्वे भिक्षातः प्राप्ता केवलं भूमिः न गोमिथुनं न च हलम्। अवशिष्टश्च वराको ब्रह्मा (स च कविना नोपात्तः स्वेच्छया) तस्य च सविधे एकमपि नास्ति। एकसत्वे तु ब्राह्मणतया अन्ये भिक्षित्वाऽपि कृषिं कुर्यात्। अतः सकले जगति भुवने ईदृग् दरिद्रकुटुम्बकम्। कर्मधारयसमासः। न दृष्टम् नापि श्रुतम्। "सकले जगति" इति एकया उक्त्या जगतो निरूपणं तदेकत्वधियेति बोध्यम्।

*दिवस्पृथिव्याविति*। द्यावाभूमी उभे द्वे जगती इति अपरेषामाशयः। सर्वत्रैव तदाहुरित्यनेन इदं प्रदर्श्यते यद्-एतद्वदतां जनानामाशयानुकूलं पद्यं बोध्यमिति। यथा लोकद्वयीवादिमतानुसारेण "रुणद्धीति"।

*रुणद्धीति*। अस्य प्रक्रमप्राप्तस्य प्रागुपदर्शितस्य कवेः अनश्वरी अविनाशिनी कीर्तिः यशः, यावद् रोदसी दिवस्पृथिव्यौ रुणद्धि व्याप्नोति। किलेति ऐतिह्ये। तावत्कालम्। अयं वर्णनोपक्रान्तः सुकृती कविः वैबुधं नैर्जरं पदं स्थानमध्यास्ते तिष्ठति।

*स्वर्गेति*। स्वर्ग एकः। मर्त्यः एकः। पाताल एकः। मिलित्वा त्रयाणां भेदाज्जगन्ति भुवनानि त्रीणि। इति एकेषामाशयः।

*त्वमेवेति*। हे देव ! विष्णो ! त्वमेव पातालम् अधोभुवनम्। त्वम् आशानां

त्वं चामरमरुद्भूमिरेको लोकत्रयायसे ॥"

"तान्येव भूर्भुवःस्वः" इत्यन्ये ।

तदाहुः—"नमस्त्रिभुवनाभोगभृतिखेदभरादिव ।

नागनाथाङ्गपर्यङ्कशायिने शार्ङ्गधन्वने ॥

"महर्जनस्तपःसत्यमित्येतैः सह सप्त" इत्यपरे ।

तदाहुः—

"संस्तम्भिनी पृथुनितम्बतटैर्धरित्र्याः संवाहिनी जलमुचां चलकेतुहस्तैः ।
हर्षस्य सप्तभुवनप्रथितोरुकीर्त्तेः प्रासादपङ्क्तिरियमुच्छिखरा विभाति ॥"

"तानि सप्तभिर्वायुस्कन्धैः सह चतुर्दश" इति केचित् ।

---

दिशां निबन्ध 'नियमस्थानम् भूलोक इति यावत् । भूलोक एव सूर्यगत्या दिशां नियमो भवति । चकारो भिन्नक्रमद्योतकः । त्वम् अमरमरुद्भूमिः । अमराणां देवानां मरुतां मरुद्गणानामेकोनपञ्चाशतो भूमिः आवासस्थानं चेत्यर्थः, स्वर्गलोक इति यावत् । एकोऽपि भवान् एवं लोकत्रयात्मकः भुवनत्रयस्वरूपः । इति विष्णुपक्षेर्थः । राजपक्षे यथा हे देव ? हे राजन् ? त्वमेव अलम् अत्यर्थं पाता रक्षकः । त्वम् आशानां मनोरथानां निबन्धनं कारणम् । त्वां दृष्ट्वैव स्मृत्वैव वा याचकानां मनसि मनोरथाः सम्पद्यन्ते । त्वम् चामराणां रोमगुच्छकानां ये वातास्तेषां भूमिः स्थानं पात्रमिति यावत् । एवमेकोऽपि लोकत्रयात्मकः जनत्रयस्वरूपः । लोकस्तु भुवने जने इत्यमरः । यथा 'विषयभेदाद्विषयो भिद्यते एवं पातृत्वदातृत्वचामरमरुद्गृहितृत्वानां धर्माणां भेदादेकस्यापि धर्मिणो भिन्नत्वमिवेति भावः ।

तानि त्रीणि जगन्त्येव भूर्भुवःस्वरिति अन्येऽभिदधति । *नम इति* । त्रयाणां भुवनानां समाहारः त्रिभुवनम् तस्य आभोगस्य विस्तारस्य भृत्या धारणेन यः खेदभरः दुःखातिशयस्तस्मादिव । इवः सम्भावनायाम् । नागनाथस्य वासुकेरङ्गं शरीरमेव पर्यङ्कस्तत्र शायिने शार्ङ्गधन्वने विष्णवे नमः प्रणामोस्तु । महोलोकः, जनोलोकः तपोलोकः, सत्यलोक इति चत्वारो लोकाः, पूर्वैस्त्रिभिर्मिलित्वा सप्त लोका भवन्ति इत्यपरे वदन्ति ।

*संस्तम्भनोति* । सप्त भुवनेषु भूर्भुवःस्वर्महर्जनस्तपःसत्येषु प्रथिता ख्याता उर्वी महती कीर्तिर्यस्य तस्य हर्षनृपतेः उद्गतानि शिखराणि यस्याः सा प्रासादपङ्क्तिः सौधश्रेणिः विभाति शोभते । कीदृशी प्रासादपङ्क्तिः । पृथुभिर्विशालैः नितम्बतटैः धरित्र्याः पृथिव्याः संस्तम्भनी धारयित्री । चलाः केतव एव हस्तास्तैः जलमुचां मेघानां संवाहिनी संचालिका ।

तदाहु:—"निरवधि च निराश्रयं च यस्य स्थितमनुवर्त्तितकौतुकप्रपञ्चम् ।
प्रथम इह भवान्स कूर्ममूर्त्तिर्जयति चतुर्दशलोकवल्लिकन्दः ॥"

---

तानि सप्त भुवनानि सप्तभिर्वायुस्कन्धैः प्रवहादिसप्तवातसमूहैः (वायुशरीरैर्वा)।

स्कन्धः स्यान्नृपतावंसे संपरायसमूहयोः ।
कार्ये तरुप्रकाण्डे च आत्रादौ छन्दसो भिदि ॥
स्कन्धः प्रकाण्डे कायेंसे विज्ञानादिषु पञ्चसु । इति मेदिनी ।

नृपे समूहे व्यूहे चेति हेमः ।

सह सङ्गतानि चतुर्दश भवन्ति इति केचित्कथयन्ति ।

*निरवधीति* । निरवधि कालपरिच्छेदशून्यम् । निराश्रयं च सर्वाधः स्थितत्वादाश्रयशून्यम् । अत एव अनुवर्त्तितः कौतुकस्याश्चर्यस्य प्रपञ्चो विस्तारो यस्मिन् तादृशं यस्य भगवतो कूर्मावतारधारिणः स्थितम् अवस्थानम् । स इह जगति प्रथमः आद्यः कूर्ममूर्तिः कमठाकृतिः भवान् जयति । कीदृशः कूर्ममूर्त्तिः । चतुर्दश लोका भूर्भुवरादय एव उपर्यधोभावेन दीर्घत्वाद्वल्लिर्लता । तस्याः कन्दो मूलमित्यर्थः । विष्णुं प्रति भक्तस्य उक्तिरियमिति । अपरे तु—हे राजन् ? निरवधि निरवच्छिन्नकालम् । निराश्रयम् अनाधारम् । अनुवर्त्तितः कौतुकेन प्रपञ्चः संसारो यत्र तादृशं यस्य स्थितम् । पक्षे निरवधि निरन्तरम्, निराश्रयम् अपराधीनम्, अनुवर्त्तितः कौतुकानां विवाहनृत्यादीनां प्रपञ्चो नानाप्रकारता यत्र तादृशं यस्य स्थितम् । स प्रथमः अनादिः, अथवा प्रथमः स्वत एव भूतः स्वत एव लब्धराज्यादिश्च कूर्ममूर्तिः कमठात्मकः भवान् जयति । नाधुनिक इति भावः । कीदृशः, चतुर्दशलोका एव वल्लिस्तस्याः कन्दो मूलम् । त्वत्पराक्रमेणैव सर्वं स्थिरमिति भाव, इति व्याचख्युः । लोके वल्लित्वारोपो विष्णौ कन्दत्वारोपे निमित्तमिति अश्लिष्टं परम्परितं रूपकमिदम् ।

अत्रेदं सप्तवायुस्कन्धानां वृत्तं पुराणेषु क्वापि इमे के कीदृशा इति मया नोपलब्धम् ततः "तानि सप्तभिर्वायुस्कन्धैः सह चतुर्दश लोका इति केषांचिदुक्तिः कथं सङ्गच्छेत प्रत्युत चतुर्दशलोकानां परिगणनं पुराणेषु एवं लभ्यते । यथाग्निपुराणे—

चतुर्दशविधं ह्येतद्भूतवृन्दं प्रकीर्तितम् ।
भूर्भुवः स्वर्महश्चैव जनश्च तप एव च ॥
सत्यलोकश्च सप्तैते लोकास्तु परिकीर्तिताः ।
अतलं वितलं चैव सुतलं च तलातलम् ॥
महातलं रसातलं पातालं सप्तमं स्मृतमिति ।

भवेद्वा सिद्धचारणविद्याधरयक्ष ( गन्धर्वकिन्नर ) रक्षःपिशाचभूतप्रेतानां सप्त स्थानानि वायुना धार्यमाणानि भागवतेऽपि यथा—ततोऽधस्ताद्यक्षरक्षःपिशाचप्रेत-

"तानि सप्तभिः पातालैः सहैकविंशतिः" इति केचित्।

तदाहुः—"हरहासहरावासहरहारनिभप्रभाः।

कीर्त्तयस्तव लिम्पन्तु भुवनान्येकविंशतिम्॥"

"सर्वमुपपन्नम्" इति यायावरीयः। अविशेषविवक्षा यदेकयति, विशेषविवक्षात्वनेकयति। तेषु भूर्लोकः पृथिवी। तत्र सप्त महाद्वीपाः।

"जम्बूद्वीपः सर्वमध्ये ततश्च प्लक्षो नाम्ना शाल्मलोऽतः कुशोऽतः।

क्रौञ्चः शाकः पुष्करश्चेत्यथैषां बाह्या बाह्या संस्थितिर्मण्डलीभिः॥

---

गणानां विहाराजिरमन्तरिक्षं यावद्वायुः प्रवाति यावन्मेघा उपलभ्यन्त इति।

*तानीति*। चतुर्दश भुवनानि सप्तपातालैः सह संयोजितानि एकविंशतिरिति केचिद्वदन्ति।

*हरेति*। हरस्य हासः अट्टहासः। तस्य आवासः कैलाशः। तस्य हारः नागराजः। एतेषां निभा सदृशी प्रभा यासां ताः। तव कीर्त्तयः एकविंशतिं भुवनानि लिम्पन्तु व्याप्नुवन्तु इति यावत्।

*सर्वमिति*। लोकानामेकत्वद्वित्वादिकं सर्वम् उपपन्नं युक्तिमत्, यतो हि अशेषविवक्षा सामान्येन प्रतिपादयितुमिच्छा एकयति एकत्वं साधयति। विशेषप्रतिपादनेच्छा तु अनन्तयति अनेकयति।

*तेष्विति*। तेषु लोकेषु भूर्लोकः पृथिवीनामधेयः।

*तत्रेति*। तत्र पृथिव्यां सप्त महाद्वीपाः जलमध्यस्थितानि महास्थानानि। द्वीपोऽस्त्रियामन्तरीपं यदन्तर्वारिणस्तटम् = इत्यमरः।

नामतः क्रमतस्ते यथा—*जम्बूद्वीपः इति* जम्बूद्वीपः मेरोः दक्षिणपार्श्वस्थजम्बूवनस्पतिनाम्नावस्थितं द्वीपम्। यथा चोक्तं महाभारते सभापर्वणि—

मेरोस्तु दक्षिणे पार्श्वे जम्बूर्नाम वनस्पतिः।

नित्यपुष्पफलोपतः सिद्धचारणसेवितः॥

आस्वर्गमुच्छ्रिता राजँस्तस्य शाखा वनस्पतेः।

यस्य नाम्ना त्विदं द्वीपं जम्बूद्वीपमिति स्मृतम्॥ इति।

अस्यैव अपरं नाम सुदर्शनद्वीप इत्यपि। साधितं च कुम्भघोणस्थ—श्रीमन्मध्वविलास पुस्तकालयाधिपतिभ्यां टी० आर० कृष्णाचार्यप्रभृतिभ्यां स्वमुद्रापिते महाभारते भीष्मपर्वणि पञ्चमाध्यायीयत्रयोदशश्लोकस्थं सुदर्शनमिति पदं गृहीत्वोट्टङ्क्य-किमस्य प्रमाणं का वा आकृतिः तवाभिमता इत्याशङ्क्याह—सुदर्शनमिति। सुदर्शनो नाम जम्बूवृक्षविशेषस्तन्नामाङ्कितोयं द्वीपः सुदर्शनद्वीपः तं प्रमाणत आकृतितश्च वक्ष्यामि। इति।

यथा च मूलपाठः—

सुदर्शनं प्रवक्ष्यामि द्वीपं तु कुरुनन्दन ?
परिमण्डलो महाराज द्वीपोसौ चक्रसंस्थितः।
नदीजालप्रतिच्छन्नः पर्वतैश्चाभ्रसन्निभैः।
पुरैश्च विविधाकारैः रम्यैर्जनपदैस्तथा॥
वृक्षैः पुष्पफलोपेतैः सम्पन्नधनधान्यवान।
लावणेन समुद्रेण समन्तात्परिवारितः॥ इति।

इदं तु बोध्यम्। जम्बूर्वनस्पतिः, जम्बूः पर्वतः, जम्बूर्नदी, एषां समाश्रयेणासौ जम्बूद्वीपः प्रथितः। यथा जम्बूनदीवर्णनम्—

ययौ जम्बूनदीतीरे नदीं श्रेष्ठां विलोकयन्।
स तां मनोरमां दिव्यां जम्बूस्वादुरसावहाम्॥

जम्बूपर्वतः, जम्बूवनस्पतिश्च प्रसिद्धः। तद्बाह्ये ततो द्विगुणो लवणसमुद्रः। ततस्तद्बाह्ये मण्डलीरूपेण स्थितः परिमाणे ततो द्विगुणः प्लक्षो द्वीपः। एवं तद्बाह्ये ततो द्विगुणाः शाल्मलिः कुशः क्रौञ्चः शाकः पुष्करः इति द्वीपाः। तथा प्रत्येकद्वीपबाह्यप्रदेशे तत्तदपेक्षया द्विगुणः समुद्र इत्यपि बोध्यम्। यत उक्तं महाभारते।

द्विरंशस्तु ततः प्लक्षो द्विरंशः शाल्मलिर्महान्।
द्विरंशः पिप्पलस्तस्य द्विरंशश्च कुशो महान्॥ इति।
शाकद्वीपं प्रवक्ष्यामि यथावदिह पार्थिवः।
जम्बूद्वीपप्रमाणेन द्विगुणः स नराधिपः।
विष्कम्भेण महाराज सागरोपि विभागशः।
क्षीरोदो भरतश्रेष्ठ येन सम्परिवारितः॥ इति।

यथा च तत्रैव ततः पूर्वम्। लावणस्य समुद्रस्य विष्कम्भो द्विगुणः स्मृतः। विष्कम्भो विस्तारः। भारते शाल्मलिरिति पाठः। भागवते शाल्मल इति पाठः। ग्रन्थकारेण तमेव गृहीत्वा शाल्मल इति अभिहितमिति बोध्यम्।

एतन्निष्कर्षो यथा—क्षेत्रफलतः पञ्चसहस्रायामो जम्बूद्वीपः। एवं तदुभयतः पञ्चपञ्चभिः सहस्रेण समुद्रस्य विस्तारः। तेन संगुणितो द्वीपस्य समुद्रस्य च पंचविंशति सहस्रयोजनो विस्तारः। द्विगुणः दशसहस्रयोजनश्च परिमण्डलस्तदितरद्वीपस्य। एवमुभयतः समुद्रवेष्टनेन सह चत्वारिंशतसहस्रः। एवं तृतीयोऽशीतिसहस्रः। चतुर्थः षष्टिसहस्राधिकं लक्षम्। पञ्चमो लक्षत्रयं विंशतिसहस्राणि। षष्ठो लक्षषट्कं चत्वारिंशत्सहस्राणि। सप्तमो द्वादशलक्षाणि अशीतिसहस्राणि। एषां मिथो मेलने पंचविंशतिलक्षाणि पंचत्रिंशत्सहस्राणि योजनानि सप्तानां समुद्राणां द्वीपानां च विष्कम्भः।

लावणो रसमयः सुरोदकः सार्पिषो दधिजलः पयःपयाः ।
स्वादुवारिरुदधिश्च सप्तमस्तान्परीत्य त इमे व्यवस्थिताः ॥"

"एक एवायं लावणः समुद्रः" इत्येके ।

तदाहुः—"द्वीपान्यष्टादशात्र क्षितिरपि नवभिर्विस्तृता स्वाङ्गखण्डै-
रेकोम्भोधिर्दिगन्तप्रविसृतसलिलः प्राज्यमेतत्सुराज्यम् ।
कस्मिन्नप्याजिकेलिव्यतिकरविजयोपार्जिते वीरवीर्ये
पर्याप्तं मे न दातुं तदिदमिति धिया वेधसे यश्चुकोप ॥"

"त्रयः" इत्यन्ये ।

तदाहुः—

"आकम्पितक्षितिभृता महता निकामं हेलाभिभूतजलधित्रितयेन यस्य ।

---

सप्त समुद्राश्च *लावण इति* लावणः लवणसमुद्रः । रसमयः इक्षुसमुद्रः । सुरोदकः सुरासमुद्रः । सार्पिषः घृतसमुद्रः । दधिजलः दधिसमुद्रः । पयो दुग्धमेव पयो जलं यस्मिन्नसौ पयःपयाः क्षीरसमुद्रः । स्वादुवारिः शुद्धोदकसमुद्रः सप्तमः त इमे पूर्वोक्ताः सप्त समुद्राः तान् द्वीपान् परीत्य परिवेष्टनं कृत्वा व्यवस्थिताः वर्त्तन्ते इति तात्पर्यम् ।

एकेषामाचार्याणामभिप्रायो यदेक एव लवणसमुद्रः–तदाहुरिति एकत्वं दर्शयति– *द्वीपानीति* । अत्र लोके अष्टादश द्वीपानि तत्र सप्त महाद्वीपाः जम्बूद्वीपादयः, अष्टौ जम्बूद्वीपोपद्वीपाः स्वर्णप्रस्थादयो वक्ष्यमाणाः । त्रयोऽन्ये । अष्टादशद्वीपनिखातयूपः इति महाकविकालिदासोक्त्या—

अमुष्य विद्या रसनाग्रनर्त्तकी त्रयीव नीतांगगुणेन विस्तरम् ।
अगाहताष्टादशतां जिगीषया नवद्वयद्वीपपृथग्जयश्रियाम् ॥

इति नैषधाच्च ज्ञातव्याःसन्तीति । नवभिः स्वाङ्गखण्डै इलावृतादिनवभिः वर्षैः विस्तृता क्षितिः । दिशामन्तेषु प्रविततं सलिलं यस्यासौ एकोऽम्भोधिः । एतत् प्राज्यं प्रभूतम् सुराज्यं च, तदिदं सर्वम् आजिरूपायां केलौ व्यतिकरेण यो विजयः । स उपार्जितः स्वाधीनीकृता येनासौ तथा । यद्यपि आजिकेलिव्यतिकरे उपार्जितो विजयो येनेति उपार्जितस्य पदस्य विजयपदात्प्राङ् निपातो भवितुं न्याय्यस्तथापि कवीनां निरंकुशत्वाद्वाहिताग्न्यादिष्विति वा समाधेयम् । कस्मिन्नपि वीरवर्यै अप्रतिमसाहसशालिनि वीरप्रधाने तस्मै इत्यर्थः दातुं मे मम न पर्याप्तं नालम् इति धिया यो राजा वेधसे ब्रह्मणे चुकोप चुक्रोध । अत्र एकोऽम्भोधिरित्यनेन समुद्रस्य एकत्वमुदाहृतम् ।

अन्ये कथयन्ति यत्त्रय एव समुद्राः । *आकम्पितेति* । आकम्पिताः घूर्णिताः

वीर्येण संहतिभिदा विहतोन्नतेन कल्पान्तकालविसृतः पवनोऽनुचक्रे ॥"

यथा वा—"मातङ्गानामभावे मदमलिनमुखैः प्राप्तमाशाकरीन्द्रैः
जाते रत्नापहारे दिशि दिशि ततयो भान्ति चिन्तामणीनाम्।
छिन्नेषूद्यानवापीतरुषु विरचिताः कल्पवृक्षा रिपूणां
यस्योदञ्चत्रिवेलावलयफलभुजां मानसी सिद्धिरासीत्॥"

"चत्वारः" इत्यपरे।

तदाहुः—"चतुः समुद्रवेलोर्मिरचितैकावलीलतम्।
मेरुमप्यद्रिमुल्लङ्घ्य यस्य क्वापि गतं यशः॥"

---

क्षितिभृतो राजानः पर्वताश्च येन तत्। हेलया अनायासेनेत्यर्थः। अभिभूतं जलधीनां त्रितयं येन तत्। विहतम्। अन्तर्भाव्य णिजर्थं प्रयुक्तः। नाशितम्। उन्नतमिति भावप्रधानो निर्देशः। तेन औन्नत्यमौद्धत्यं शत्रूणां दर्प इति यावत्। येन तत्। संहतिं भिनत्तीति तेन पदार्थानां विश्लेषकारिणा यस्य महाराजस्य वीर्येण। कल्पान्तकाले विसृतो विकीर्णः पवनोऽनुचक्रे। अत्र जलधित्रितयत्वोक्त्या समुद्रस्य त्रित्वं साधितम्।

तादृशमेव उदाहरणान्तरमवतारयति-*मातङ्गानामिति*। हे राजन्? यस्य भवतो रिपूणां मानसी संकल्पोपस्थिता सिद्धिः अभिलषितफलप्राप्तिरासीत्। किंभूतानां रिपूणाम्—उदञ्चन्तीनां त्रिवेलानां सामुद्रीयतटत्रयीणां वलयस्थितानि फलानि भुञ्जते तेषां तादृशाम्। सिद्धेः स्वरूपं दर्शयति-*मातङ्गानामिति*। मातङ्गानां हस्तिनाम् अभावे आशाकरीन्द्रैः दिग्गजैः अथवा आशया कल्पितै गजेन्द्रैः स्थानं प्राप्तं गृहीतम्। रत्नानां मणीनामपहारे विनाशे जाते सति दिशि दिशि चिन्तामणीनां रत्नविशेषाणाम्। अथवा चिन्तयोपकल्पितानां मणीनां ततयः पंक्तयो भान्ति शोभन्ते। उद्यानगताया वाप्यास्तरुषु वृक्षेषु छिन्नेषु नष्टेषु सत्सु कल्पवृक्षाः विरचिताः कल्पिताः। अयमत्र भावद्वैधः। युद्धे सम्मुखमभियुद्ध्य मृतास्ते शत्रवो हि—

द्वाविमौ पुरुषौ लोके सूर्यमण्डलभेदिनौ।
परिव्राड् योगयुक्तश्च युद्धेचाभिमुखे हतः। इत्युक्तेः-

स्वः प्राप्य देवत्वं गता, ततः निसर्गादेव तद्गतां संकल्पोपस्थितां सिद्धिं लभन्ते। अथवा तव भयात्पुरान्निर्गता भ्रष्टराज्याः समुद्रीयवेलासु भ्रमन्तोऽतिसमुत्सुकितया मानसोपकल्पितैस्तत्तद्वस्तुभिरात्मानं विनोदयन्तः संतोषमनुभवन्तीति।

अपरे समुद्राः चत्वारः इति निगदन्ति। *चतुरिति*। यस्य राज्ञः चतुः समुद्रीयवेलानामूर्मिभिस्तरङ्गैः रचिता एकावलीलता येन तत् यशः। मेरुमपि अद्रिं पर्वतमुल्लङ्घ्य क्वापि गतम्। सुमेरुं यावदपि यशः प्रसृतमिति भावः। चतुः समुद्रेत्युक्त्या तेषां चतुष्ट्वं समाहितम्।

"भिन्नाभिप्रायतया सर्वमुपपन्नम्" इति यायावरीयः । सप्तसमुद्रीवादिनस्तु शास्त्रादनपेता एव ।

तदाहुः—"आगस्त्यचुलुकोच्छिष्टसप्तवारिधिवारिणि ।
मुहूर्त्तं केशवेनापि तरता पूतकायितम् ॥
मध्येजम्बूद्वीपमाद्यो गिरीणां मेरुर्नाम्ना काञ्चनः शैलराजः ।
यो मूर्त्तानामौषधीनां निधानं यश्चावासः सर्ववृन्दारकाणाम् ॥

---

सर्वेषां मतानि सङ्गमयति ग्रन्थकारः-*भिन्नेति* । भिन्नोऽभिप्रायो येषां ते भिन्नाभिप्रायास्तेषां भावस्तत्ता तया आशयभेदेन सर्वं मतम् उपपन्नं युक्तिमत् । सप्तानां समुद्राणां समाहारः सप्तसमुद्री । तां वदन्तीति सप्तसमुद्रीवादिनः । ये तु पुनः सप्तसमुद्रीवादिनः ते तु शास्त्रादनपेताः शास्त्रीयाः एव नतु तदपेताः ।

*आगस्त्येति* । अगस्त्यस्य इयमागस्त्या । साचासौ चुलुका आचमनं तया उच्छिष्टे सप्तवारिधीनां वारिणि जले तरता केशवेनापि श्रीकृष्णेनापि मुहूर्त्तं क्षणं यावत् पूतकायितम् अपगततुषधान्यवदाचरितम् । इदं तावत्तपसो माहात्म्यम् । अत्र सप्तवारिधिवारिणीत्युक्त्या समुद्राणां सप्तत्वं प्रदर्शितम् ।

*मध्येजम्बूद्वीपमिति* । मध्येजम्बूद्वीपम् जम्बूद्वीपस्य मध्ये । पारे मध्ये षष्ठ्या वेति समासः । गिरीणां सर्वपर्वतानाम् आद्यः प्रथमः काञ्चनः सौवर्णमयः नाम्ना मेरुः शैलराजः पर्वतराट् । यः पर्वतः मूर्त्तानाम् औषधीनां निधानं खनिः । यश्च सर्ववृन्दारकाणां सर्वदेवानामावासः स्थानम् । सर्वेषामेव वर्षाणां मेरुरुत्तरतः स्थित इत्युक्तेरयमुदीच्याम् ।

तद्वर्णनं यथा भारते—

उदीचीमथराजेन्द्र ययौ पार्थो मुदान्वितः ।
स ददर्श ततो मेरुं शिखरीणां प्रभुं महत् ॥
तं काञ्चनमयं दिव्यं चतुर्वर्णं दुरासदम् ।
उन्नतं शतशाहस्रं योजनानां तु संस्थितम् ॥
ज्वलन्तमचलं मेरुं तेजोराशिमनुत्तमम् ।
आक्षिपन्तं प्रभां भानोः स्वशृङ्गैः काञ्चनोज्ज्वलैः ॥
काञ्चनाभरणं दिव्यं देवगन्धर्वसेवितम् ।
अप्रमेयमनाधृष्यमधर्मबहुलैर्जनैः ॥
व्यालैराचरितं घोरैर्दिव्यौषधिविदीपितम् ।
स्वर्गमावृत्य तिष्ठन्तमुच्छ्रायेण महागिरिम् ॥
अगम्यं मनसाप्यन्यैर्नदीवृक्षसमन्वितम् ।

तमेनमवधीकृत्य देवेनाम्बुजजन्मना ।
तिर्यगूर्ध्वमधस्ताच्च विश्वस्य रचना कृता ॥"

स भगवान्मेरुराद्यो वर्षपर्वतः । तस्य चतुर्दिशमिलावृतं वर्षम् । तस्योत्तरेण त्रयो वर्षगिरयः, नीलः श्वेतः शृङ्गवांश्च । रम्यकं, हिरण्मयम्, उत्तराः कुरव इति च क्रमेण त्रीणि तेषां वर्षाणि । दक्षिणेनापि त्रय एव निषधो हेमकूटो हिमवांश्च । हरिवर्षं, किंपुरुषं, भारतमिति च त्रीणि

नानाविहगसंघैश्च नादितं सुमनोहरः ॥

*तमेनमिति* । तमेनं मेरुम् अवधिकृत्य मर्यादीकृत्य । अम्बुजजन्मना ब्रह्मणा देवेन तिर्यग्—ऊर्ध्वम्=अधस्ताच्च विश्वस्य ब्रह्माण्डस्य रचना कृता ।

*स भगवानिति* । स प्रसिद्धो मेरुः आद्यः प्रथमो वर्षपर्वतः वर्षाणां मर्यादाकारी शैलः । तस्य मेरोः । चतुर्दिशम् जम्बूद्वीपस्य प्रथमं खण्डम् इलावृतं वर्षम् । तस्य उत्तरे नीलो वर्षपर्वतः रम्यकं वर्षम् । तथा तत्रैव श्वेतः वर्षपवतः हिरण्मयं वर्षम् । एवं तत्रैव शृङ्गवान् वर्षपर्वतः उत्तरकुरुवर्षम् । इलावृतस्य दक्षिणे निषधो वर्षपर्वतः । तदाश्रयं हरिवर्षम् । हेमकूटो वर्षपर्वतः तदाश्रयं किंपुरुषम् । हिवान् वर्षपर्वतः तदाश्रयं भारतवर्षम्—

तल्लक्षणं यथा—

उत्तरं यत्समुद्रस्य हिमाद्रेश्चैव दक्षिणम् ।
वर्षं तद्भारतं नाम भारती तत्र संततिः ॥ इति ॥

इलावृतस्य पूर्वापरे भागे माल्यवद्गन्धमादनौ वर्षपर्वतौ । तदाश्रये भद्राश्वकेतुमालवर्षे । इत्थं नव वर्षाणि । तत्र नवसु वर्षेषु इदमस्मदावासभूतं जम्बूद्वीपनवमांशं भारतं वर्षम् । वसन्त्येषु तद् वर्षम् । वसन्ति तेषु सत्वानि नानाजातीनि सवश इत्युक्तेः । अस्य भारतस्य नव भेदाः । इन्द्रद्वीपः इन्द्रानदी समीपस्थः । कसेरुमान् कसेरुमता क्षत्रियेण आवासितः । ताम्रपर्णः ताम्रपर्णी नदीसमन्वितः । एवं गभस्तिमत्प्रभृतयो द्वीपाः स्वयमुह्याः गवेषणया ।

यथाचोक्तं विष्णुपुराणे—

भारतस्यास्य वर्षस्य नवभेदान्निशामय
इन्द्रद्वीपः कसेरुमान् ताम्रपर्णो गभस्तिमान् ।
नागद्वीपस्तथा सौम्यो गन्धर्वस्त्वथ वारुणः
अयं तु नवमस्तेषां द्वीपः सागरसंभवः ॥

अयमित्यनेन प्रकृतत्वात्कुमारीद्वीपो गृह्यते ।

इदमत्र वोध्यम्-श्रीमता परमभागविता प्रियव्रतेन स्वरथं भ्रामितम् तस्य च

वर्षाणि । तत्रेदं भारतं वर्षमस्य च नव भेदाः । इन्द्रद्वीपः, कसेरुमान्, ताम्रपर्णो, गभस्तिमान्, नागद्वीपः, सौम्यो, गन्धर्वो, वरुणः, कुमारीद्वीपश्चायं नवमः ।

---

वारसप्तकभ्रामितत्वेन सप्त सिन्धवः संजातास्ततश्च सप्त द्वीपाः परिकल्पिता । ते च उपरि नामतो निर्दिष्टाः । तेषु जम्बूद्वीपो महान् द्वीपः । तस्य च नव भागाः इलावृतम् १ भद्राश्ववर्षम् २ हरिवर्षम् ३ केतुमालवर्षम् ४ रम्यकं ५ हिरण्मयं ६ उत्तरकुरुवर्षम् ७ किंपुरुषवर्षम् ८ भारतवर्षम् ९ । वर्षाणां कल्पनास्वरूपं चेदम् । मेरुर्नामा पर्वतः सर्वतो महान् ऊर्ध्वं चतुरशीतिविस्तारः मूर्ध्नि द्वात्रिंशत्परिमाणः, योजनानां षोडशसहस्राणि मूले स्थितः योजनानां चतुरशीतिसहस्राणि तिर्यक् प्रविष्टः । उक्तं चः—

योजनानां सहस्राणि षोडशाधः किल स्मृतः ।
ऊर्ध्वं च चतुरशीतिर्द्वात्रिंशन्मूर्ध्नि विस्तृतः ॥
अधस्ताच्चतुरशीति योजनानां महीपते ।
ऊर्ध्वमधश्च तिर्यक्च मेरुरावृत्य तिष्ठति ॥

तस्य मेरोः चतुर्दिशमिलावृतं वर्षम् । इलावृतमुत्तरेण नीलः श्वेतः शृङ्गवान्, इति त्रयः क्रमशः रम्यकहिरण्मयोत्तरकुरूणां वर्षाणां मर्यादागिरयः प्रागायताः क्षारोदसमुद्रावधयः द्विसहस्रपृथवः पूर्वस्मात्पूर्वस्मादुत्तर उत्तरो दैर्घ्य ह्रस्वाः एकैकशः सहस्रयोजनान्तरविष्कम्भाः सन्ति । दक्षिणेनेलावृतं निषधो हेमकूटो हिमालय इति त्रयो हरिवर्षकिंपुरुषभारतानां यथासंख्यं मर्यादागिरयो नीलादय इव प्रागायतप्रतियुताः किन्तु अयुत योजनोत्सेधाः ।

यथाचोक्तं महाभारते ।

प्रागायता महाराज षडेते वर्षपर्वताः ।
अवगाढा ह्युभयतः समुद्रौ पूर्वपश्चिमौ ॥
हिमवान् हेमकूटश्च निषधश्च नगोत्तमः ।
नीलश्च वैदूर्यमयः श्वेतश्च शशिसन्निभः ॥
सर्वधातुविचित्रश्च शृङ्गवान्नाम पर्वतः ॥ इति ॥

एवमिलावृतमपरेण पूर्वेण च माल्यवद्गन्धमादनौ आनीलनिषधायतौ द्विसहस्रं पप्रथतुः केतुमालभद्राश्ववर्षयोः सीमानं विदधाते ।

यथोक्तम् भारते—

दक्षिणस्य तु नीलस्य निषधस्योत्तरेण तु ।
प्रागायतो महाभाग माल्यवान्नाम पर्वतः ॥
ततः परं माल्यवतो पर्वतो गन्धमादनः ॥ इति ॥

पञ्चशतानि जलं, पञ्च स्थलमिति विभागेन प्रत्येकं योजनसहस्रावधयो दक्षिणात्समुद्रादद्रिराजं हिमवन्तं यावत्परस्परमगम्यास्ते ।

तान्येतानि यो जयति स सम्राडित्युच्यते । कुमारीपुरात्प्रभृति बिन्दुसरोऽवधि योजनानां दशशती चक्रवर्त्तिक्षेत्रम् । तां विजयमानश्चक्रवर्त्ती भवति ।

चक्रवर्त्तिचिह्नानि तु—"चक्रं रथो मणिर्भार्या निधिरश्वो गजस्तथा ।
प्रोक्तानि सप्त रत्नानि सर्वेषां चक्रवर्त्तिनाम् ॥"

अत्र च कुमारीद्वीपे—"विन्ध्यश्च पारियात्रश्च शुक्तिमानृक्षपर्वतः ।
महेन्द्रसह्यमलयाः सप्तैते कुलपर्वताः ॥"

---

तस्यैव जम्बूमहाद्वीपस्य अष्टौ उपद्वीपाः, स्वर्णप्रस्थः १ चन्द्रशुक्तः २ आवर्त्तकः ३ रमणकः ४ मन्दरहरिणः ५ पाञ्चजन्यः ६ सिंहलः ७ लङ्का ८ चेति ।

अत्र भारते पञ्चशतानि जलम् । पञ्च भागाः स्थलम् ।

इति जलस्थलयोर्विभागेन प्रत्येकं द्वीपाः योजनसहस्रावधयः दक्षिणाशास्थितं समुद्रमवधिकृत्य पर्वतराजं हिमाद्रिं यावत् पर्यन्तम् परस्परमगम्यास्तस्मात्तं गन्तुमशक्याः जनैः सन्ति ।

*तानीति* । तानि एतानि वर्षाणि यो जयति स्ववशीकृत्य सर्वोत्कृष्टतया स्थितिं करोति स सम्राट् इति उच्यते । कुमारीपुरात् कन्याद्वीपात्प्रभृति बिन्दुसरः पर्यन्तम् । एतत्तद्बिन्दुसरो यत्र भगीरथेन गङ्गावतरणार्थं तपस्तप्तम् ।

A sacred pool two miles of Gangotri in the Rudra-Himalaya, where Bhagiratha is said to have perfarmed asceticism to bring down the Goddess Ganga from Heaven.

दशशतयोजनात्मकं चक्रवर्त्तिनामकं क्षेत्रम् । तां योजनानां दशशतीम् । वस्तुतस्तु तामित्यस्य स्थाने तदिति समुचितः पाठः प्रतिभाति । ततस्तच्चक्रवर्त्तिक्षेत्रं विजयमानो राजा चक्रवर्त्ती भवति ।

चक्रवर्त्तिनो राज्ञो लक्षणानि तु—*चक्रमिति* । भार्या कृताभिषेका, यस्या एवौरसः पुत्रः राज्याधिकारी भवेत् । अन्यन्निगदव्याख्यातम् ।

अत्र अस्मदावासभूते कुमारीद्वीपे—विन्ध्यादयः सप्त प्रधानपर्वताः एषां कुलपर्वतत्वोक्त्या इत्थमुच्यते यदन्ये ये सहस्रशः पर्वता भारतेऽस्मिन् प्रसृतास्ते सर्वे एषां कुलपर्वतानां शाखाप्रशाखाभूता इति । नामतो यथा—*विन्ध्येति* ।

तत्र विन्ध्यादयः प्रतीतस्वरूपाः, मलयविशेषास्तु चत्वारः ।

तेषु प्रथमः—"आ मूलयष्टेः फणिवेष्टितानां सचन्दनानां जननन्दनानाम् ।
ककोलकैलामरिचैर्युतानां जातीतरूणां च स जन्मभूमिः ॥"

द्वितीयः—"यस्योत्तमां मौक्तिककामधेनुरुपत्यकामर्चति ताम्रपर्णी ।
रत्नेश्वरो रत्नमहानिधानं कुम्भोद्भवस्तं मलयं पुनाति ॥
तत्र द्रुमा विद्रुमनामधेया वंशेषु मुक्ताफलजन्म तत्र ।
मदोत्कटैः केसरिकण्ठनादैः स्फुटन्ति तस्मिन्घनसारवृक्षाः ॥"

तृतीयः—"विलासभूमिः सकलामराणां पदं नृणां गौर्मुनिपुङ्गवस्य ।
सदाफलैः पुष्पलताप्रवालैराश्चर्यमूलं मलयः स तत्र ॥"

चतुर्थः—"सा तत्र चामीकररत्नचित्रैः प्रासादमालावलभीविटङ्कैः ।
द्वारार्गलाबद्धसुरेश्वराङ्का लङ्केति या रावणराजधानी ॥

---

*तत्रेति* । विन्ध्यादयः षट् पर्वताः प्रतीतस्वरूपाः प्रथितलक्षणाः, किन्तु मलयस्य विशेषा भेदाः चत्वारः ।

*आमूलयष्टेरिति* । तेषु चतुर्षु मलयेषु प्रथमो यो मलयः स आमूलयष्टेः मूलभाग-मभिव्याप्य फणिभिः सर्पैः वेष्टितानां जनानन्दनानाम् सचन्दनानां श्रेष्ठहरितच-न्दनानाम् । तथा कक्कोलकैः, एलाभिः, मरिचैर्युतानां जातीवृक्षाणां जन्मभूमिः उ-त्पत्तिक्षेत्रम् ।

*यस्योत्तमामिति* । असौ द्वितीयः । यस्य मलयस्य उत्तमां श्रेष्ठाम् उपत्यकाम् अद्रेरासन्नभूमिम् । मौक्तिकमणीनां कामधेनुस्ताम्रपर्णी नदी ।अर्चति पूजयति तत्र प्रवहतीत्यर्थः । असौ मलयो रत्नेश्वरः । किं बहूक्तेन—रत्नानां मणीनां निधानमाकरः । अथ च तं मलयं कुम्भोद्भवमुनिरगस्त्यः पुनाति । दक्षिणदिशि तस्यर्षेरावासत्वात् ।

*तत्रेति* । तत्र द्वितीये मलयपर्वते विद्रुमनामधेयाः द्रुमाः प्रवालवृक्षाः स्फुरन्ति । तत्र वंशेषु वेणुषु मुक्ताफलानां जन्म । तस्मिन् मदेनोत्कटैः केसरीणां सिंहानां कण्ठना-दैः गलध्वनिभिः घनसारस्य कर्पूरस्य वृक्षाः स्फुटन्ति विकसन्ति ।

*विलासेति* । सकलानाममराणां विलासभूमिः क्रीडास्थलम् । नृणां पदम् मर्त्य-लोक इति यावत् । मुनिपुङ्गवस्य अगस्त्यस्य गौराशा । सदाफलैः प्रत्यर्तुभवैः फलैः पुष्पवतीनां लतानां वितानैश्च उपलक्षितः । एवं भूतः तत्र तेषु मलयेषु स तृतीयो मलयः आश्चर्यमूलम् आश्चर्यकारणम् ।

*सा तत्रेति* । तत्र चतुर्थे मलये । द्वारस्यार्गलायां बद्धाः सुरेश्वराणामङ्काः प्रतिमा यस्यां सा लंकेति नाम्नी रावणस्य राजधानी वर्त्तते । सा राजधानी चामीकरः सुव-

प्रवर्त्तते कोकिलनादहेतुः पुष्पप्रसूः पञ्चमजन्मदायी।
तेभ्यश्चतुर्भ्योऽपि वसन्तमित्रमुदङ्मुखो दक्षिणमातरिश्वा॥"

पूर्वापरयोः समुद्रयोर्हिमवद्विन्ध्ययोश्चान्तरमार्यावर्त्तः। तस्मिंश्चातुर्वर्ण्यं चातुराश्रम्यं च। यन्मूलश्च सदाचारः। तत्रत्यो व्यवहारः प्रायेण कवीनाम्।

तत्र वाराणस्याः पुरतः पूर्वदेशः। यत्राङ्गवंगकलिङ्ग-

---

र्णः। तत्र प्रत्युप्तरत्नैः चित्रा विचित्रवर्णा ये प्रासादमालायाः वलभ्यो विटङ्कास्तैरुपलक्षिता।

*प्रवर्त्तत इति*। तत्र पुर्यां कोकिलानां नादहेतुः ध्वनिकारणम्, पञ्चमस्य ध्वनेः जन्मदायी पुष्पप्रसूः वसन्तः प्रवर्त्तते। तथा तेभ्यः पूर्वोक्तेभ्यः चतुर्भ्योऽपि मलयेभ्यः। उदीचि मुखं यस्य स वसन्तस्य मित्रम् वर्द्धकत्वादुपकारी दक्षिणमातरिश्वा मलयमारुतः प्रवर्त्तते प्रवहति।

*पूर्वापरयोरिति*। एकत्र पूर्वापरौ समुद्रौ एकत्र हिमवद्विन्ध्यौ पर्वतौ एषां मध्यगतो देशः आर्यावर्त्तः।

आर्यावर्त्तः पुण्यभूमिर्मध्यं विन्ध्यहिमागयोरित्यमरः।
आसमुद्रात्तु वै पूर्वादासमुद्राच्च पश्चिमात्।
तयोरेवान्तरं गिर्योरार्यावर्त्तं विदुर्बुधाः। इति मनुः।

तस्मिन् आर्यावर्त्ते चत्वारो ब्राह्मणक्षत्रियवैश्यशूद्राः वर्णाः। ब्रह्मक्षत्रियविट्शूद्राश्चातुर्वर्ण्यमिति स्मृतमित्यमरः। ब्रह्मचर्यगृहस्थवानप्रस्थसंन्यासाः चत्वार आश्रमाः। चातुर्वर्ण्यचातुराश्रम्यमूलः सदाचारः। वर्णोच्छेदे आश्रमोच्छेदे च सदाचारोच्छेदः। तत्रत्य आर्यावर्त्तीयो व्यवहारः प्रायेण कवीनां प्रवर्त्तते।

तत्रार्यावर्त्ते वाराणस्याः काश्याः पुरतः पूर्वस्यां दिशि पूर्वदेशः। यत्र पूर्वे देशे सोमवंशे अनुवंशोत्पन्नस्य वलिनामकस्य राज्ञो भार्यायां सुदेष्णायां दीर्घतमस ऋषेर्जातैः अङ्ग-वङ्ग-कलिङ्ग-पुण्ड्र-सुह्मैः सोदरभ्रातृभिर्निर्मिताः तत्तन्नाम्ना ख्याता देशाः अंगादयः। तत्र अङ्गः अङ्गराजेन निर्मितः गङ्गासरय्वोर्मध्ये विद्यमानः देशः। अयमेव भागलपुरः। तस्य राजधानी चम्पापुरी। वङ्गराजेन निर्मितो देश वङ्गः, अयं वङ्गप्रान्तः यस्य राजधानीदानीं कलकत्ता। कलिङ्गराजेन निर्मितो देशः कलिङ्गः अन्ध्रदेशः तद्देशीया राजधानी राजपुरम् तत्रत्यो राजा पूर्वकाले दुर्योधनश्वशुरश्चित्राङ्गदः आसीत्। इदानीन्तनी राजधानी विजयपुरम्, अयं देशः वैतरिण्या नद्याः दक्षिणे तथा उत्कलप्रदेशस्य कञ्चिद्भागमवलम्ब्य राजमन्द्री-विजगापट्टमगञ्जमनगराणां पार्श्वे प्रवहमानायाः कृष्णानद्या उत्तरे वर्त्तते।

कोसलतोस(शष)लोत्कलमगधमुद्गरविदेहनेपालपुण्ड्रप्राग्ज्योतिषतामलिप्तकमलदमल्लवर्त्तकसुह्मब्रह्मोत्तरप्रभृतयो जनपदाः ।

कोसलो देशः, अवधप्रदेशे अस्याः पुरी अयोध्या । अयं देशः सरयूनदीकारणादेव द्वयोः प्रान्तयोः विभक्तः । उत्तरकोसलः दक्षिणकोसल इति तयोराख्या । तोषलः (अत्र तोसलशब्दे शकारः क्वचित् षकारः क्वचित् सकारः क्वचिदिति त्रिविधोऽपि पाठो दृश्यते) तत्सविधवर्त्ती देशः तस्य विवरणं स्कन्दपुराणे द्रष्टव्यम् । उत्कलः कलिङ्गदेशादुत्तरतो विद्यमानो देशः उडीसा इति प्रसिद्धः । मगधः अयं विहारप्रान्तः । अस्य पुरातनराजधानी राजगिरिरासीत् । शोणानदी अस्य प्राच्यप्रतीच्यसीमा सैव सीमस्वरूपेति भावः । मुद्गरः मुंगेर इति प्रसिद्धो भवेत् । तस्य विवरणं पुराणे अन्वेष्यम् । विदेहः तिरहुत इति प्रसिद्धः । यत्रत्यो राजा जनकः आसीत् । अयं पूर्वः कौशिकीनद्याः, पश्चिमः गण्डकीनद्याः, उत्तरः हिमालयात् , दक्षिणः गंगायाः । नेपालो देशः पर्वतश्च । अयं विदेहस्योत्तरतो हिमालयाद् दक्षिणतः । पुण्ड्रः पुण्ड्राजेन आवासितो देशः पुराणेषु मृग्यः पुरणिया इति साम्प्रतं प्रसिद्धो भवेदिति । प्राग्ज्योतिषम् पुरम् । तच्च आसामप्रदेशे कामरूपं कामाख्या चेति । तामलिप्तकः दामलिप्तक इति वा तामलुक इति प्रसिद्धो देशः तत्रास्ति, यत्र हुगलीनामकनद्या सह सलेईनामकनदीसङ्गमो जातः । मलक, मलद्इति वा करुशदेशसमीपस्थो देशः । शाहाबादेति जनपदस्य पाश्चात्यो भागः । मल्लौ देशौ द्वौ । एको मुलतान नगरात् पूर्वः । अपरो हि पारसनाथमन्दिरात्पश्चिमे, अयं हजारीबागस्य एवं मण्ढमस्य च जिला नाम्ना प्रसिद्धः । वर्त्तक इति अज्ञातः कश्चिद्देशः । बल्लवो वल्लवो वा देशः वलिया जिला इति प्रसिद्धः ।

सुह्मः सिन्धुनदीप्रान्ते विद्यमानो देशः । "ब्रह्मोत्तर" इति नाम्ना कश्चिज्जनपद कास्तीति न ज्ञायते । अस्ति तु "ब्रह्मावर्त्त" इति नामको देशः यस्य वर्णनं क्षेत्रत्वेन वनपर्वणि महाभारते एकाशीत्यध्याये द्व्यशीत्यध्याये च अस्ति । तथा कालिदासेन मेघदूते जनपदनाम्ना उट्टङ्कितः--

ब्रह्मावर्त्तं जनपदमथ च्छायया गाहमान इत्यादिना । अयं जनपदः सरस्वतीदृषद्वत्योरन्तराले विद्यते । तथा च मनुः ।

सरस्वतीदृषद्वत्योर्देवनद्योर्यदन्तरम् ।
तं देवनिर्मितं देशं ब्रह्मावर्त्तं प्रचक्षते ॥ इति ॥

इदानीमयं "अम्बाला" थानेश्वराख्यस्थानतः किञ्चिद्दक्षिणदिशमवलम्ब्य पूर्वस्यां दिशि वर्त्तते ।

बृहद्गृहलोहितगिरिचकोरदर्दुरनेपालकामरूपादयः पर्वताः। शोणलौहित्यौ नदौ। गङ्गाकरतोयाकपिशाद्याश्च नद्यः। लवलीग्रन्थिपर्णकागुरुद्राक्षाकस्तूरिकादीनामुत्पादः।

माहिष्मत्याः परतो दक्षिणापथः। यत्र महाराष्ट्रमाहिषकाश्मकविदर्भ-

---

लोहितो गिरिः यस्मात् लौहित्यो नदो वहति। दर्दुरः पर्वतः। अयं पर्वतः पूर्वघाट इति प्रसिद्धस्य दक्षिणो भागः। नेपालः यदाश्रितो नेपालेति प्रसिद्धो देशः। कामरूपः आसामप्रदेशस्थः पर्वतः, यत्र स्थिता भगवती कामाक्षी कृपामृतवृष्टिभिस्तत्रत्यान् सुखयति। शोणा अन्या शोणो ऽन्यः। शोणा तु सोन नाम्ना प्रथिता नदी मगधप्रदेशस्य उत्तरपार्श्ववर्तिन्यां पश्चिमभूम्यां प्रवहति। लौहित्यो नदः लोहितगिरेः प्रस्तुतः। अयं ब्रह्मपुत्रस्य एको भागस्तथा प्राग्ज्योतिषपुरादुत्तरे प्रवहति। लौहित्यः समुद्रोऽन्यः लौहित्या नदी अन्या। करतोया नदी = सैवास्ति। दीनाजपुररङ्गपुरजनपदावालम्ब्य वहति। तथेयं वङ्गराज्यस्य कामापुरस्य चान्तः पातिनीं सीमानं विदधाति। अर्थात् इयमेव तयोरान्तलिकी सीमा। कपिशा नदी। लवली। ग्रन्थिपर्णम् कुक्कुरवद्रा इति प्रसिद्धमौषधम्। ग्रन्थिपर्णं शुकं वर्हिपुष्पं स्थौणेयकुक्कुरे। इत्यमरः। अगुरुः अगर इति प्रसिद्धम्।

माहिष्मती नगरी तस्या अधिपतिः पुरा कार्तवीर्यः नीलश्चास्ताम्, इयं नगरी इन्दौरनगराद्दक्षिणे विंशतिक्रोशदूरे नर्मदानद्या दक्षिणतटे विद्यते।

तस्याः परतो दक्षिणापथः तत् पश्चिमस्यां दिशि गते अपाची दिग् प्रवृत्ता भवति। यत्र दक्षिणस्यां दिशि महाराष्ट्रः प्रसिद्धः प्रान्तः। माहिषकः (महीषका इत्यपि) मैसूर इति यं जनाः कथयंति। अश्मको देशः पुरातनः पुराणेषु विवृतः। विदर्भः विन्ध्यपर्वतस्य दक्षिणतः, दशार्णदेशस्य पश्चिमतः, गोदावर्याः उत्तरतः, सुराष्ट्रदेशस्य पूर्वतश्च विद्यमानो देशः। यो ही दानीं वरार इति प्रसिद्धः। अस्य देशस्य राजा पुरा भीष्म आसीत् यस्य पुत्री रुक्मिणी कृष्णेनोढा। अस्य राज्ये प्रधानपुराणि कुण्डिननगरभोजकपुरकोलामरावतीलिचपुरप्रभृतीनि आसन्।

Berar, the kingdom of Bhismha whose daughter Rukmini was married to Krishna. Its principal towns were Kundinanagara Bhojakatapura, A Kola, Amaroti Ellichpur, etc.।

कुन्तलक्रथकैशिकसूर्पारककाञ्चीकेरलकावेरमुरलवानवासकसिंहलचोलदण्ड-
कपाण्ड्यपल्लवगाङ्गनाशिक्यकौङ्कण-

कुन्तलो देशः, इदमस्य प्राचीनं नाम । यद्धि कुरुगोडभागत्वेन निरूप्यते । तथेदं स्थानं मद्रासप्रान्तान्तर्गतविल्लौरी-जनपदस्य एको भागः । The ancient name of the province in which Kurugode is situated. A portion of the Bellary district in the Madras Presidency. क्रथकैशिकः विदर्भदेशान्तर्गतः, कस्मिंश्चत्समये ऽयं विदर्भस्य राजधानी आसीत् In Berar, once the capital of Vidarbha. सूर्पारकोऽपि कश्चिद्देशः । काञ्ची सप्तपुरीष्वन्यतमा पुरी । विष्णुकाञ्ची अस्या एको भागः यत्र विष्णोः पीठं तद्भक्तानां समूहश्च । अपरो भागः शिवकाञ्ची यत्र शिवस्य लिङ्गम् शैवाश्च प्रधानानि इयं द्रविडदेशस्य प्राचीनराजधानी । अपरं नाम काञ्जीवरम् । इयं नगरी मद्रासप्रान्ते चिंग्लिपुटजनपदेऽस्ति । तथा चौलराज्ञो राजधानी आसीत् ।
Conjeevaram, in Chingleput district in the Madras presidency. It was the capital of Chola kings. केरलः देशः प्रसिद्धः, यो हीदानीं महात्मगान्धिनो गुरुवयूरनामकस्य जमोरिनाभिधव्यक्तेर्मन्दिरस्य कृते सत्याग्रहस्थलम् । अयं देशो मलावारनिकटे वर्तते । अस्यान्तर्गतानि मलावारःट्रावनकोरकनारास्थानानि । The Malabar coast. It comprises Malabar, Travancore, and Kanara. कावेरो देशः कावरीनदीसन्निहितो भवेन्मृग्यः । मुरलोऽपि कश्चिद्देशः । वानवासिकः, अयमपि देशः प्राचीनो वर्त्तते । सिंहल उपद्वीपो जम्बूद्वीपस्य । तथा अयमिदानी लङ्काद्वीपसविधे वर्त्तते । चोलो देशः यस्य महाभारते भीष्मपर्वणि विवरणं वर्त्तते । दण्डकोऽपि पुरातनो देशः । पाण्डयो देशः यः पाण्डुराष्ट्रपदेन पुराणे व्यवहृतः अर्थाद्यस्यापरं नाम पाण्डुराष्ट्रम् । अयं देशो दक्षिणे टिन्निवेलीमधुरयोराधुनिकयोर्जनपदयोरस्ति । तथा समयेसमयेऽस्य राजधानी उरगपुरम्, मधुरा च आसीत् । उरगपुरस्याधुनिकी आख्या "नेगपट्टम" इत्यस्ति ।

The modern districts of Tinnevelly and Madura in South India. Its capitals at different periods were Uragapura now called Negapatam and Madura. पल्लवो देशः पुरातनः । गाङ्गो पि भवेत्कश्चिद्देशः पुरातनः । नाशिक्यः नासिकं क्षेत्रं मुम्बई इति प्रसिद्धनगरीसविधेऽधुना विद्योतते । कोङ्कणोः देशः अस्य नाम महाभारते भीष्मपर्वणि देशसङ्ग्रहे प्राप्तम् ।

कोल्ल(ल)गिरिवल्लरप्रभृतयो जनपदाः। विन्ध्यदक्षिणपादमहेन्द्रमलयमेकल-पालमञ्जरसह्यश्रीपर्वतादयः पर्वताः। नर्मदातापीपयोष्णीगोदावरीकावेरीभैम-रथीवेणाकृष्णवेणीवञ्जुरातुङ्गभद्राताम्रपर्ण्युत्पलावतीरावणगङ्गाद्या नद्यः। तदुत्पत्तिर्मलयोत्पत्त्या व्याख्याता।

देवसभायाः परतः पश्चाद्देशः। तत्र देवसभसुराष्ट्रदशेरकत्रवणभृगुक-

---

कोलगिरिनामा कश्चिद्देशः सभापर्वणि भारते "दक्षिणदिग्विजये सहदेवेन जित", इतिमात्रं सूचितः।

कृत्स्नं कोलगिरिं चैव सुरभीपट्टनं तथा। इति।

लद्गित्वकस्तु गिरिरन्यः यस्य विवरणम् अश्वमेधपर्वणि भारते वर्त्तते। अतोऽत्र एकलकारकः पाठ समीचीनः। वल्लरोपि देशः पुराभवः। विन्ध्यस्य विन्ध्याचल इति प्रसिद्धस्य दक्षिणं चरणं दक्षिणापथे वर्त्तते। महेन्द्रः कुलपर्वतः। यत्र परशुराम-स्थानम्। अयं महेन्द्रपर्वतः दक्षिणप्रदेशीय गंजमजनपदे स्थितः तथा पहाडीति व्यवह्रियते जनैः। कुलपर्वतत्वेन प्रसिद्धः। मेकलः प्रसिद्धः पर्वतः यस्यापरं नाम अमरकण्टक इति अस्मादेव मेकलन्यकेत्यपराभिधा नर्मदा नदी प्रसूता। पालमञ्जरौ पुरातनौ पर्वतौ। सह्यः कुलपर्वतत्वेन प्रसिद्धः। श्रीपर्वतः यस्य "श्रीशैल" इति प्रथितं नाम। एष पर्वतः। कृष्णानदी तीरे वर्त्तते। तदुपरि मल्लिकार्जुननाम्नः शिवस्य स्थानमस्ति। नर्मदा = इयं प्रसिद्धा नदी। कलिङ्गदेशस्थादमरकण्टकापरनाम्नो मेकलपर्वतात्प्रभवति। तापी नदी पूरना इति प्रसिद्धायाः पयोष्णीनद्याः एको भागः, उभे तापीपयोष्णीनद्यौ वरारप्रान्ते प्रवहतः। गोदावरी प्रसिद्धा नदी। कावेरी प्रसिद्धा नदी। वेणा नदी तस्या वर्णनसंकेतो वनपर्वणि भारते वर्त्तते। कृष्णवेणी नदी यस्या अपरं नाम वेणी इति एतस्या अपि तत्रैव वर्णनम् वञ्जुरातुङ्गभद्रे अप्रसिद्धे नद्यौ पुरातन्यौ। ताम्रपर्णी प्रसिद्धा नदी दक्षिणप्रदेशे टिन्निवेली जनपदे वर्त्तते। In Tinnevelly ( South-India. ) उत्पलावती नदी यस्या अपरं नाम उत्पलिनी। इयं नैमिषारण्यसमीपे वहति। रावणगंगा इति, प्रसिद्धगंगाया देशभेदे-नापरं नाम अथवा काचिदप्रसिद्धा पुरातनी नदी।

*देव सभाया इति*। तत्र पश्चिमे देशे देवसभ अज्ञातो देशः। सुराष्ट्रः यस्य सुराट इति इदनीन्तनी आख्या। दशेरक इति मरुदेशः मरवस्तु दशेरका इति हेमोक्तेः। दशार्ण इति त्वन्यः प्रदेशः छत्तीसगढजिलायाः कश्चिद्भागः। त्रवणः कश्चिद्देशः त्रावनकोर इति त्वन्यस्तस्य दक्षिणदिग्भवत्वात्, अयं पश्चाद्देशस्थः। भृगुकच्छः भडौंच] इति प्रसिद्धः नर्मदासागरसंगमस्थलीयः क्षेत्रविशेषः। यत्र महर्षे भृगोः

च्छकच्छीयानर्त्तार्बुदब्राह्मणवाहयवनप्रभृतयो जनपदाः । गोवर्धनगिरिनगर-देवसभमाल्यशिखरार्बुदादयश्च पर्वताः । सरस्वतीश्वभ्रवतीवार्तघ्नीमहाहिडि-म्बाद्या नद्यः । करीरपीलुगुग्गुलुखर्जूरकरभादीनामुत्पादः ।

पृथूदकात्परत उत्तरापथः । यत्र शककेकयवोक्काणहूणवाणायुजकाम्बोज-वाह्लीकवह्लवलिम्पाककुलूतकीरतङ्गणतुषारतुरुष्कबर्बरहरहूरवहूहुकसहुडहंस-मार्गरमठकरकण्ठप्रभृतयो जनपदाः । हिमालयकलिन्देन्द्रकीलचन्द्राचला-

---

तपस्स्थली आसीत् । कच्छीयः अपरं नामास्य कच्छः । इदानीन्तनं नाम खाडा यो हि गुजराते वर्त्तते । इदं विशालं नगरं सम्प्रति अहमदावारस्य खेम्बईनगरस्य च अन्तरालेऽस्ति Khada in Gujrat, a large town between Ahmedabad and Cambay.

आनर्त्तः सम्प्रति गुजराते मालवाभागस्थो देशः अर्बुदोऽप्रसिद्धो देशः । ब्राह्मणवाहोऽपि तथा । यवनो देशः भीष्मपर्वणि भारते देशपरिगणनायां निर्दिष्टः । गोवर्धनः यस्योद्धरणं श्रीकृष्णेन कृतं सोद्यापि तथैव प्रसिद्धः । गिरिनगर इति अप्रसिद्धः पर्वतः । देवसभोऽपि तथैव । माल्यशिखर इति तु न ज्ञायत्ते । किन्तु माल्यवान् इति अपरः पर्वतः यो हि ईष्टरनघाट इति प्रसिद्धस्य स्थलस्य उत्तरीयो भागः । एष गुडापा-करनल-नैलोर-गुण्टूरेति प्रसिद्धेषु जिलेषु वर्त्तते । अर्वुदोपि अज्ञातप्रायः । सरस्वती प्रसिद्धा नदी वर्त्तते । श्वभ्रवती नदी अप्रसिद्धा । वार्त्तघ्नी अपि अप्रसिद्धा । मही तथा हिण्डिवा नद्यौ अप्रसिद्धे । करीरादयः प्रसिद्धा एव ।

पृथूदकं तीर्थम् । अस्य पेहवा इति इदानीन्तनं नाम । यत्र प्रसिद्धं ब्रह्मयोनि तीर्थं वर्त्तते । एतत्तीर्थं स्थाणवीश्वरात् ( थानेसर ) पश्चिमे सप्तक्रोशादुपरि स्थितम् । Pehaua where the celebrated Brahmayoni Tirtha is situated. It is fourteen miles to the west of Thanesara. शकः प्रसिद्धो देशः । केकयः = अयं देशः व्याससतलजयोर्मध्यपाती । यत्रस्थो राजा दशरथपत्नीकैकेय्याः पिता The country between Bias and Sutlej. वोक्काण इत्यस्य वलख वुखारा इति अपभ्रंशं नाम । हूणो देश विशेषः भीष्मपर्वणि निर्दिष्टः । वनायुजः वाणायुजः वनायुरिति पुरुरवसः पुत्रेण स्थापितो देशः । यो हि अरेविया नाम्ना इरानीं प्रसिद्धः । परन्तु अयं देशः पश्चिमे न नूत्तरापथे ।

दयः पर्वताः । गङ्गासिन्धुसरस्वतीशतद्रुचन्द्रभागायमुनेरावतीवितस्ताविपाशाकुहूदेविकाद्या नद्यः। सरलदेवदारुद्राक्षाकुंकुमचमराजिनसौवीरस्रोतोञ्जनसैन्धववैदूर्यतुरङ्गाणामुत्पादः।

तेषां मध्ये मध्यदेश इति कविव्यवहारः। न चायं नानुगन्ता शास्त्रार्थस्य। यदाहुः—"हिमवद्विन्ध्ययोर्मध्यं यत्प्राग्विनशनादपि।
प्रत्यगेव प्रयागाच्च मध्यदेशः प्रकीर्त्तितः॥"

---

काम्बोजः यस्यापरं नाम काम्भोज इति। अयं देशः निषधपर्वतस्य दक्षिणतो विद्यमानः। तत्रार्जुनस्य राजसूये दिग्विजयार्थं गमनम्। इदानीमयं देश अफगानिस्ताननाम्ना व्यवह्रियते अफगानिस्तान इति अश्वस्थानेत्यस्य अपभ्रंशं नाम। अत्रत्या हयाः प्रसिद्धाः। परन्तु देशोयं पश्चिमे न तूत्तरापथे। वाह्लीकः विपाशाशतद्र्वोर्मध्ये विद्यमानः केकयदेशस्य पूर्वोत्तरभागस्थः। वह्लव इति अप्रसिद्धः। लिम्पाकोऽपि तथा। कुलूतः अन्वेषणेऽप्राप्तः। कीरोऽपि तथा। तङ्गणः यस्यापरं नाम तङ्कुण इति। असौ भीष्मपर्वणि निर्दिष्टः। तुषारोऽप्राप्तः। तुरुष्को देशः तुर्किस्तान इति भवेत् परमयं पश्चिमस्थः। प्रस्तुताश्च दाक्षिणात्याः देशाः। बर्बरो देशः भीष्मपर्वणि निर्दिष्टः। हरहूरवः हूहुकः पुरातनौ कौचिद्भवेतां देशौ। हिमालयः प्रसिद्धः पर्वतः यस्माद् गंगादयो नद्योऽवतीर्णाः। कलिन्दः यस्मात्कालिन्दी प्रसृता। इन्द्रकीलोद्रिः यत्रार्जुनेन रुद्रोपासना कृता। चन्द्राचलः पर्वतः यस्माच्चन्द्रभागा नदी अवतीर्णा। गङ्गा प्रसिद्धा। सिन्धुः इण्डस् नाम्ना प्रसिद्धा। सरस्वती प्रसिद्धा। शतद्रुः सतलजपदेन प्रसिद्धा। चन्द्रभागा प्रसिद्धा नदी। यमुना प्रसिद्धा। इरावती प्रसिद्धा। वितस्ता झेलमनाम्ना प्रसिद्धा। विपाशा व्यासा नाम्ना प्रसिद्धा। कुहूदेवी अप्रसिद्धा नदी भारते। सरलादयः स्वनामप्रसिद्धा औषधयः प्रादुर्भवन्ति।

*तेषामिति*। तेषां सर्वदेशानां मध्ये अन्तराले विद्यमानो देशः मध्यदेशः इत्येवं रूपेण कवीनां व्यवहारः। *न चेति*। अयं मध्यदेशविषयक कविव्यवहारः शास्त्रोक्तार्थस्य अनुगन्ता न इति न किन्तु अनुसारी एव।

मध्यदेशविषयककविव्यवहारे प्रमाणं दर्शयति–*हिमवदिति*। यो हिमवतः पर्वतस्य विन्ध्यपर्वतस्य च आन्तरालिकः, यः विनशनात् प्राक् पूर्वम् प्रयागाद् इलाहावादेतिसमाख्यस्थानात् प्रत्यग्। एवेति सर्वत्र सम्बध्यते एवेन मध्यदेशस्य इतरत्रत्वनिवृत्तिपूर्वकं दार्ढ्यं सम्पाद्यते। पश्चिमे मध्यदेशः प्रकीर्तितः।

अथ विनशनशब्दार्थः, विनशनं तीर्थम् वालुकामयं मृत्तिकास्थानेऽस्ति अत एवात्र सरस्वती नदी स्थानेश्वरस्य पश्चिमं भागमवलम्ब्य भ्रमन्ती (वहन्ती) अन्तर्हिता भवति।

तत्र च ये देशाः पर्वताः सरितो द्रव्याणामुत्पादश्च तत्प्रसिद्धिसिद्धमिति न निर्दिष्टम् ।

द्वीपान्तराणां ये देशाः पर्वताः सरितस्था ।
नातिप्रयोज्याः कविभिरिति गाढं न चिन्तिताः ॥

"विनशनप्रयागयोर्गङ्गायमुनयोश्चान्तरमन्तर्वेदी । तदपेक्षया दिशा विभजेत" इति आचार्याः । "तत्रापि महोदयं मूलमवधीकृत्य" इति यायावरीयः । "अनियतत्वाद्दिशामनिश्चितो दिग्विभाग" इति एके । तथा हि यो वामनस्वामिनः पूर्वः स ब्रह्मशिलायाः पश्चिमः, यो गाधिपुरस्य दक्षिणः स कालप्रियस्योत्तर इति । "अवधिनिबन्धनमिदं रूपमितरत्त्वनियतमेव" इति यायावरीयः ।

---

एतत् निषादानां राष्ट्रस्य द्वारे वर्त्तते । महाभारते वनपर्वणि अस्य परिचयो दर्शितः । The spot in the great sandy desert in the district of Sirhind where the river Saraswati loses itself after taking a westernly course from Thanesar.

तत्र मध्यदेशे ये ये देशाः जनपदाः । द्रव्याणामिति पदं वस्तुमात्र निर्देशकं न तु वैशेषिकाभिमतनवद्रव्यपरम् । उत्पादः उत्पत्तिः । वर्त्तते तत्सर्वं प्रसिद्धम्, अतो न ग्रन्थरूपेण निबद्धमिति ।

*द्वीपान्तराणामिति* । द्वीपान्तराणां जम्बूद्वीपापेक्षया अन्येषां प्लक्षप्रभृतीनां पर्वतादयो विद्यन्ते ते कवीनां नातिप्रयोक्तुं विषयाः इति गाढं सविस्तारमित्यर्थः । न चिन्तिताः विवेचिताः ।

*तदपेक्षयेति* । अन्तर्वेदीदेशस्याऽपेक्षया दिशां विभागं कुर्यादित्याचार्याः । आचार्योक्तिं स्वीकृत्य व्यवस्थापयति-*तत्रापीति* । तत्रापि अन्तर्वेद्यामपि महोदयं कान्यकुब्जं मूलं मुख्यभूतम् अवधीकृत्य मर्यादतयाश्रित्येति । यायवरीयः ग्रन्थप्रणेता ।

एकेषामयमाशयः । यत् दिशां विभागः कर्त्तव्यः । परन्तु पूर्वं दिश एव अनियताः कुतो विभागः । इति । ननु दिशां कुतोऽनैयत्यमिति चेत् । शृणु । यो हि देशः एकस्मात् पूर्वः स एव इतरस्मात्पश्चिमः यथा वामनस्वामिनः पूर्वः स एव ब्रह्मशिलातः प्रत्यग् इति । उत्तरति ग्रन्थकारः । *अवधीति* । अस्माभिर्यदुपरि निर्दिष्टं तत्सर्वं रूपमवधिनिबन्धनं कार्यसञ्चालनाय 'मर्यादानिदर्शनाय, कृतम् इतरत्

सर्वम् अनियतमेव। अयं भावः। अयमस्मात्पूर्वः प्रत्यग् उदक् अपाक् इत्यादि व्यवहारः सापेक्षः स तु गृहकोणेऽपि भवितुं शक्नोति। परं तत्र दैशिकमर्यादासाधकमतो दैशिकमर्यादाहेतवे एतद्रूपं निर्दिष्टमिति न भ्रमितव्यं, न चाग्रहग्रहिलत्वं प्रकटनीयम्। इति।

अस्माभिरत्र यथालाभप्रकारेण देशपर्वतसरिदादीनां स्वरूपनिर्देशः कृतः विशेषं जिघृक्षुभिः भागवते ५ स्क०। १६-२० अ०॥ बृहन्नार० ३॥ पद्म० १। ३-९॥ वायु० ३४-५०॥ विष्णु० २। २-७॥ मात्स्य० १२१। कूर्म० १। ४४-४९॥ मार्कं० ५१-५७॥ वाराह० ७४-८९॥ ब्रह्म० १८-२७॥ देवीभाग० ८। ४-१३॥ लिङ्गपु० ४६॥ गरुड़पु० ५४-५७॥ शिवपु० १७-१८। बृहत्संहितायाम् भूगोलवर्णने। महाभारते भीष्मपर्वणि जम्बूनिर्माण पर्वणि। सभापर्वणि च॥ हेमचन्द्रीयाभिधानचिन्तामणौ॥ वाल्मीकिरामायणे किष्किन्धाकाण्डे। कामसूत्रे। कौटलीये अर्थशास्त्रे। ग्रन्थकारकृते बालरामायणे भारते च। आंग्लपुस्तकेषु जोगराफीप्रभृतिषु

अभिधानचिन्तामणौ यथा—

प्राज्ज्योतिषाः कामरूपाः मालवास्युरवन्तयः।
त्रैपुरास्तु डाहलास्युश्चैद्यास्ते चेदयश्चते॥
वङ्गास्तु हरिकेलिया अङ्गाश्चम्पोपलक्षिता।
साल्वास्तु कारकुक्षीया मरवस्तु दशेरकाः॥
जालन्धरास्त्रिगर्त्ताः स्युः नायिकास्तर्जिकाभिधाः।
कश्मीरास्तु माधुमताः सारस्वताः विकर्णिकाः॥
वाहीकाष्टक्कनामानः वाह्लीका वाह्लिकाह्वयाः।
लम्पाकास्तु मुरुण्डाः स्यु सौवीरास्तु कुमालकाः॥
तुरुष्कास्तु सात्वयाः स्युः कारूपाः स्यु बृहद्गृहाः।
प्रत्यग्रथास्त्वहिच्छत्राः कीकटा मगधाह्वयाः॥
ओण्ड्राः केरलपर्यायाः कुन्तला उपहालकाः॥ इति।

वात्स्यायनकामसूत्रटीकायां जयमङ्गलायाम्। यथा—

वङ्गा लौहित्यात्पूर्वेण। अङ्गा महानद्याः पूर्वेण। कलिङ्गा गौडविषयाद्दक्षिणेन। वाह्लीकदेश्याः उत्तरापथिकाः। आवन्तिका उज्जयिनीदेशभवाः। ता एव अपरमालव्यः। पश्चिमसमुद्रसमीपे अपरान्तदेशः। अपरमालवपश्चिमेन लाटविषयः। नर्मदाया दक्षिणेन देशो दक्षिणापथः। तत्र कर्णाटविषयात् पूर्वेण आन्ध्रविषयः। नर्मदा-कर्णाटविषयोर्मध्ये महाराष्ट्रविषयः। कर्णाटविषयाद्दक्षिणेन द्रविडविषयः। कोङ्कणविषयात् वानवासकविषयः। इति संक्षेपेण सरिदद्रिदेशानां विवरणम्॥

"प्राच्यपाचीप्रतीच्युदीच्यः चतस्रो दिशः" इत्येके ।

तदाहुः—"चतसृष्वपि दिक्षु रणे द्विषतः प्रति येन चित्रचरितेन ।
विहितमपूर्वमदक्षिणमपश्चिममनुत्तरं कर्म ॥"

"ऐन्द्री, आग्नेयी, याम्या, नैर्ऋती, वारुणी, वायव्या कौबेरी, ऐशानी चाष्टौ दिशः" इत्येके ।

तदाहुः—"एकं ज्योतिर्दृशौ द्वे त्रिजगति गदितान्यब्जजास्यैश्चतुर्भि-
र्भूतानां पञ्चमं यान्यलमृतुषु तथा षट्सु नानाविधानि ।
युष्माकं तानि सप्तत्रिदशमुनिनुतान्यष्टदिग्भाञ्जि भानो
र्यान्ति प्राह्णे नवत्वं दश दधतु शिवं दीधितानां शतानि ॥"

---

अथ दिशां विवरणम् । तत्र प्राचीप्रभृतयः चतस्रो दिश इति एकेषां मतम् ।

*चतसृष्वपीति* । चित्रं चरितं यस्य तेन । चित्रचरितेन येन राज्ञा रणे संग्रामे द्विषतः प्रति तत्कर्म विहितं कृतम् । यत्कर्म चतसृष्वपि दिक्षु पूर्वपश्चिमदक्षिणोत्तरासु अपूर्वम्, अदक्षिणम्, अपश्चिमम्, अनुत्तरम् जातम् । (पूर्वादीनां भावप्रधानस्वीकारेण विरोधः, पूर्वत्वरहिता पूर्वदिग् । दक्षिणत्वरहिता दक्षिणदिग् । पश्चिमत्वरहिता पश्चिमदिग् । उत्तरत्वरहिता उत्तरदिग् । परिहारः ) अपूर्वम् इतः प्राग् यन्नाभूत् । अदक्षिणम् असरलम् तीक्ष्णमिति यावत् । दक्षिणे सरलोदारौ इत्यमरः । अपश्चिमम् अतः ( राज्ञः ) परं न केनाप्यन्येन कर्त्तुं शक्यम् । अनुत्तरम् प्रतिवन्दितारहितम् । (लाजबाब इतिहिन्द्याम् )

अपरे कथयन्ति यद् ऐन्द्रयादयोऽष्टौ दिशो विदिङ्मिलिताः ।

*एकं ज्योतिरिति* । अष्टौ दिशो भजन्ते तानि अष्टदिग्भाञ्जि भानोः सूर्यस्य तानि दीधितीनां किरणानां दश शतानि सहस्राणीत्यर्थः सूर्यस्य "भानुर्हंसः सहस्रांशुस्तपनः सविता रविरित्युक्तेः सहस्रकिरणत्वमागमेषूक्तमिति ज्ञायते । युष्माकं शिवं दधतु धारयतु पोषयतु वा । करोतु इत्यर्थस्वीकारे तु अवाचकत्वं काव्यदोषः प्रसज्येत विपूर्वकस्यैव दधातेः करोत्यर्थस्वीकारात् । कीदृशो भानुः यदेकं ज्योतिः । यो द्वे दृशौ विष्णोः वामदक्षिणनेत्ररूपः । यः भूतानां पृथिव्यादिपंचभूतानां मध्ये पञ्चमं तेजस्वरूपः । कीदृंशि किरणानि । यानि चतुर्भिः अब्जं कमलं तस्माज्जातः अब्जजो ब्रह्मा तस्य आस्यानि मुखानि तैः । गदितानि प्रशंशितानि । तथा यानि षट्सु ऋतुषु नानाविधानि अनेकप्रकाराणि अलम् भूषणानि । अलं भूषणपर्याप्तिवारणवाचकेषु इत्यमरः । तथा सप्तभिः त्रिदशभूतैः देवरूपैः मुनिभिः ऋषिभिर्नुतानि । ते च ऋषयः मरीचिः अत्रिः अङ्गिराः पुलस्त्यः पुलहः क्रतुः वसिष्ठः इति । केचन इत्थं पठन्ति कश्यपः

"ब्राह्मी नागीया च द्वे ताभ्यां सह दशैताः" इत्यपरे।

तदाहुः—"दशदिक्तटपर्यन्तसीमसङ्कटभूमिके।
विषमा स्थूललक्ष्यस्य ब्रह्माण्डग्रामके स्थितिः॥"

सर्वमस्तु, विवक्षापरतन्त्रा हि दिशामियत्ता। तत्र चित्रास्वात्यन्तरे प्राची, तदनुसारेण प्रतीची, ध्रुवेणोदीची, तदनुसारेणापाची। अन्तरेषु विदिशः, ऊर्ध्वं ब्राह्मी, अधस्तान्नागीयेति।

---

अत्रिः भरद्वाजः विश्वामित्रः गौतमः जमदग्निः वसिष्ठः इति। तेषामेकोक्तिकी संज्ञा चित्रशिखण्डिनः इति। एवं प्राह्णे प्रातःकाले नवत्वं प्रत्यग्रत्वं यान्ति गच्छन्ति।

पूर्वस्मिन्मते—"सप्तर्षयो महात्मानः कश्यपश्च प्रजापतिरिरिति दिशा कश्यपस्य प्रजापतित्वान्न सप्तर्षिमध्ये गणना इति बोध्यम्।

अपरे ब्राह्मी नागीया इति द्वे अन्ये अपि स्वीकृत्याभ्यां सह एताः अष्टौ पूर्वोक्ता ऐन्द्र्यादयः दश मन्वते।

*दशदिक्तटेति*। स्थूलं कूटं लक्ष्यं यस्यासौ। अथवा स्थूलैर्महद्भिर्लक्ष्यतेऽसौ। स्थूललक्ष्यो दानशौण्डः स्युर्वदान्यस्थूललक्ष्यदानशौण्डा बहुप्रदे इत्यमरः। बहुप्रदस्तस्य महापुरुषस्य। ब्रह्माण्ड एव अल्पो ग्रामस्तस्मिन्। अल्पार्थे कन्। स्थितिः विषमा दुःस्था। कुतः स्थितेः विषमत्वमित्यत आह—*दशदिक्तटेति*। दश दिशां तटपर्यन्तया सीमया मर्यादया। सीमसीमे उभे स्त्रियामित्यमरः। सङ्कटा संबाधा अल्पा भूमिर्यस्मिंस्तस्मिन्। अत्राप्यल्पार्थे कन्।

सर्वमिति। सर्वम् दिशां चतुष्टम् अष्टत्वम् दशत्वं च सर्वं भवतु न कापि विप्रतिपत्तिः। हेतुमाह—*विवक्षेति*। यतो दिशामियत्तायां विवक्षैव सर्वप्रधाना अतो यथा वक्तुरिच्छा तथा व्यवहर्त्तव्यम्। दिशां स्वरूपमाह-*तत्रेति*। तत्र दिक्षु चित्रा नक्षत्रस्य स्वातेश्च अन्तराले प्राची दिक्। तत्प्रतीपा किन्तु तदनुसारेण तदभिमुखीना प्रतीची दिक्। ध्रुवेण उपलक्षिता दिक् उदीची। तत्प्रतीपा किन्तु तदभिमुखीना दिक् अपाची दक्षिणा। अवाचीति वकारमध्यगः पाठः असम्यक्। यतः अवपूर्वस्य अञ्चतेरधोमुखीभावे वृत्तिः। अप इति मध्यार्थं अव्ययम् अपदिशमितिवत्। तथा च अप मध्ये अञ्चति आप्नोति सूर्यं या सा अपाची। एवं प्राचीत्यत्रापि। प्रशब्दः प्राथम्ये। प्रथममञ्चति सूर्यं या सा। प्रति इति पश्चादथ अव्ययम्। प्रति पश्चाद् दिनान्ते अञ्चति सूर्यं या सा प्रतीची। उदिति उत्तरार्थे अव्ययम्। उत उत्तरम् अञ्चति सूर्यं या सा उदीची। सूर्योऽस्यामिति तु व्युत्पत्तिर्दुष्टा। अन्तरेषु दिशां मध्ये विदिशः। ऊर्ध्वं भूमेरुपरि ब्राह्मी। अधस्ताद् भूमेर्नीचैः नागीया नागानां सर्पाणामियं स्थली सप्तपाताली।

द्विविधो व्यवहारः कवीनां प्राक्सिद्धो विशिष्टस्थानावधिसाध्यश्च । तत्र प्राक्सिद्धे प्राची—

"द्वित्रैर्व्योम्नि पुराणमौक्तिकमणिच्छायैः स्थितं तारकै
ज्योंत्स्नापानभरालसेन वपुषा सुप्ताश्चकोराङ्गनाः ।
यातोऽस्ताचलचूलमुद्रसमधुच्छत्रच्छविश्चन्द्रमाः
प्राची बालविडाललोचनरुचां जाता च पात्रं ककुप् ॥"

दक्षिणा—"दक्षिणो दक्षिणामाशां यियासुः सोऽधिकं बभौ ।
जिहासुर्दक्षिणामाशां भगवानिव भास्करः ॥"

पश्चिमा—"पश्य पश्चिमदिगन्तलम्बिना निर्मितं मितकथे विवस्वता ।

---

उक्तं प्रकृते योजयति-*द्विविध इति* । दिशासु विषये कवीनां व्यवहारशैली परम्पराप्राप्तत्वेन प्राक्सिद्धा पुरातनी । विशिष्टस्थानस्य अवधिना साध्या व्यवहार्या च इत्येवं द्विविधा स्वरूपद्वयवती । तत्र तयोः व्यवहारयोर्मध्ये प्राक्सिद्धे दिग्व्यवहारे प्राची दिक् ।

*द्वित्रैरिति* । व्योम्नि आकाशे पुराणानां मौक्तिकमणीनां छाया इव छाया येषां तैः । मणीनां पुराणत्वोक्त्या तेषां निष्प्रभत्वमाविष्क्रियते तेन च ताराणामस्तोन्मुखत्वं प्रकाश्यते । द्वित्रैः तारकैः स्थितम् अवशिष्टम् । ज्योत्स्नायाः पानजन्येन भरेण हेतुना अलसेन वपुषा सुप्ताः चकोराङ्गनाः । उद्गसो निर्गतो मधुर्यस्माच्छत्रात्तद्वच्छविर्यस्य स चन्द्रमाः अस्ताचलं यातः । प्राची ककुप् दिशा च, विडाललोचनसदृश कान्तीनां पात्रं जातम् । सूर्योदयकालिकरक्तिम्ना प्रादुर्भूतमिति तत्त्वम् ।

*दक्षिणेति* । दक्षिणः उदारः । दक्षिणे सरलोदारौ इत्यमरः । महानित्यर्थः । स राजा दक्षिणाम् आशां दिशं यियासुः जिगमिषुः अधिकं बभौ । दक्षिणादक्षिणयोः स्त्रीपुंसयोरिव नैसर्गिकप्रेमत्वादिति भावः । क इव तामेव दिशं जिहासुः भगवान् भास्कर इव । उत्तरायणे भास्करस्य निसर्गसिद्धतापाधिक्यात् । अयं भावः । यां दिशं प्राप्य भास्करः क्षीणतेजाः भवति तामेव प्राप्यायमधिकं शोभते एतेनास्य भानोरपेक्षया प्रतापातिशयो ध्वन्यते ।

*पश्येति* । मिता कथा यस्याः सा तत् सम्बुद्धौ हे मितकथे ! अल्पभाषणस्वभावे ? मानिनि ? पश्चिमं दिग्प्रान्तमवलम्बते इति तेन विवस्वता सूर्येण दीर्घया विशालया सरोऽम्भसः प्रतिमया निर्मितं सेतुबन्धनं पश्य । अस्माल्लोकादपरलोकं गन्तुम् अन्तः पातिनां जलाशयानामुल्लङ्घनार्थं सेतुबन्धनं कृतमिति तात्पर्यम् । अस्तमनकालीनरक्तकिरणानां सरोऽम्भसि गतत्वेन तत्सौवर्णसम्भावनया सेतोः स्वरूपं

दीर्घया प्रतिमया सरोम्भसस्तापनीयमिव सेतुबन्धनम् ॥

उत्तरा—"अस्त्युत्तरस्यां दिशि देवतात्मा हिमालयो नाम नगाधिराजः।
पूर्वापरौ तोयनिधी वगाह्य स्थितः पृथिव्या इव मानदण्डः ॥"

विशिष्टस्थानावधौ तु दिग्विभागे पूर्वपश्चिमौ यथा—

"यादांसि हे ? चरत संगतगोत्रतन्त्रं पूर्वेण चन्दनगिरेरुत पश्चिमेन।
नो चेन्निरन्तरधराधरसेतुसूतिराकल्पमेष न विरंस्यति वो वियोगः ॥"

---

दर्शयति-तापनीयमिवेति। तपनीये सुवर्णे

स्वर्णं सुवर्णं कनकं हिरण्यं हेम हाटकम्।
तपनीयं शातकु ( कौ ) म्भं गाङ्गेयं भर्म कर्बुरमित्यमरः।

भवः। भवार्थेऽण्। सौवर्णमिव तापनीयमिव

*अस्त्युत्तरस्यामिति*। उत्तरस्यां दिशि। एतेनास्य देवावासतया देवत्वं साध्यते। देवता आत्मा अधिष्ठानं यस्य सः। एतेनास्य मेनकापरिणयपार्वतीजननादिचेतनव्यवहारयोग्यत्वं सूच्यते। हिमालयो नाम तत्वेन प्रसिद्धः नगाधिराजः पर्वतसम्राट्। एतेन विन्ध्यपारियात्रप्रभृतिसप्तकुलपर्वतानामस्य माण्डलिकत्वं सूच्यते। दीर्घविस्तारकथनव्याजेन तद्विशिष्यते—*पूर्वापराविति*। पूर्वः पश्चिमः तोयनिधी समुद्रौ अवगाह्य स्थितः। एतेनास्य लम्बायमानत्वं प्रकटितम्। वगाह्य इत्यत्रावस्य अकारलोपः। वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोरिति नियमेन। पूर्वापरसमुद्रावगाहित्वेन प्रतीयमानं लम्बायमानमुत्प्रेक्ष्यते—*पृथिव्या इवेति*। पृथिव्याः पृथुराज्ञा निर्मितायाः। एतेन निर्मितौ मानसाधनस्यावश्यकत्वं दर्शितम्, अन्यथा धरिण्याः धरित्र्या वेति पदमुपादीयेत। मानस्य आयामपरिच्छेदकस्य दण्डः इव स्थित इति पूर्वेणान्वयः।

पूर्वापरसागरावगाहित्वमस्य प्रोक्तं ब्रह्माण्डे—

कैलासो हिमवांश्चैव दक्षिणे वर्षपर्वतौ।
पूर्वपश्चिमगावेतावर्णवान्तरुपस्थितौ ॥ इति।

अत्र ( ब्रह्माण्डपद्ये ) कैलास इति हेमकूटस्य नामान्तरं यथाचोक्तं भारते।

हेमकूटस्तु सुमहान् कैलासो नाम पर्वतः।
यत्र वैश्रवणो राजन् गुह्यकैः सह मोदते ॥ इति।

*यादांसीति*। हे यादांसि ? जलजन्तवः ? यादांसि जलजन्तव इत्यमरः। चन्दनगिरेः पूर्वेण भागेन अथवा पश्चिमेन भागेन। पूर्वेण चन्दनगिरेः, पश्चिमेन चन्दनगिरेरित्यत्र एनपा द्वितीयेति सूत्रगतस्य एनपेत्यस्य योगविभागात्षष्ठी बोध्या। यथेच

दक्षिणोत्तरौ यथा—"काञ्च्याः पुरो दक्षिणदिग्विभागे
तथोत्तरस्यां दिशि वारिराशेः ।
कर्णान्तचक्रीकृतचारुचापो
रत्या समं साधु वसत्यनङ्गः ॥"

उत्तरादावप्युत्तरदिगभिधानं, अनुत्तरादावपि उत्तरदिगभिधानम् । तयोः प्रथमम्—"तत्रागारं धनपतिगृहानु(दु)त्तरेणास्मदीयं
दूराल्लक्ष्यं सुरपतिधनुश्चारुणा तोरणेन ।
यस्योद्याने कृतकतनयः कान्तया वर्द्धितो मे
हस्तप्राप्यः स्तबकविनतो बालमन्दारवृक्षः ॥"

द्वितीयम्—"सह्याद्रेरुत्तरे भागे यत्र गोदावरी नदी ।
पृथिव्यामिह कृत्स्नायां स प्रदेशो मनोरमः ॥"

---

संगतं गोत्राणां संवश्यानां तन्त्रं कुटुम्बकृत्यम् । तन्त्रं कुटुम्बकृत्ये स्यादिति मेदिनी । यस्मिन् कर्मणि तत् यथा स्यात्तथा चरत भ्रमत । नो चेत् अन्यथा निरन्तरधराधराणां निरवकाशतया स्थापि तपर्वतानां सेतुना सुतिर्जन्म यस्यासौ वो युस्माकमेष वियोगो विरहः आकल्पं आ प्रलयं न विरंस्यति । अन्यथाऽऽप्रलयवियोगसंभावना । आपद्येतेति भावः ।

*काञ्च्या इति* । काञ्च्याः पुरो नगर्याः । कर्णान्तं कर्णपर्यन्तं चक्रीकृतं कुण्डलीकृतं सज्यत्वेन आकृष्टमित्यर्थः । चारु मनोहरं पुष्पमयमित्यर्थः । चापं धनुर्येनासौ ।

*तत्रागारमिति* तत्र अलकायाम् । धनपतेः कुवेरस्य गृहान् उत्तरेण उत्तरस्यामिति भावः । "एनपा द्वितीया" इति सूत्रेण गृहानित्यत्र द्वितीया, उत्तरणेति एनवन्यतरस्यामित्यादिना वहितैनप्प्रत्ययान्तस्य योगे । गृहादिति पञ्चम्यन्तपाठे तु उत्तरेणेत्येतच् चारुणा तोरणेनेति तोरणविशेषणं तृतीयान्तं नत्वेनबन्तमिति बोध्यम् । तथा कुबेरस्य पुरी अलका स्वयमुत्तरे तत्रापि उत्तरभागे अस्मदीयं वक्तुर्मम अगारं गृहम् । गृहस्य लक्षणं वक्तुमुपक्रमते मेघपरिज्ञानाय । *दूरादिति* । सुरपतेः महेन्द्रस्य धनुरिव चारुणा मनोहरेण तोरणेन दूरादेव लक्ष्यं परिज्ञेयम् । तथा यस्य गृहस्य उद्याने मे मम कान्तया प्रेयस्या वर्द्धितः । वर्द्धने हेतुः । कृतकतनय कृत्रिमपुत्रः पुत्रभावेन रक्षित्वा वृद्धिं प्रापितः । हस्तेन प्राप्यः स्तबकैः पुष्पाणां गुच्छकैः विनतो नमितः बालमन्दारवृक्षः शिशुसंतानतरुरस्ति ।

*सह्याद्रेरिति* । निगदव्याख्यातम् । निवध्नीयात् काव्यघटकतया वर्णयेत् । साधारणं क्रमस्वरूपं तु उभयत्र देशपर्वतनद्यादिषु दिग्विदिक्षु च यथाशास्त्रं लोकप्रसि-

एवं दिगन्तरेष्वपि। तत्र देशपर्वतनद्यादीनां दिशां च यः क्रमस्तं तथैव निबध्नीयात्। साधारणं तूभयत्र लाकप्रसिद्धितश्च।

तद्वद्वर्णनियमः। तत्र पौरस्त्यानां श्यामो वर्णः, दाक्षिणात्यानां कृष्णः, पाश्चात्यानां पाण्डुः, उदीच्यानां गौरः, मध्यदेश्यानां कृष्णः श्यामो गौरश्च।

पौरस्त्यश्यामता—"श्यामेष्वङ्गेषु गौडीनां सूत्रहारैकहारिषु।
चक्रीकृत्य धनुः पौष्पमनङ्गो वल्गु वल्गति॥"

दाक्षिणात्यकृष्णता—"इदं भासां भर्त्तुर्द्रुतकनकगोलप्रतिकृति
क्रमान्मन्दज्योतिर्गलति नभसो बिम्बवलयम्।
अथैष प्राचीनः सरति मुरलीगण्डमलिन-
स्तरुच्छायाचक्रैः स्तबकित इव ध्वान्तविसरः॥"

पाश्चात्यपाण्डुता—"शाखास्मेरं मधुकवलनाकेलिलोलेक्षणानां
भृङ्गस्त्रीणां बकुलमुकुलं कुन्तलीभावमेति।
किं चेदानी यवनतरुणीपाण्डुगण्डस्थलीभ्यः
कान्तिः स्तोकं रचयति पदं नागवल्लीच्छदेषु॥"

---

देश्च ज्ञेयम्, निबध्नीयाद्वा। तद्वत् देशादिनियमादिक्रमवत् वर्णस्य गौरश्यामादेरपि नियमः।

*श्यामेष्विति*। सूत्रमध्यगतत्वेन निर्मितैः हारैः हारिषु सुन्दरेषु। पौष्पं पुष्पनिर्मितम्। वल्गु सुन्दरम्। वल्गति प्राप्नोति।

*इदं भासामिति*। द्रुतस्य कनकस्य गोलकतुल्या प्रतिकृतिः यस्य तत्। मन्दं ज्योतिर्यस्य तत्। इदं पुरोदृश्यमानम् भासां तेजसां भर्त्तुः सूर्यस्य। त्विषांपतिरहर्पतिरित्युक्तया तेजसां भर्तृत्वमस्त्येव तस्य। बिम्बवलयं क्रमाद्गलति पतति। अथ प्राचीतः मुरलीनां मुरलदेशवासिनीनां स्त्रीणां गण्डवन्मलिनः, तरूणां छायाचक्रैः स्तबकित इव संहीभूत इवेत्यर्थः ध्वान्तस्य विसरः समूहः सरति गच्छति।

*शाखास्मेरमिति*। शाखासु लताप्रकाण्डेषु स्मेरं विकसितं बकुलमुकुलम्। मधुकवलनारूपायां केलौ लोलानि ईक्षणानि नेत्राणि यासां तासां भृङ्गस्त्रीणां कुन्तलीभावम् अलकत्वम् एति प्राप्नोति।

किंच-इदानीं नागवल्लीदलानां पाकारम्भसमये यवनतरुणीनां पाण्डुभ्यो गण्डस्थलीभ्यः प्राप्ता कान्तिः पीतिमा नागवल्लीनां ताम्बूलीनां च्छदेषु पर्णेषु। पत्रं पलाशं छदनं दलं पर्णं छदः पुमानित्यमरः। स्तोकं पदं रचयति। यवनतरुणीकपोलवत्पीतानि ताम्बूलदलानि जातानीति तत्वम्।

उदीच्यगौरता—"पुष्पैः सम्प्रति काञ्चनारतरवः प्रत्यङ्गमालिङ्गिताः
वाल्हीकीदशनव्रणारुणतरैः पत्रैरशोकोऽर्चितः ।
जातं चम्पकमप्युदीच्यललनालावण्यचौर्यक्षमं
माञ्जिष्ठैर्मुकुलैश्च पाटलतरोरन्यैव काचिल्लिपिः ॥"

यथा वा—"काश्मीरीगात्रलेखासु लोलल्लावण्यवीचिषु ।
द्रावयित्वेव विन्यस्तं स्वर्णं षोडशवर्णकम् ॥"

मध्यदेश्यकृष्णता यथा—"युधिष्ठिरक्रोधवह्नेः कुरुवंशैकदाहिनः ।
पाञ्चालीं ददृशुः सर्वे कृष्णां धूमशिखामिव ॥"

तद्वन्मध्यदेश्यश्यामता । न च कविमार्गे श्यामकृष्णयोः पाण्डुगौरयोर्वा१ महान्विशेष इति कविसमयेष्ववोचाम ।

मध्यदेश्यगौरता—

"तव नवनवनीतपिण्डगौरे प्रतिफलदुत्तरकोसलेन्द्रपुत्र्याः ।
अवगतमलिके मृगाङ्कबिम्बं मृगमदपत्रनिभेन लाञ्छनेन ॥"

---

*पुष्पैः संप्रतीति* । संप्रति वसन्तसमये कांचनारस्य तरवो वृक्षाः प्रत्यङ्गं पुष्पैः आलिङ्गिताः संसक्ताः । अशोकः, बाह्लीकदेशोद्भवाबलानां दशनव्रणैः । स्ववल्लभकृतदन्तक्षतैरिव अरुणतरैः अतिरक्तैः पत्रैरर्चितः । चम्पकमपि उदीच्यानां ललनानां लावण्यस्य चौर्ये क्षमं जातम् । चम्पके अतिशुक्ला पुष्पसमृद्धिः समभूत् । पाटलतरोः मञ्जिष्ठवर्णतुल्यैः मुकुलैः कुड्मलैः अन्यैव पृथगेव लिपिः संजाता ।

*काश्मीरीति* । लोलन्त्यो लावण्यवीचयः सौन्दर्यतरङ्गा यासु तासु काश्मीरीणां गात्रलेखासु शरीरपंक्तिषु द्रावयित्वा इव षोडशवर्णकं स्वर्णं विन्यस्तम् ।

*युधिष्ठिरेति* । कुरूणां वंशः अन्वय एव वंशो वेणुः तमेकं दाहयतीति तस्य । युधिष्ठिरस्य क्रोध एव वह्निस्तस्य धूमशिखामिव पाञ्चालीं कृष्णां सर्वे ददृशुः । पाञ्चाल्यां धूमशिखात्वारोपो वंश एव वंशः क्रोध एव वह्निः, इत्यारोपे निमित्तमिति श्लिष्टाश्लिष्टशब्दनिबन्धनं परम्परितरूपकम् ।

*तव नवनवनीतेति* । हे मृगाङ्क ? चन्द्र ? नवस्य तत्कालनिःसारिततया प्रत्यग्रस्य नवनीतस्य हैयङ्गवीनस्य यत् पिण्डम् तद्वद् गौरे धवले उत्तरकौसलेन्द्रपुत्र्या अलिके भाले प्रतिफलत् संक्रामत् तव बिम्बं मृगमदस्य कस्तूर्याः पत्रनिभेन लाञ्छनेन चिह्नेन अवगतम् । अथवा कोसलेन्दुपुत्रीति पाठस्वीकारे, हे कौसलेन्दुपुत्रि ? तव अलिके प्रतिफलन्मृगांकबिम्बम् । अन्यत्समानम् । अथवा हे राजन् ? तवालिके ललाटपट्टे प्रतिफलन्मृगाङ्कबिम्बम् । उत्तरकौसलेन्द्रपुत्र्या मृगमदसम्पादितपत्रक्रिया

विशेषस्तु पूर्वदेशे राजपुत्र्यादीनां गौरः पाण्डुर्वा वर्णः। एवं दक्षिणदेशेऽपि।

तत्र प्रथमः—"कपोले जानक्याः करिकलभदन्तद्युतिमुषि
स्मरस्मेरस्फारोड्डमरपुलके वक्त्रकमलम्।
मुहुः पश्यञ्छृण्वन्रजनिचरसेनाकलकलं
जटाजूटग्रन्थिं द्रढयति रघूणां परिवृढः॥"

द्वितीयः—"तासां माधवपत्नीनां सर्वासां चन्द्रवर्चसाम्।
शब्दविद्येव विद्यानां मध्ये जज्वाल रुक्मिणी॥"

एवमन्यदपि यथासम्भवमभ्यूह्यम्—

निगदितनयविपरीतं देशविरुद्धं वदन्ति विद्वांसः।
तत्परिहार्यं यत्नात्तदुदाहृतयस्तु दोषेषु॥
इत्थं देशविभागो मुद्रामात्रेण सूत्रितः सुधियाम्।

---

सदृशेन कलङ्केनालक्षि। अथवा नवनवनीतपिण्डसदृशगौरवर्णे हे अवगतमलिके? मेधस्विनि! (अवगतं ज्ञातं मलते धारयतीति तत्सम्बुद्धौ। मल धारण इत्यस्मात् अकारः स्त्रीप्रत्ययः। ततष्टापि। ततः स्वार्थे कनि प्रत्ययस्थादितीत्वे सम्बुद्धिविवक्षायामवगतमलिके) उत्तरकौसलेन्द्रपुत्र्यास्तव मृगमदपत्रनिभेन लाञ्छनेन प्रतिफलत् भेदेन ज्ञायमानं मृगाङ्कबिम्बं वर्त्तते। यदि चन्द्रमसि कलङ्को नाभविष्यत्तदा ते मुखस्य चन्द्रमसि भेद एव लोको नाज्ञास्यत्। अलिकनिष्ठगौरत्वस्य चन्द्रगतगौरत्वस्य च ऐक्यात् तयोर्भेदो न बुद्धिपथमारोहेद्यदि लाञ्छनं न भवेत्।

*कपोले इति*। करिकलभस्य दन्तद्युतिं मुष्णातीति तस्मिन् स्मरेण कामोद्रेकेण स्मेरः प्रकाशमानः स्फारोड्डमरोऽत्युत्कटः पुलको रोमहर्षणं यस्मिन् तस्मिन् जानक्याः सीतायाः कपोले गण्डस्थले निजमुखकमलं मुहुः पश्यन्। (अपरतः) रजनिचरसेनायाः कलकलं कोलाहलं शृण्वन् रघूणां परिवृढः प्रभुः। प्रभौ परिवृढस्य निपातनात्। जटाजूटस्य ग्रन्थिं द्रढयति।

*तासामिति*। चन्द्रवद्वर्चो द्युतिर्यासां तासां सर्वासां षोडशसहस्रस्य माधवपत्नीनां कृष्णस्त्रीणां मध्ये। विद्यानाम् अष्टादशविद्यानां।मध्ये शब्दविद्येव व्याकरणमिव रुक्मिणी जज्वाल शुशुभे।

*निगदितेति*। यदस्माभिः देशानां विभजनं कृतं तद्विपरीतं लोकविरुद्धं च यद्विद्वांसो वदन्ति। तत्सर्वं यत्नात्परिहार्यम्॥।तदुदाहृतयो विरुद्धोदाहरणानि दोषेषु परिगणनीयानि।

*इत्थमिति*। मुद्रामात्रेण केवलं संकेतेनेति तात्पर्यम्। जिगीषति अध्येतुमि-

यस्तु जिगीषत्यधिकं पश्यतु मद्भुवनकोशमसौ ॥
इति राजशेखरकृतौ काव्यमीमांसायां कविरहस्ये प्रथमेऽधिकरणे
देशविभागः सप्तदशोऽध्यायः ॥

## अष्टादशोऽध्यायः

# कालविभागः ।

काष्ठा निमेषा दश पञ्च चैव त्रिंशच्च काष्ठाः कथिता कलेति ।
त्रिंशत्कलश्चैव भवेन्मुहूर्त्तस्तैस्त्रिंशता रात्र्यहनी समेते ॥

च्छति । भागवते पञ्चमस्कन्धे भुवनकोशवर्णनं वर्त्तते तद्दर्शनमयं महात्माऽपि भुवनकोश इति नाम उट्टङ्कन हि एतत्प्रणीतो भुवनकोशः दृश्यते श्रूयते वा क्वापि अद्यावधि ।

इति साहित्याचार्याहिताग्निश्रीमधुसूदनशर्मणः कृतौ मधुसूदनी-विवृतौ
देशविभागविवरणं नाम सप्तदशोऽध्यायः ।

* श्रीः *

यतिगणशोभितपादामञ्चितवृत्तां द्विजातिसंयुक्ताम् ।
हर्षादिभावलसितामार्यां सारस्वतीं वन्दे ॥

अथ पूर्वमध्यायैकेन देशं विभागेन निर्दिश्य कालं विभक्तुमिच्छुः प्रस्तावमारचयति *कालविभाग* इति अत्र अध्याये केवलं कालस्य विभागः सप्रपञ्चं दर्शनीयः ।

*काष्ठा इति* । दश पञ्च च पञ्चदश निमेषाः,-क्षणद्वययोर्लवः प्रोक्तो निमेषस्तु लवद्वयः इति वचनात्-त्रिंशल्लवाः काष्ठा ज्ञातव्या इति शेषः । अर्थात् त्रिंशल्लवरूपैः पञ्चदशनिमेषैरेका काष्ठा भवति । एवं त्रिंशत्काष्ठाभिरेका कला कथिता । त्रिंशत् कला यस्मिन्नसौ त्रिंशत्कलो मुहूर्त्तो भवेत् । त्रिंशता तैर्मुहूर्त्तैः समेते संगते रात्र्यहनी भवतः अहोरात्रो भवति । कोशकारेण निमेषादीनां भिन्नं स्वरूपं क्रमोऽपि भिन्न उदाहृतः । तद्यथा—

"अष्टादश निमेषास्तु काष्ठा" ( अत्र स्वरूपभेदः )
"त्रिंशत्तु ताः कला"
"तास्तु त्रिंशत्क्षणः" ( अत्र क्रमभेदः )
"ते तु मुहूर्तो द्वादशाऽस्त्रियाम्"
"ते तु त्रिंशदहोरात्रः" इति ( अत्र तु पूर्ववत् )

ते च चैत्राश्वयुजमासयोर्भवतः । चैत्रात्परं प्रतिमासं मौहूर्त्तिकी दिवसवृद्धिः निशाहानिश्च त्रिमास्याः; ततः परं मौहूर्त्तिकी निशावृद्धिः दिवसहानिश्च । आश्वयुजात्परतः पुनरेतदेव विपरीतम् । राशितो राश्यन्तरसङ्क्रमणमुष्णभासो मासः, वर्षादि दक्षिणायनं, शिशिराद्युत्तरायणं, द्व्ययनः संवत्सर इति सौरं मानम् । पञ्चदशाहोरात्रः पक्षः । वर्द्धमानसोमः शुक्लो, वर्द्धमानकृष्णिमा कृष्ण इति पित्र्यं मासमानम् । अमुना च वेदोदितः कृत्स्नोऽ

---

ते रात्र्यहनी । चैत्रेतिपदं चैत्रादिषण्मासपरम् । आश्वयुजपदं आश्विनादिषण्मासबोधकम् । तेन चैत्रादिद्वादशमासेषु रात्रिरहश्च भवतः । चैत्रात्परं चैत्रमासादारभ्योत्तरोत्तरं त्रिमास्याः यावन्मासत्रयपूर्त्तिः तावत् प्रतिमासम् मासे मासे मौहूर्त्तिकी दिवसस्य वृद्धिः निशाया हानिः ह्रासः । इयं स्थितिः ज्येष्ठान्ता । ततः परं ज्येष्ठादुत्तरं आषाढादारभ्य मौहूर्त्तिकी निशाया वृद्धिः दिवसस्य हानिः । आश्वयुजात्परतः अश्वयुजमारभ्य उत्तरोत्तरं पुनरपि एतदेव पूर्वोक्तक्रम एव किन्तु विपरीतम् प्रतीपम् भिन्नक्रममिति यावत । एकराशित अपरराशिं प्रति गमनम् संक्रमणम् उष्णभासो रवेः मासः सौरमास इत्यर्थः । वर्षा आदिर्यस्य तत् वर्षादि अर्थात् वर्षाशरद्धेमन्तैस्त्रिभिर्ऋतुभिः सूर्यस्य दक्षिणायनं श्रावणभाद्रपदाश्विनकार्त्तिकमार्गशीर्षपौषेषु षण्मासेषु अथवा कर्कसिंहकन्यातुलवृश्चिकधनराशिषु सूर्यः दक्षिणदिशि प्रचरति, तथा शिशिरवसन्तग्रीष्मैस्त्रिभिर्ऋतुभिः सूर्यस्य उत्तरायणं माघफाल्गुनचैत्रवैशाखज्येष्ठाषाढेषु षण्मासेषु अथवा मकरकुम्भमीनमेषवृषमिथुनेषु षड्राशिषु सूर्यः उत्तरस्यां दिशि गच्छति, इत्यतो दक्षिणस्यामयतेऽर्कोनेनेति दक्षिणायनम् उत्तरस्यामयतेऽर्कोनेनेति उत्तरायणम् । अयनं गतिः । एतच्चायनं सौरमेव न तु चान्द्रं भवतीत्यतः उक्तं सौरमानमिति । द्वाभ्यामयनाभ्यां सम्वत्सरः । पञ्चदशभिरहोरात्रैः पक्षो निष्पद्यते अर्थात् पञ्चदशदिनात्मकः पक्षः । पक्षस्ते दश पञ्च चेत्युक्तम् । वर्द्धमानः सोमो यस्मिन् पक्षेऽसौ वर्द्धमानसोमः शुक्लः पक्षः । वर्द्धमानः कृष्णिमा कालिमा यत्रासौ वर्द्धमानकृष्णिमा कृष्णः पक्षः । पक्षौ पूर्वापरौ शुक्लकृष्णावित्युक्तेः । अत्र यदि वर्द्धमानशुक्लिमा शुक्लः वर्द्धमानकृष्णिमा कृष्णः अथवा वर्द्धमानसोमः शुक्लः ह्रस्यमानसोमः कृष्णः इतिस्यात्तदा वरमन्यथा प्रक्रमभङ्गः प्रवर्त्तते । इत्येवमुक्तमेतत्पित्र्यं पितॄणां मासस्य मानं परिगणनम् । अमुना पित्र्येण मासमानेन वेदैरुदितः प्रोक्तः कृत्स्नोपि क्रियाकल्पः कर्मकाण्डः सम्पद्यते । पित्र्यमेव व्यत्ययितः पक्षो यस्मिन् तत् मानं चान्द्रमसम् । अयं भावः । मासस्य कृष्णप्रतिपदमारभ्य शुक्लपूर्णिमान्तं मासमानं पित्र्यमाने तिरोहितम् । तद्विपरीतं मानं शुक्लप्रतिपदमारभ्य अमान्तं मासमानं चान्द्रमासं भवति इति । इदं चान्द्रमसं मानम् आर्यावर्त्तस्य विन्ध्यहिमालयमध्यगभूमेः । वासि-

पि क्रियाकल्पः । पित्र्यमेव व्यत्ययितपक्षं चान्द्रमसम् । इदमार्यावर्त्तवासिनश्च कवयश्च मानमाश्रिताः । एवं च द्वौ पक्षौ मासः । द्वौ मासावृतुः । षण्णामृतूनां परिवर्त्तः संवत्सरः । स च चैत्रादिरिति दैवज्ञाः, श्रावणादिरिति लोकयात्राविदः । तत्र नभा नभस्यश्च वर्षाः, ईष ऊर्जश्च शरत्, सहः

---

नः स्थितिकारिणो मनुष्याः कवयो विद्वांसश्च आश्रिताः तन्मानमाश्रित्य चतुःषष्टि संस्कारान् कुर्वन्ति तथा व्यवहारमपि साधयन्ति ।

आर्यावर्त्तलक्षणमुक्तं मनौ—

आसमुद्रात्तु वै पूर्वादासमुद्राच्च पश्चिमात् ।
तयोरेवान्तरं गिर्योरार्यावर्त्तं विदुर्बुधाः । इति ।

एवं द्वौ पक्षौ संगतौ मासः द्वाभ्यां पक्षाभ्यां मिलित्वा एको मासो भवति । मासस्तु तावुभावित्युक्तेः। द्वौ मासौ ऋतुः द्वाभ्यां मासाभ्यामृतुर्निष्पद्यते । द्वौ द्वौ मार्गादिमासौ स्यादृतुरित्युक्तेः । षण्णामृतूनामर्थात् द्वादशमासानां परिवर्त्तं आवृत्तिः संव्वत्सरः । स च संव्वत्सरः चैत्रादिः चैत्रात्प्रवर्त्तते इति दैवज्ञा मौहूर्त्तिकाः गणकाः कथयन्ति। श्रावणादिः श्रावणात्संव्वत्सरः प्रवर्त्तते इति लोकयात्राविदः लौकिकाः । इदानीमपि वाङ्गी मैथिली पंचाङ्गपद्धतिः श्रावणादि-वत्सरिका दृश्यते । तथैव व्यवहृयते तत्रत्यैः । तत्र वत्सरे नभाः श्रावणः । श्रावणे तु स्यान्नभाः श्रावणिकश्च स इत्यमरः । नभस्यश्च भाद्रपदश्च । स्युर्नभस्यप्रौष्ठपदभाद्रभाद्रपदाः समा इत्यमरः । वर्षाः प्रावृडृतुः । स्त्रियां प्रावृट् स्त्रियां भूम्नि वर्षाः इत्यमरः । इषः आश्विनः । स्यादाश्विन इषोप्याश्वयुजोऽपीत्यमरः । ऊर्जश्च कार्त्तिकोपि । स्यात्तु कार्तिके । वाहुलोर्जौ कार्त्तिकिकः इत्यमरः । शरत् शरदृतुः ।

शरद्भवेच्छरदया प्रावृड् प्रावृषया सह । इति विश्वः
भागुरिमते टापि शरदा चेति दैक्षिताः ।

सहः मार्गशीर्षः । मार्गशीर्षे सहा मार्गः आग्रहायणिकश्च स इत्यमरः । सहस्यश्च पौषोपि । पौषे तषसहस्यौ द्वावित्यमरः । हेमन्तस्तुहिनर्तुः । तपः माघः । तपा माघे इत्यमरः । यद्यपि मार्गशीर्षवाचकस्य सहसः पुंस्त्वात्सहा इत्येत्र न तु सहः, एवं माघवाचकस्य तपसः पुंस्त्वात्तपा इत्येव न तपः इति । तथापि द्विरूपकोशप्रामाण्यात्, मार्गे सहः सहा इति शब्दार्णवात् तपस्तपा उभौ माघे इति रुद्रकोषाच्च उभयमपि साधु ।

ग्रन्थकारेण तु महात्मना तैत्तिरीयसंहिताश्रुतिरेव अपच्छिद्य लिखिता तत्रच सहः तप इत्येव पाठः तस्यास्तु स्वतः प्रामाण्यादेव साधुत्वम् । श्रुतिस्वरूपं तु

सहस्यश्च हेमन्तः, तपस्तपस्यश्च शिशिरः, मधुर्माधवश्च वसन्तः, शुक्रः शुचिश्च ग्रीष्मः। तत्र "वर्षासु पूर्वो वायुः" इति कवयः। "पाश्चात्यः, पौरस्त्यस्तु प्रतिहन्ता" इत्याचार्याः।

तदाहुः—"पुरोवाता हता प्रावृट् पश्चाद्वाता हता शरत्" इति।

तदाहुः—"प्रावृष्यम्भोभृताम्भोदभरनिर्भरमम्बरम्।

---

मधुश्च माधवश्च शुक्रश्च शुचिश्च नभश्च नभस्यश्चेषश्चोर्जश्च।
सहश्च सहस्यश्च तपश्च तपस्यश्चोपयामगृहीतोऽसि ॥ इति।

अत्र नभा इत्यस्य स्थाने नभ इति यदुक्तं तत्र नबभर्त्तीति जुहोत्यादिकाद् भस कान्तौ इति धातोः अन्यभ्योऽपि दृश्यन्ते इतिशास्त्राद्विचि सौ धातुरूपासन्तत्वात् अत्वसन्तस्य चाधातोरिति दीर्घः। नभसं खं मेघवर्त्म विहायसम् इति श्रुतेरदन्तोपि नभसशब्दः। अत एव नभसङ्गम इति पक्षिपर्यायः सङ्गच्छते। अलमप्रकृतेन प्रकृतमनुसरामः।

तपस्यश्च फाल्गुनोपि। अथ फाल्गुने। स्यात्तपस्यः फाल्गुनिकः इत्यमरः। शिशिरः तुषारर्तुः। मधुश्चैत्रः।

मधु पुष्परसे क्षौद्रे मद्ये ना तु मधुद्रुमे।
वसन्तदैत्यभिच्चैत्रे स्याज्जीवन्त्यां तु योषिति। इति विश्वः

माधवो वैशाखोपि। वैशाखे माधवो राधः इत्यमरः। वसन्तः पुष्पसमयः। वसन्तः पुष्पसमयः सुरभिरित्यमरः। शुक्रः ज्यैष्ठः। ज्यैष्ठे शुक्रः इत्यमरः। अत्र प्रकरणे क्वचिज् ज्येष्ठोऽपि लिखितः तत्र संज्ञापूर्वकस्य विधेरनित्यत्वाद्वृद्ध्यभावेन सोपि भवतीति बोध्यम्। शुचिरपि आषाढोपि। शुचिस्त्वयमाषाढे इत्यमरः। ग्रीष्मः निदाघर्तुः। ग्रीष्म ऊष्मकः

निदाघ उष्णोपगमः उष्ण ऊष्मागमस्तप इत्यमरः।

तत्र ऋतूनां मध्ये वर्षासु ऋतुषु वायुः समीरणः पूर्वः प्रोक्तः पूर्वदिग्भवः प्रवहति इति कविसम्प्रदायः। आचार्यास्तु कथयन्ति यद्वर्षासु पाश्चात्यः पश्चिमदिग्भवो वायुर्वाति पौरस्त्यस्तु प्रतिहन्ता विनाशकः। इति।

तदाहुर्भ्यां प्रमाणयन्ति च-*पुरो वातेति*। *प्रावृषीति*। पुरोवाता पूर्वदिग्भवसमीरणयुतेति भावः। प्रावृड् वर्षा हता, शरद् पश्चाद्वाता पश्चिमदिग्भववायुयुताहता नष्टा। वर्षासु यदि पौरस्त्यो वायुः प्रवहेत्तदा वर्षाभावो जायते। शरदि च पाश्चात्यो वहेत्तदा तत्कालोत्पद्यमानद्रव्याणां नाश इति भावः।

*प्रावृषीति*। प्रावृषि वर्षर्तौ अम्बरमाकाशम्, अम्भोभिर्जलैर्भृताः परिपूर्णाः येऽम्भोदा जलदास्तेषां भरेण समूहेन निर्भरम् व्याप्तम् तथा कादम्बानां कुसुमास्ते

कादम्बकुसुमामोदा वायवो वान्ति वारुणाः ॥"

"वस्तुवृत्तिरतन्त्रं, कविसमयः प्रमाणम्" इति यायावरीयः ।

तदाहुः—"पौरस्त्यस्तोयदर्त्तोः पवन इव पतन्पावकस्येव धूमो
विश्वस्येवादिसर्गः प्रणव इव परं पावनं वेदराशेः ।
सन्ध्यानृत्तोत्सवेच्छोरिव मदनरिपोर्नन्दिनान्दीनिनादः
सौरस्याग्रे सुखं वो वितरतु विनतानन्दनः स्यन्दनस्य ॥"

शरद्यनियतदिक्को वायुर्यथा—
"उषःसु ववुराकृष्टजडावश्यायशीकराः ।
शेफालीकलिकाकोशकषायामोदिनोऽनिलाः ॥"

"हेमन्ते पाश्चात्यो वायुः" इति एके । "उदीच्य" इति अपरे ।

---

षामामोदः अतिनिर्हारी गन्धो येषु ते वारुणा पाश्चात्या वायवो वान्ति प्रवहन्ति । एवं च प्रमाणाभ्यां प्रावृषि पाश्चात्यो वायुर्वहति न तु पौरस्त्यः इति सिद्ध्यति ।

अत्रोच्यते-*वस्तुवृत्तिरिति* । वस्तूनां पदार्थानां वृत्तिर्वर्त्तनं व्यवहारः अस्वतन्त्रः पराधीनो भवति अस्मिन् विषये। कविसमयः कविसंप्रदायः प्रमाणम् प्रमितिविषयः, इति ।

तथाहुरित्यनेन स्वोक्तेर्थे प्राचां साम्मत्यमुद्घोषयति-*पौरस्त्य इति*। तोयदानां मेघानां प्रादुर्भावस्य ऋतुः कालः प्रावृट् तस्य तोयदर्त्तोः पौरस्त्यः प्राच्यः पवन इव समीरण इव पावकस्य अग्नेः धूम इव । विश्वस्य सृष्टेरादिसर्ग इव प्रथमोत्पत्तिरिव । वेदराशेः श्रुतिसमूहस्य परं पावनं प्रणव ओंकार इव । सन्ध्यायां नर्त्तितुमिच्छावतो मदनरिपोः शिवस्य नन्दिनां मङ्गलपाठकानां नान्द्या नाट्यप्रारम्भे मङ्गलपाठस्य निनादः घोषः इव । सौरस्य सूर्यसम्बन्धिनः स्यन्दनस्य रथस्य अग्रे पतन् गच्छन् विनतानन्दनः वनतेयोऽरुणः वो युष्मभ्यं सुखं कल्याणं वितरतु ददातु । अत्र वर्षर्त्तुवायोः पूर्वदिग्वाहित्वम् ।

*शरदीति* । शरदि तुहिनर्त्तौ वायुरनियतदिक्कः दिक्संचारनियमरहितत्वं वायोः । यथा-*उषः स्विति* । शरदि उषःसु प्रातः आकृष्टा जडस्य शीतस्य मन्दस्य वा अवश्यायस्य नीहारस्य । अवश्यायस्तु नीहारस्तुषारस्तुहिनं हिमम् इत्यमरः । शीकरा अम्बुकणाः । शीकरोऽम्बुकणः स्मृतः इत्यमरः । यैस्ते। शेफालीनां निर्गुण्डीनां शेफालिका तु सुवहा निर्गुण्डी नीलिका च सेत्यमरः । कलिकाकोशस्य कुड्मलकोशस्य कषायेण सौरभेण आमोदिनः सुरभयः अनिला वायवो ववुः संचेरुः ।

हेमन्तर्त्तौ पाश्चात्यः प्रतीच्यो वायुः प्रचरति । इत्येवमेक आचार्या

"उभयमपि" इति यायावरीयः। तयोः पाश्चात्यः—

"भञ्जन्भूर्जद्रुमालीस्तुहिनगिरितटेषूद्गतास्त्वक्कराला:
रेवाम्भःस्थूलवीचीचयचकितचलच्चातकान् व्याधुनानः।
पाश्चात्यो वाति वेगाद्द्रुततुहिनशिलाशीकरासारवर्षी
मातङ्गक्षुण्णसान्द्रस्नुतसरलतरत्सारसारी समीरः॥"

उदीच्यः—"लैम्पाकीनां किरन्तश्चिकुरविरचनां रल्लकांल्लासयन्तः
चुम्बन्तश्चन्द्रभागासलिलमविकलं भूर्जकाण्डैकचण्डाः।
एते कस्तूरिकैणप्रणयसुरभयो वल्लभा वाल्हवीनां
कौलूतीकेलिकाराः परिचयितहिमं वायवो वान्त्युदीच्याः॥"

---

वदन्ति। अपरे वदन्ति यदुदीच्य उत्तरदिग्भवो वायुर्वाति। ग्रन्थकारः कथयति-उभयमपि कथनं साधु हेमन्ते पाश्चात्योऽपि उदीच्योपि वायुर्वाति। तयोर्मध्ये पाश्चात्यः—

*भञ्जन्निति*। तुहिनगिरेः हिमालयस्य तटेषु तीरेषु उद्गताः उत्पन्नाः, त्वचि करालाः कठोराः भूर्जद्रुमस्यालीः श्रेणीः भञ्जन् त्रोटयन्। रेवाया अम्भसो जलस्य स्थूलानां वीचीनां तरङ्गानां चयेन समूहेन चकितान् साश्चर्यान् अत एव चलतः चातकान् व्याधुनानः कम्पायमानः। द्रुताः अभिस्यन्दिता या तुहिनशिलाः तुषारपाषाणाः तासां शीकरान् आसारेण धारावृष्ट्या वर्षयतीति तथा। मातङ्गैर्गजैः क्षुण्णा भग्नाः अत एव सान्द्रं यथास्यात्तथा स्नुताः द्रुताः ये सरलाःपूतिकाष्ठानि। पीतद्रुः सरलः पूतिकाष्ठं चेत्यमरः। तेषां तरन्तं प्रवहन्तं सारं स्थिरांशं सौरभमिति यावत् सारयति विस्तारयतीति तथा पाश्चात्यः समीरो वायुः वेगाद्भसाद्वाति प्रवहति।

उदीच्यो वायुर्यथा-*लैम्पाकीनामिति*। लैम्पाकीनाम्। पृथूकादत्पुरतो भाविनः उत्तरापथस्य अन्तर्गतो देशो लिम्पाकः। तत्रत्यनायिकानाम्। चिकुराणां केशानाम्। चिकुरः कुन्तलो वालः कचः केशः शिरोरुहः इत्यमरः। विरचनां विन्यासम्। किरन्तः विलुंपन्तः। रल्लकान् शिरः सिन्दूरसरणीः। शिरः सिन्दूरसणिः स्त्रीणामारल्लकं स्मृतमिति हलायुधः। लासयन्तो ललयन्तः। चन्द्रभागाया नद्याः सलिलं जलमविकलं यथास्यात्तथा चुम्बन्त आचामन्तः। भूर्जानां काण्डेषु एकचण्डाः प्रचण्डाः। कस्तूरिकोत्पादकैरेणैर्मृगैः सह प्रणयेन संसर्गेण सुरभयः सुगन्धयः। वाह्लवीनाम् वह्लवदेशोद्भवावलानां वल्लभाः अतिप्रियाः। कौलूतीनां कुलूतदेशोत्पन्नरमणीनां केलिकाराः क्रीडासम्पादकाः। एते अनुभूयमानाः उदीच्या वायवो हि परिचयितो ज्ञापितः हिमो हेमन्तः यस्मिन्कर्मणि तद्यथा तथा वान्ति संचरन्ति।

शिशिरेऽपि हेमन्तवदुदीच्यः पाश्चात्यो वा । वसन्ते दक्षिणः । तदुक्तम्—"धुन्वंल्लङ्कावनालीर्मुहुरलकलता लासयन्केरलीना-
मन्ध्रीधम्मिल्लबन्धान्सपदि शिथिलयन्वेल्लयन्नागवल्लीः ।
उद्दामं दाक्षिणात्यो मलितमलयजः सारथिर्मीनकेतोः
प्राप्तः सीमन्तिनीनां मधुसमयसुहृन्मानचौरः समीरः ॥"

"अनियतदिक्को वायुर्ग्रीष्मे" इत्येके । "नैर्ऋतः" इत्यपरे । "उभयमपि" इति यायावरीयः । तत्र प्रथमः—

"वात्याचक्रकचुम्बिताम्बरभुवः स्थूला रजोदण्डकाः
संग्रथ्नन्ति भविष्यदभ्रपटलस्थूणावितर्कं नभः ।

---

हेमन्ते यथा उदीच्यः पश्चात्यश्च वायुर्वाति तथैव शिशिरर्त्तावपि उदीच्यः पाश्चात्यः । अयं भावः शिशिरहेमन्तौ एक एव ऋतुः न पृथक् पृथक् द्वौ ऋतू । यतो हेमन्तगतचिन्हानां शिशिरे समुपलम्भात् । शिशिरगतानां तत्रोपलम्भात् । केवलं सौकर्यार्थं तयोः पार्थक्यमनुमतं कविभिः । वक्ष्यति च ग्रन्थकृत्स्वयमेव हेमन्तशिशिरयोरैक्ये सर्वलिङ्गानुवृत्तिरेव ( हेतुः ) उक्तं च । द्वादशमासाः संवत्सरः, पञ्चर्त्तवो हेमन्तशिशिरयोः समासेन ; अतः हेमन्तवत् शिशिरेऽपि वायोः साधर्म्यमिति ।

वसन्तर्त्तौ दक्षिणः मलयानिलः वाति । तदुक्तमित्युदाह्रियते-*धुन्वन्निति* । लङ्कायाः वनालीः वृक्षावलीः धुन्वँन् केरलीनां दक्षिणप्रान्तान्तर्गतकेरलकामिनीनाम् । अलकलताः चूर्णकुन्तलवल्लीः मुहुर्लासयन् प्रेरयन् । अन्ध्रीणां धम्मिल्लबन्धा केशपाशरचनानि शिथिलयन् श्लथीकुर्वन् । नागवल्लीः ताम्बूलीः । ताम्बूलवल्ली ताम्बूली नागवल्ल्यपि इति कोशः । वेल्लयन् कम्पयन् । मलितो मर्दितः मलयजो हरिचन्दनं येन सः । मीनकेतोः कामस्य सारथिः त्रिभुवनविजयार्थमुद्यतस्य तस्य सूतः । मधुसमयस्य वसन्तस्य सुहृत् मित्रम् । सीमन्तिनीनां कृतश्रृङ्गाराणां मानिनीनायिकानां मानचौरः गर्वापहारकः समीरः उद्दामं यथास्यात्तथा प्राप्तः अनुभूतः ।

ग्रीष्मे वायोः संचरणस्य दिङ्नियमराहित्यमेक आचार्याः वदन्ति । अपरे वदन्ति यदुत नैर्ऋतो वायुर्वहति । राजशेखरः कथयति उभयमपि कथनं साधु । तत्र उभयोर्मध्ये प्रथमोऽनियतदिक्को यथा—

*वात्या चक्रकेति* । वात्याचक्रकैः चक्राकारेण उत्थिताभिर्वात्याभिः चुम्बिताः स्पृष्टा अम्बरभूराकाशभूमिर्यैस्ते । स्थूलाः विपुलाः रजोदण्डकाः वात्यया दण्डाकारेण परिणतानि रजांसि । नभः आकाशम्, ( नभोऽन्तरिक्षं गगनमनन्तं सुरवर्त्म खमित्यादिकोशः ) भविष्यतः उत्पस्यमानस्य अभ्रपटलस्य मेघव्रातस्य स्थूणायाः स्तम्भस्य वितर्कः सन्देहो यस्मिंस्तत्ताद्दशं संग्रथ्नन्ति संगुम्फन्ति ।

किं चान्यन्मृगतृष्णिकाम्बुविसरैः पात्राणि वीतार्णसां
सिन्धूनामिह सूत्रयन्ति दिवसेष्वागामिनीं सम्पदम् ॥"

द्वितीयः—

"सोऽयं करैस्तपति वह्निमयैरिवार्कः साङ्गारविस्तरभरेव धरा समग्रा।
वायुः कुकूलमिव वर्षति नैर्ऋतश्च कार्शानवैरिव शरैर्मदनश्च हन्ति ॥"

किञ्च—

"गर्भान्बलाकासु निवेशयन्तो वंशाङ्कुरान्स्वैर्निनदैः सृजन्तः।
रजोऽम्बुदाः प्रावृषि मुद्रयन्तो यात्रोद्यमं भूमिभृतां हरन्ति ॥
स सल्लकीसालशिलीन्ध्रयूथीप्रसूनदः पुष्पितलाङ्गलीकः।
दग्धोर्वरासुन्दरगन्धबन्धुरर्घत्ययं वारिमुचामनेहा ॥

---

किंच इह वीतमर्णः तोयम्। अर्णोम्भस्तोयपानीयमित्यमरः यासां तासां सिन्धूनामपगतजलानां नदीनां पात्राणि स्थलानि गर्तानीति यावत्। मृगतृष्णाम्बूनां विसरैः प्रसरैः प्रसारैः दिवसेषु आगामिनीं भविष्यन्तीं सम्पदं लक्ष्मीं सूत्रयन्ति तन्वन्ति। सूचयन्तीति भावलेशः।

द्वितीयो नैर्ऋतो वायुर्यथा-*सोयमिति*। सोयमर्कः सूर्यः वह्निमयैरिव अग्निस्वरूपैरिव करैः किरणैः तपति। समग्रा सम्पूर्णा धरा पृथिवी सांगारैर्विस्तरैः प्रच्छदैः अथवा विस्तारैः। यद्यपि अत्र विस्तार इत्येव पाठो भवितुं न्यायः यतः 'सव (विस्तारः) शब्दस्य विस्तर इति कोशप्रामाण्यात् शब्दविस्तारे विस्तरप्रयोगोऽन्यत्र विस्तारः तथापि छन्दोभंगभीत्या गतानुगतिकतया द्विरूपकोशप्रामाण्याद्वा एतादृशः प्रयोगः। नैर्ऋतविदिग्भवो वायुः कुकूलं तुषानलमिव। कुकूलं शंकुभिः कीर्णे श्वभ्रे ना तु तुषानले इत्यमरः। वर्षति तुषानलस्येव वृष्टिं करोति। मदनश्च कामश्च कार्शानवैरिव अग्निनिर्मितैरिव शरैर्बाणैर्हन्ति ताडयति। इत्थं प्रचण्डो ग्रीष्मर्तुः समुज्जृम्भमाणो द्योतते। ग्रीष्मर्त्तोरतितैक्ष्ण्यात्तत्र वह्निमयत्वादि उत्प्रेक्ष्यते इत्युत्प्रेक्षालंकारः। किंचेत्युत्तरं क्रमशः सर्वर्त्तून् वर्णयितुमुपक्रमते।

*गर्भानिति* प्रावृषि वर्षर्त्तौ अम्बुदाः मेघाः वलाकासु वकपंक्तिषु गर्भान् निवेशयन्तः कारणात्मना स्थितान् जीवान् कुक्षौ प्रवेशयन्तः। गर्भं बलाका दधतेऽभ्रयोगात् नाके निबद्धावलयः समन्तादित्युक्तेः। वर्षासु अभ्रसंयोगाद्बलाका गर्भं धारयन्ति। स्वैः मेघीयैर्निनदैः शब्दैः वंशाङ्कुरान् सृजन्तः उत्पादयन्तः। रजो धूलीम् मुद्रयन्तः आच्छादयन्तः। जलाप्लावनेन गन्तुमयोग्यां कुर्वन्त इति भावः। अत एव भूभृतां राज्ञां यात्राविषयकोद्यमं विदिग्विजयोपक्रमं हरन्ति निवारयन्ति।

*स सल्लकीति*। सल्लकी गजभक्ष्या।

वनानि नीलीदलमेचकानि धाराम्बुधौता गिरयः स्फुरन्ति ।
पूराम्भसा भिन्नतटास्तटिन्यः सान्द्रेन्द्रगोपानि च शाद्वलानि ॥
चकोरहर्षी यतिचारचौरो वियोगिनीवीक्षितनाथवर्त्मा ।

( सिल्लकीत्यपि )

शल्लकी गजभक्ष्या तु सुवहा सुरभी रसा ।
महेरणा कुन्दुरुकी सल्लकी ह्लादिनीतिचेत्यमरः ॥
सालः सर्जः । सालो वरणसर्जयोः । इति रभसः ।
तालव्यो नृपझषयोः शालो वृक्षे वृतौ द्रुभेदे च ।
तालव्यदन्त्य उक्तस्तथा स्त्रियां वृक्षशाखायम् । इत्यूष्मविवेकः ।
शिलीन्ध्रः कन्दलिका । यूथी मागधी ।

अथ गमाधी । गणिका यूथिकाम्बष्ठा इत्यमरः । एषामितरेतरयोगद्वन्द्वः । तासां प्रसूनं कुसुमं ददात्युत्पादयतीति तथा । पुष्पिता विकसिता लाङ्गली तोयपिप्पली ।

लाङ्गली तोयपिप्पल्यां क्लीवं तु कुसुमान्तरे ।
गोदारणे तृणराजो गृहदारुविशेषयोरिति मेदिनी ।

( लाङ्गली नालिकेरो वा नालिकेरस्तु लाङ्गली इत्यमरः ) यस्मिन् शेषाद्विभाषेति कप् । दग्धा प्रज्वालिता या उर्वरा सर्वसस्याढया भूमिः ।

कृष्यां दहन्नपि खलु क्षितिमिन्नेद्धो ।
बीजप्ररोहजननीं दहनः करोतीत्युक्ते
दग्धयां भूमौ जनकत्वशक्तिर्वर्द्धते ॥

तस्याः सुन्दरगन्धेन मनोमोहकसुरभिणा वन्धुरुन्नतोऽयं वारिमुचां जलदानामनेहा अर्घति अञ्चति ।

*वनानीति* । वनानि अरण्यानि नील्या मधुपर्णिकायाः ।

नीली काला क्लीतकिका ग्रामीणा मधुपर्णिका ।
रञ्जनी श्रीफली तुत्था दोला च नीलिनीत्यमरः ।

दलवत् पलाशवत् । पत्रं पलाशं छदनं दलं पर्णं छदः पुमानित्यमरः । मेचकानि श्यामलानि । मेचकः श्यामले कृष्णे तिमिरे बर्हिचन्द्रक इति हैमः । जातानि । गिरयः पर्वताः धाराम्बुभिः संपातवृष्टिजलैः धौताः शुद्धाः सन्तः स्फुरन्ति स्फीता भवन्ति । तटिन्यो नद्यः पूरस्य ओघस्य अम्भसा जलेन भिन्नं तटं येषां ते भिन्नतटा जाताः। शाद्वलानि शादहरितानि स्थलानि । शाद्वलः शादहरिते इत्यमरः । सान्द्राः सघना इन्द्रगोपाः खद्योता येषु तानि । जातानि ।

*चकोरहर्षीति* । चकोरान् हर्षयतीति चकोरहर्षी वर्षासु चकोरा माद्यन्त इति तत्वविदः । यतीनां सन्न्यासिनां चारं गमनं चोरयति अवरोधयतीति तथा । संन्या-

गृहान्प्रति प्रस्थितपान्थसार्थः कालोऽयमाध्मातनभाः पयोदैः ॥
या केलियात्रा करिकामिनीभिर्याऽतुङ्गहर्म्याग्रविलासशय्या ।
चतुःसमं (मो यो) यन्मृगनाभिगर्भं (र्भः) सा वारिदर्त्तोः प्रथमातिथेयी ॥
चलच्चटुलचातकः कृतकुरङ्गरागोदयः
सदर्दुररवोद्यमो मदभरप्रगल्भोरगः ।

---

सिनां वर्षासु मासचतुष्टयं यावत् एकत्रैवावस्थानं भवति देशाद्देशान्तरगमनं शास्त्रेण निषिध्यते इति यतिधर्मनिर्णयाशयः । वियोगिनीभिः विरहाकुलाभिः वीक्षितं नाथवर्त्म प्रेयोमार्गो यत्र सः । गृहान् प्रस्थितः पान्थसार्थः पथिकसमूहो यत्र स । पयोदैः जलदैराध्मातं नभो यस्मिन् स एवं भूतोऽयं कालः वर्षासमयः प्राप्तः ।

*या केलियात्रेति* । वर्षर्त्तौ करिकामिनीभिः करेणुभिः या केलिकरणाय यात्रा क्रीडार्थं प्रस्थानं क्रियते । या च अतुङ्गहर्म्याग्रविलासशय्या, तुङ्गानां उन्नतानां हर्म्याणां प्रासादानामग्रेषु उपरि विलासार्थं शय्याऽभावः सतीषु च वर्षासु तासां (शय्यानां) क्लिन्नत्वं तेन विकृतत्वं संभाव्यतेऽतः तस्मिन् समये जनैः सर्वं वस्तु अनाच्छादितदेशादपह्रियते साच्छादिते च स्थाप्यते । याऽतुङ्गेत्यत्र नञर्थः अकारः प्रश्लिष्टः तस्य च तुङ्गहर्म्याग्रविलासशय्यायामन्वयः ।

तथा च—यश्च चतुःसमः चतुर्षु दिक्षु समः साधुः समीचीन इति यावत् । सर्वसाधुसमानेषु समं स्याद्वाच्यलिङ्गवत् इति विश्वः । मृगनाभेः मृगमदस्य कस्तूरिकाया इत्यर्थः । मृगनाभिर्मृगमदः कस्तूरिकापीति कोषः । गर्भः संधिः श्लेषः इत्यर्थः गर्भो भ्रूणेऽर्भके कुक्षौ संधौ पनसकण्टके इति विश्वमेदिन्यौ । संधिः श्लेषे इत्यमरः । सा सर्वा वारिदानां जलदानां प्रादुर्भावकस्य ऋतोः प्रथमा आतिथेयी आद्यं स्वागतमितितत्त्वम् । दृश्यते च लोकेऽपि महाजनसमागमने तमानेतुं लोकानां प्रत्युद्गतिसदाचारः तद्विषयकान्तरहर्षदर्शनार्थं गृहमार्गादिपरिष्कारः सौरभसंभारप्रचारश्चेति ।

अत्र मृगनाभिगर्भमिति पुंस्त्वविरहितः क्लीवः पाठः असङ्गतः प्रतिभाति । यतो हि गर्भशब्दगतपुंस्त्वस्य कोशकारैराम्नातत्त्वात्तथात्वमुचितम् । यदि तस्य क्लीवत्वं स्यात्तदा समासान्तःपातित्वेनैव स्यात् एवं च तत्र समासेषु अव्ययीभावकर्मधारयद्वन्द्वानामसंभवः । बहुव्रीहिरप्यन्यपदार्थ आम्नातस्ततः तदभावान्न प्राप्नोति । अवशिष्टः षष्ठीतत्पुरुषः तत्र च पुंस्त्वमेव स्यात् । एवं च तद्विशेषणयोः यच्छब्दचतुः समे चापि पुंस्त्वं न्याय्यम् । यल्लिङ्गं यद्वचनं या च विभक्तिर्विशेष्यस्य तल्लिङ्गं तद्वचनं सा च विभक्तिर्विशेषणस्यापीत्यभियुक्तोक्तेः । अतः परं विद्वांसः प्रमाणम् ।

*चलदिति* । चलन्तः इतस्ततः परिभ्रमन्तश्चटुलाः चातकायस्मिन्नसौ । कृतः जनितः कुरङ्गेषु मृगेषु रागस्य प्रेम्णः उदयो येनासौ । दर्दुराणां स्वविषयकोद्यमेन

शिखण्डिकुलताण्डवामुदितमद्गुकङ्काह्वयो
वियोगिषु घनागमः स्मरविषं विषं मुञ्चति ॥
दलत्कुटजकुड्मलः स्फुटितनीपपुष्पोत्करो
धवप्रसवबान्धवः प्रचितमञ्जरीकार्जुनः ।
कदम्बकलुषाम्बरः कलितकेतकीकोरक-
श्चलन्निचुलसञ्चयो हरति हन्त घर्मात्ययः ॥ वर्षाः ॥
द्रागगर्जयन्ती विमदान्मयूरान्प्रगल्भयन्ती कुररद्विरेफान् ।
शरत्समभ्येति विकाश्य पद्मानुन्मीलयन्ती कुमुदोत्पलानि ॥
सा भाति पुष्पाणि निवेशयन्ती बन्धूकबाणासनकुङ्कुमेषु ।

सहितः । मदभरेण प्रगल्भाः उद्दण्डा उरगाः सर्पा यत्र स । शिखण्डिनां मयूराणां कुलस्य ताण्डवेन नर्त्तनेन मुदिताः प्रसन्ना मद्गवः पक्षिणः । मद्गुः पानीयकाकिका इति रभसः । कङ्काह्वया कङ्काभिधानाः पक्षिणः । लोहपृष्ठस्तु कङ्कः स्यादित्यमरः । घनागमः घनानां मेघानामागमः समुदयो यस्मिन्नसौ मेघागमो वर्षर्त्तुः वियोगिषु विरहिषु स्मर एव विषमुन्मादजनकत्वाद्विषतुल्यं विषं जलम् । विषं तु गरले तोये इति विश्वः । मुञ्चति वर्षति ।

*दलदिति* । दलन्तो विकसन्तः कुटजानां गिरिमल्लिकानाम् । कुटजो गिरिमल्लिका इत्यमरः । कुड्मलाः कलिका यत्रासौ । स्फुटिताः प्रफुल्लाः नीपानां पुष्पोत्कराः कुसुमसमूहा यत्रासौ । धवस्य प्रसवानां पुष्पाणां बान्धवः बन्धुसदृशसहकारी । प्रचिताः समृद्धाः मञ्जर्यो यत्र एवंभूतोऽर्जुनो यत्रासौ । कदम्बैः कदम्बधूलिभिः कलुषं कालुष्यं प्राप्तमम्बरं यत्रासौ । कलिताः संजाताः केतकीषु कोरकाः कुड्मला येन । चलन् चञ्चन् निचुलानां वेतसानां सञ्चयः समुदायो यस्मिन्नसौ । घर्मात्ययः घर्मस्य अत्ययो नाशो यस्मिन्नसौ वर्षर्तुः मनो हरति । हन्तेति हर्षे । इति वर्षाः । इति वर्षर्त्तोः संक्षेपेण वर्णनम् ।

*द्रागगर्जयन्तीति* । विमदान् मदरहितान् मयूरान् द्राग् अह्नाय ससंभ्रमेणेत्यर्थः । गर्जयन्ती गर्जनां कारयन्ती । कुरराश्च ते द्विरेफाश्चेति कुररद्विरेफास्तान् । प्रगल्भयन्ती प्रगल्भान् कुर्वती । पद्मान् कमलानि । वा पुंसि पद्ममित्यतः पुंस्त्वम् । विकाश्य प्रफुल्लान् कृत्वा कुमुदानि उत्पलानि च उन्मीलयन्ती विकासयन्ती शरद् समभ्येति आगच्छति ।

*सा भातीति* । सा शरद् तेषु तासु च पुष्पाणि निवेशयन्ती उत्पादयन्ती भाति शोभते । बन्धूकः बन्धुजीवकः दोपहरिया इति ख्यातः । बाणा नीला झिण्टी । नीला झिण्टी द्वयोर्बाणा दासी चार्त्तगलश्च सा इत्यमरः । असनः सर्जकः । विजयसार इति

शेफालिकासप्तपलाशकाशभाण्डीरसौगन्धिकमालतीषु ॥
सखञ्जरीटा सपयःप्रसादा सा कस्य नो मानसमाच्छिनत्ति ।
कादम्बकारण्डवचक्रवाकससारसक्रौञ्चकुलानुयाता ॥
उपानयन्ती कलहंसयूथमगस्त्यदृष्ट्या पुनती पयांसि ।
मुक्तासु शुभ्रं दधती च गर्भं शरद्विचित्रैश्चरितैश्चकास्ति ॥
क्षितिं खनन्तो वृषभाः खुराग्रै रोधो विषाणैर्द्विरदा रदन्तः ।
शृङ्गं त्यजन्तो रुरवश्च जीर्णं कुर्वन्ति लोकानवलोकनोत्कान् ॥

---

ख्यातः । सर्जकासनबन्धूकपुष्पप्रियकजीवकाः इत्यमरः । कुङ्कुमम् केसर इति ख्यातम् । एषां प्राचामितरेतरयोगद्वन्द्वः । शेफालिका कृष्णपुष्पा निर्गुण्डी न्यवारी इति प्रसिद्धा । शेफालिका तु सुवहा निर्गुण्डी नीलिका च सेत्यमरः । सप्तपलाशः सप्तपर्णः । काशः तृणविशेषः । भाण्डीरः मँजीठ इति प्रसिद्धः । भाण्डीरः भण्डिरी भाण्डीरी भण्डी भण्डीरिका इति पञ्चविधोल्लेखः कोषेषु लभते । मण्डूकपर्णी भण्डीरो भण्डी योजनवल्ल्यपि इत्यमरे, हैमपुष्पो च भण्डोरी इति रभसे, रक्ता भण्डीरिका च सेति इन्दौ । भाण्डीर इति वाजये । सौगन्धिकम् कह्लारः पद्मविशेषः । सौगन्धिकं तु कह्लार इत्यमरः । मालती लता । एषां सर्वेषामितरेतरयोगद्वन्द्वः ।

*सखञ्जरीटेति* । खञ्जरीटैः सहिता । खञ्जरीटस्तु खञ्जन इत्यमरः । पयसो जलस्य प्रसादेन स्वच्छतया सहिताः । शरदि जलं स्वच्छतां गच्छति । कादम्बादिपक्षिगणैरनुयाता शरदि कादम्बादीनां समुल्लासो भवति । सा शरद् कस्य पुंसो मानसं चित्तं नो आच्छिनत्ति भिनत्ति अपि तु भिनत्त्येव । पक्षे च खञ्जननयना लावण्ययुता क्रीडार्थमनुपालितकादम्बादिकुलानुसृता नायिका कस्येति समानं पूर्वेण । कादम्बः कलहंसः । कारण्डवः पक्षिविशेषः । चक्रवाकः प्रसिद्धः सारसः प्रसिद्धः यस्यापरं नाम पुष्कराह्व इति । क्रौञ्चः प्रसिद्धः । एषां पूर्वं द्वन्द्वः पश्चात् कुलेन षष्ठीतत्पुरुषः । पुनस्तेन अनुयातेति कादम्बकारण्डवचक्रवाकससारसक्रौञ्च कुलानुयाता ।

*उपानयन्तीति* । कलहंसानां कादम्बानां यूथं समूहम् उपानयन्ती प्रापयन्ती । वर्षर्त्तुषु मानससरसि गताः हंसाः शरदृतौ पुनरिह प्रत्यावर्त्तन्ते इत्यैतिह्याः । अगस्त्यदृष्ट्या अगस्त्यदर्शनेन पयांसि पुनती प्रसादयन्ती । अगस्त्योदये जलं प्रसन्नतां गच्छति इति तात्त्विकाः । मुक्तासु मौक्तिकसम्पादकशुक्तिषु शुभ्रं गर्भं दधती धारयन्ती शरद् विचित्रैश्चरितैः विविधाभिर्गतिभिश्चकास्ति शोभते ।

*क्षितिं खनन्त इति* । खुराणामग्रिमभागैः क्षितिं पृथिवीं खनन्तो दारयन्तो वृषभा महोक्षाणः । विषाणैः इभदन्तैः । विषाणं स्यात्पशुश्रृंगेभदन्तयोरित्यमरः । रोधस्तटं रदन्त उत्खातयन्तो द्विरदा गजाः, जीर्णं चीर्णं शृङ्गं त्यजन्तो रुरवश्च, कृष्णसाररुरुन्य-

अत्रावदातद्युति चन्द्रिकाम्बुनीलावभासं च नभः समन्तात् ।
सुरेभवीथो दिविसावतारा जीर्णाभ्रखण्डानि च पाण्डुराणि ॥
महानवम्यां निखिलास्त्रपूजा नीराजना वाजिभटद्विपानाम् ।
दीपालिकायां विविधा विलासा यात्रोन्मुखैरत्र नृपैर्विधेयाः ॥
व्योम्नि तारतरतारकोत्करः स्यन्दनप्रचरणक्षमा मही ।
भास्करः शरदि दीप्रदीधितिर्बुध्यते च सह माधवः सुरैः ॥
केदार एव कलमाः परिणामनम्राः प्राचीनमामलकमर्घति पाकनीलम् ।
एर्वारुकं स्फुटननिर्गतगर्भगन्धमम्लीभवन्ति च जरत्त्रपुसीफलानि ॥

---

रुरुङ्कुशंवररौहिषा इत्यादिद्वादशमृगभेदेषु अन्यतमोः मृगः । लोकान् जनान् । लोकस्तु भुवने जने इत्यमरः । अवलोकने दर्शने उत्कान् उत्कण्ठितान् कुर्वन्ति ।

*अत्रावदातेति* । अत्र शरदि । चन्द्रिका च अम्बु चेत्यनयोः समाहारः । चन्द्रिकाम्बु, अवदाता शुद्धा द्युतिः कान्तिः ययोस्तत् निर्मलकान्ति नभश्च आकाशश्च समन्तात् परितः नीलं यथास्यात्तथा अवभासते तन्नीलावभासम् । सुरेभाणां देवगजानां वीथी पङ्क्तिः । वीथ्यालिरावली पङ्क्तिः श्रेणीत्यमरः । दिवि गगने सावतारा मेघविद्युदादिनिरुपद्रुते गगने संचरणशीला । अत्र "दिवसावतारो" इति पाठोऽसङ्गतस्तत एवाशुद्धश्च । दिवि सावतारा इति निर्मलः पाठोऽनुसन्धेयः । जीर्णानामभ्राणां खण्डानि पाण्डुराणि धवलानि वर्त्तन्ते ।

*महानवम्यामिति* । अत्र शरदि । यात्रोन्मुखैः दिग्विजयोद्यतैः नृपैः महानवम्यां विजयादशमीतः प्राग्भवदिवसे निखिलानामस्त्राणां पूजा, वाजिनामश्वानां भटानां योद्धॄणां द्विपानां गजानां नीराजना मङ्गलार्थमारात्तिक्यम् । ततो दीपमालिकायां दिग्विजयार्थप्रस्थानानन्तरं प्रासायाममायां विविधा अनेकप्रकारा विलासा क्रीडनकानि विधेयाः कर्त्तव्याः ।

*व्योम्नीति* । अत्र शरदृतौ व्योम्नि आकाशे तारतरः अतिशयनिर्मलः तारकाणामुत्करः समूहो जातः । मही भूमिः स्यन्दनानां प्रचरणस्य क्षमा सहा अभवत् । भास्करः सूर्यः दीप्रा तेजस्विन्यो दीधितयो यस्यासौ बभूव । सुरैः देवैः सह माधवश्च बुध्यते जागर्त्ति ।

*केदार एवेति* । कलमाः धान्यविशेषाः केदार एव क्षेत्र एव परिपाकेन नम्रा नम्रत्वं गताः ।

पाकेन पक्वया नीलं नीलवर्णं प्राचीनं पुरातनमामलकम् अर्घति मूल्यवद्भवति । एर्वारुकम् कर्कटी । ईरणम् ईः संपदादित्वात्क्विप् । ईरं वृणोतीति ईर्वारुः । बाहुलकादुण् । एवं च ईर्वारुरिति पदं कर्कटीवाचकं वर्त्तते । उक्तं च तुयस्वरादिरीर्वारुः

गेहाजिरेषु नवशालिकणावपातगन्धानुभावसुभगेषु कृषीवलानाम् ।
आनन्दयन्ति मुसलोल्लसनावधूतपाणिस्खलद्वलयपद्धतयो वधूट्यः ॥
तीक्ष्णं रविस्तपति नीच इवाचिराढ्यः शृङ्गं रुरुस्त्यजति मित्रमिवाकृतज्ञः ।
तोयं प्रसीदति मुनेरिव धर्मचिन्ता कामी दरिद्र इव शोषमुपैति पङ्कम् ॥
नद्यो वहन्ति कुटिलक्रमयुक्तशुक्तिरेखाङ्कबालपुलिनोदरसुप्तकूर्माः ।
अस्यां तरङ्गितनुतोयपलायमानमीनानुसारिबकदत्तकरालफालाः ॥
अपङ्किलतटावटः शफरफाण्टफालोज्ज्वलः
पतत्कुररकातरभ्रमदद्भ्रमीनार्भकः ।

---

कर्कट्यां पठ्यते बुधैरिति । आङि उपसृष्टे तु एर्वारुरिति पदं निष्पन्नम् । उर्वारुक-मिव बन्धनादिति श्रुतेरुर्वारुरिति पदमपि पृषोदरादित्वात्साधु । ततः सर्वस्मादपि स्वार्थे कन् । ततः ईर्वारुकम्, एर्वारुकम्, उर्वारुकमिति त्राण्यपि सिद्धानि । स्फुट-नेन अतिविकसनेन निर्गतो गर्भगन्धो मध्यस्थसुरभिर्यस्मात्तद् वर्त्तते । जरत्याम्र-पुत्र्याः फलानि अम्लीभवन्ति अम्लतां गच्छन्ति ।

*गेहाजिरेष्विति* । कृषीवलानां कर्षकाणां नवशालीनां नूतनशालीनां कणानाम-वपातजन्यगन्धस्यानुभावेन सुभगेषु सुन्दरेषु गेहाजिरेषु गृहप्राङ्गणेषु । मुसलानामु-ल्लसनेन उत्तोलनेन अवधूताभ्यां कम्पिताभ्यां पाणिभ्यां स्खलन्त्यो वलयपद्धतयः कङ्कणपंक्तयः । पद्धतिः पथि पंक्तौ चेति हैमः । यासां ता वधूट्यः स्वपतीनानन्दयन्ति प्रोन्मादयन्ति ।

*तीक्ष्णं रविरिति* । अत्र शरदृतौ रविः सूर्यः अचिराढ्यो नवसमृद्धो नीच इव तीक्ष्णं यथास्यात्तथा तपति । शरदि रवितेजसोऽतीवतापकरत्वादेव "न सेव्यः शारदो रौद्र" इति निषिध्यते वैद्यैः । रुरुमृगैः अकृतज्ञः कृतघ्नः मित्रमिव शृङ्गं स्वविषाणं त्यजति । मुनेः ऋषेः धर्मचिन्ता इव तोयं जलं प्रसीदति । यथा मुनेः धर्मचिन्तनमुत्त-रोत्तरं स्वच्छत्वमेति तथैव शरदि जलमपि स्वच्छं भवति । दरिद्रः निर्धनः कामी इव कामुको यथा पङ्कं शोषमुपैति शुष्कं भवति ।

*नद्य इति* । अस्यां शरदि नद्यो वहन्ति । कीदृश्यस्ताः, कुटिलक्रमेण युक्ताः या शुक्तयस्तासां रेखाणामङ्का एषु एवं भूता ये पुलिनोदरास्तेषु सुप्ताः कूर्मा यत्र ताः। तरङ्गिषु तनुषु तोयेषु पलायमानाः धावमाना ये मीना मत्स्याः । तेषामनुसारिभिः ताननु गच्छद्भिर्वकैः दत्तः करालस्तीक्ष्णः फाल आस्फालनं यत्र ताः ।

*अपङ्किलेति* । अपङ्किलः कर्दमरहितः तटस्य अवटो गर्त्तो यत्रासौ । शफराणां मीना-नां फाण्टफालेन अनायासकृतोद्धलनेन उज्वलः । पतद्भिः कुररैः कातरा भीता अत एव भ्रमन्तोऽदभ्रा बहुला मीनार्भकाः मत्स्यबाला यत्रासौ । लुठन्तः कमठा यत्र एवंभूतं

लुठत्कमठसैकतश्चलबकोटवाचाटितः
सरित्सलिलसंचयः शरदि मेदुरः सीदति ॥"

"द्वित्रिमुचुकुन्दकलिकस्त्रिचतुरमुकुलः क्रमेण लवलीषु ।
पञ्चषफलिनीकुसुमो जयति हिमर्त्तुर्नवावतरः ॥
पुन्नागरोध्रप्रसवावतंसा वामभ्रुवः कञ्चुककुञ्चिताङ्ग्यः ।
वक्रोल्लसत्कुङ्कुमसिक्थकाङ्काः सुगन्धतैलाः कवरीर्वहन्ति ॥
यथा यथा पुष्यति शीतकालस्तुषारचूर्णोत्करकीर्णवातः ।
तथा तथा यौवनशालिनीनां कवोष्णतामत्र कुचा लभन्ते ॥
वराहवर्ध्राणि नवौदनानि दधीनि सन्नद्धशराणि चात्र ।
सुकोमलाः सर्षपकन्दलीश्च भुक्त्वा जनो निन्दति वैद्यविद्याम् ॥
अत्रोपचारः सलिलैः कवोष्णैर्यत्किञ्चिदत्र स्वदतेऽन्नपानम् ।

---

सैकतं यत्रासौ । चलैः चञ्चलैः वकोटैः वकैः वाचाटितः वाचालितः । मेदुरः पीनः सरितां सलिलसञ्चयः जलौघः शरदि ऋतौ सीदति ह्रसिमानं प्राप्नोति ।

*द्वित्रिमुचकुन्देति* । द्वे वा तिस्रो वा द्वित्रा मुचुकुन्देषु कलिकाः कोरकाः यत्रासौ- लवलीषु क्रमेण त्रयो वा चत्वारो वा त्रिचतुरा मुकुलाः कुड्मलाः । कुड्मलो मुकुलोऽस्त्रियामित्यमरः । यत्रासौ । पञ्चषाः फलिनीषु प्रियङ्गुषु । प्रियङ्गुः फलिनी फलीत्यमरः । कुसुमा पुष्पाणि यत्रासौ । नवो नूतनोऽवतरो यस्यासौ हिमर्त्तुः हेमन्तः जयति कुसुमसमृद्धया सर्वोत्कर्षेण वर्त्तते ।

*पुन्नागेति* । पुन्नागरोध्रयोः प्रसवनिर्मितोऽवतंसः कर्णभूषणमासां ताः । कञ्चुकैः कुंचितानि अङ्गानि यासां ता चोलकनतावयवा वामभ्रुवो बालाः । वक्रं यथास्यात्तथा उल्लसन्तः कुङ्कुममिश्रितसिक्थकानां मधूच्छिष्टानाम् । मधूच्छिष्टं तु सिक्थकमित्यमरः अङ्का यत्र ताः । सुगन्धीनि तैलानि यत्र ता कवरीः केशवेशान् वहन्ति धारयन्ति ।

*यथा यथेति* । अत्र शरदि तुषारस्य हिमस्य चूर्णोत्करं कीर्णन्ते ये ते वाता यस्यासौ शीतकालः हेमन्तः यथा यथा पुष्यति वृद्धिं गच्छति तथा तथा यौवनाशालिनीनां युवतीनां कुचाः कवोष्णातामीषदुष्णत्वं लभन्ते प्राप्नुवन्ति ।

*वराहवर्ध्राणीति *। अत्र शरदि वराहस्य शूकरस्य वर्ध्राणि चर्माणि । नवौदनानि नूतनसालीन् । सन्नद्धं विद्यमानं । शरम् दध्यग्रजलम् । शरस्तेजनके वाणे दध्यग्रे ना शरञ्जले इति विश्वमेदिन्यौ । येषु तानि दधीनि । सुकोमला पेशलाः सर्षपकन्दलीश्च भुक्त्वा जनः वैद्यविद्यामायुर्वेदं निन्दति तिरस्करोति ।

*अत्रेति* । अत्र हेमन्तर्त्तौ कवोष्णैरीषदुष्णैः सलिलैः जलैरुपचारः स्नानादिव्यव-

सुदुर्भगामत्र निपीड्य शेते स्वस्त्यस्तु नित्यं तुहिनर्त्तवेऽस्मै ॥
विमुक्तबर्हा विमदा मयूराः प्ररूढगोधूमयवा च सीमा ।
व्याघ्रीप्रसूतिः सलिलं सबाष्पं हेमन्तलिङ्गानि जयन्त्यमूनि ॥
सशमीधान्यपाकानि क्षेत्राण्यत्र जयन्ति च ।
त्रिशङ्कुतिलका रात्र्यः पच्यन्ते लवणानि च ॥
उद्यानानां मूकपुंस्कोकिलत्वं भृङ्गस्त्रीणां मौनमुद्रा मुखेषु ।
मन्दोद्योगा पत्रिणां व्योमयात्रा हेमन्ते स्यात्सर्पदर्पक्षयश्च ॥
कर्कन्धूनां नागरङ्गीफलानां पाकोद्रेकः खाण्डवोप्याविरस्ति ।

हारः । एवमत्र यत्किञ्चिदन्नपानं स्वदते स्वल्पमेव अन्नं स्वल्पं पानं स्वादु भवति पौष्टिकपदार्थानामाधिक्येन सेवनादन्नादेः स्वल्पत्वं स्वाभाविकम् । अत्र शीताधिक्यात् कुचानामुष्णत्वाच्च सुदुर्भगामपि किमुत सुभगां तान्त्ववश्यमेव निपीड्य शयनं भवति = निपीड्य गाढमालिङ्ग्य जनः शेते । अतोऽस्मै तुहिनर्त्तवे हेमन्तर्त्तवे नित्यं नमोऽस्तु ।

*विमुक्तेति* । अमूनि हेमन्तलिङ्गानि हेमन्तर्त्तुचिन्हानि जयन्ति । अत्र हेमन्ते मयूराः । विमुक्तानि बर्हाणि येषां ते विमुक्तबर्हाः, मुक्तपिच्छाः । अत एव विमदाः । सीमा ग्रामान्तश्च प्ररूढा प्रकर्षेण समुत्पन्ना गोधूमा यवाश्च यस्यां सा तथाभूता । व्याघ्रीणां प्रसूतिः । सलिलं च सवाष्पम् । शीतकाले प्रत्युषसि वाष्पाणां समुद्गमो दृश्यते ।

*सशमीति* । अत्र हेमन्ते शमीसहितानां धान्यानां पाको यत्र तानि क्षेत्राणि केदाराणि जयन्ति । त्रयः शङ्कवः पत्रशिराजालानि । शङ्कुः पत्रशिराजशाले संख्याकीलकशम्भुषु इति मेदिनी । तिलकास्तिलकभूता यासु ता रात्र्यो हरिद्राः । हरिद्राया निशाह्वत्वाद्यावन्तो रात्रिपर्यायास्तावन्तो हरिद्राया अपीति बोध्यम् । लवणानि च पच्यन्ते ।

*उद्यानानामिति* । हेमन्ते उद्यानानामारामाणाम् , मूकाः पुंस्कोकिला येषु तेषां भावस्तत्त्वम् । भृङ्गस्त्रीणां मुखेष्वपि मौनमुद्रा मूकत्वम् । पत्रिणां पक्षिणां व्योमयात्राः गगनसञ्चाराः, मन्दोद्योगा मन्दोत्साहाः । सर्पाणां दर्पस्य क्षयश्च शीताधिक्यात्सर्वैपि मन्दबलाः संजाता इति भावः ।

*कर्कन्धूनामिति* । कर्कन्धूनां बदरीणाम् । कर्कन्धूः बदरी कोलिरित्यमरः । नागरङ्गफलानाम् । नागः सिन्दूरः तस्येव रङ्गो यस्य यस्या वा । नागरङ्गः नागरङ्गीति । नारङ्गः नार्यङ्ग इत्यपि साधु । खाण्डवः पाकोद्रेकः खण्डविकारवन्मधुरः पाकोद्गमः । आविरस्ति । कृष्णेक्षणां पुण्ड्रकाणां च । एकः साधारणः इक्षुः । यं कृष्णेक्षुरिति च

कृष्णेक्षूणां पुण्ड्रकाणां च गर्भे माधुर्यश्रीर्जायते काप्यपूर्वा ॥
येषां मध्येमन्दिरं तल्पसम्पत् पार्श्वे दाराः स्फारतारुण्यताराः ।
लीलावह्निर्निह्नुतोद्दामधूमस्ते हेमन्तं ग्रीष्मशेषं विदन्ति ॥"
इति हेमन्तः । हेमन्तधर्मः शिशिरः, विशेषस्तु ।
"रात्रिर्विचित्रसुरतोचितयामदैर्घ्या चण्डो मरुद्वहति कुङ्कुमपङ्कसाध्यः ।
तल्पस्थितिर्द्विगुणतूलपटा किमन्यदर्घन्ति चात्र विततागुरुधूपधूमाः ॥
आश्लेषिणः पृथुरतक्लमपीतशीतमायामिनीं घनमुदो रजनीं युवानः ।
ऊर्वोर्मुहुर्वलनबन्धनसंधिलोलपादान्तसंवलिततूलपटाः स्वपन्ति ॥
पानेऽम्भसोः सुरसनीरसयोर्न भाति स्पर्शक्रियासु तुहिनानलयोर्न चात्र ।

व्यवहरन्ति कवयः । तद्भेदः पुण्ड्रेक्षुः तस्य च पुण्ड्रकः पौण्ड्रकः इति नामद्वयी । गर्भे मध्ये काप्यपूर्वा अनिर्वाच्या माधुर्यश्रीः जायते उत्पद्यते ।

*येषामिति* । येषां जनानां मध्येमन्दिरम् । मन्दिरस्य मध्ये पारे मध्ये षष्ठ्या वेति समासः । गृहे तल्पसम्पत् सर्वोपस्करसंयुतो मञ्चः । पार्श्वे सन्निधौ स्फारेण वर्द्धनशीलेन तारुण्येन यौवनेन तारा निर्मलाः आकर्षकाः । दाराः भार्याः । लीला एव वह्निः । निह्नुतोऽन्तर्हित उद्दामः । भावप्रधाननिर्देशस्तेन उद्दामत्वमुद्दण्डता एव धूमोऽस्ति ते हेमन्तमृतुं ग्रीष्मशेषं ग्रीष्मान्तं विदन्ति जानन्ति । सुखसाधनसर्वसामग्रीसद्भावादतिशिशिरेऽपि समये ग्रीष्मकालानुभवो भवतीति भावः ।

इति हेमन्तः हेमन्तर्त्तोः संक्षेपेण वर्णनम् ।

शिशिरोऽपि प्रायेण हेमन्तधर्मः ये धर्मा हेमन्ते निरुक्तास्ते सर्वेऽपि प्रायशः शिशिरे बोध्याः, विशेषस्तु इत्थम् ।

*रात्रिरिति* । अत्र शिशिरे रात्रिः = विचित्रेभ्यः सुरतेभ्यः उचितं यामस्य प्रहरस्य दैर्घ्यं वैपुल्यं यत्र सा । चण्डस्तीक्ष्णः अत एव कुङ्कुमपङ्कः साध्यः प्रसाध्यो वा शोध्यो वा यत्र भवति असौ मरुद्वायुः प्रवहति । तल्पस्थितिः द्विगुणं तूलं यत्र एवंभूतः पटो यत्र सा । अन्यत्किं वक्तव्यम् । वितताश्चामी अगुरूणां धूमा अपि अर्घन्ति बहुलीभवन्ति हृद्या भवन्तीति तत्वम् ।

*आश्लेषिण* इति । घनमुदो निर्भरानन्दा युवानः पृथुरतजन्येन क्लमेन श्रमेण पीतं शीतं यस्मिन् कर्मणि तद् यथा स्यात्तथा आश्लेषिणः सन्तः आयामिनीं दीर्घयामां रजनीमतिवाहयन्ति । तथा ऊर्वोः मुहुः वारं वारं वलनं संचलनं बन्धनं योजनं संधि श्लेषः । तेषु लोलाभ्यां पादान्ताभ्यां संवलिताः संहोकृताः तूलपटा ( सोडिया ) यैस्ते युवानः स्वपन्ति ।

*पान इति* । अत्र शिशिरे सुरसनीरसयो अम्भसोः जलयोः पाने पानकर्मणि-

नो दुर्भगासुभगयोः परिरम्भणे च नो सेवने च शशिभास्करयोर्विशेषः ॥
पुष्पक्रिया मरुबके जलकेलिनिन्दा कुन्दान्यशेषकुसुमेषु धुरि स्थितानि ।
सौभाग्यमेणतिलकाद्भजतेऽर्कबिम्बं काले तुषारिणि दहन्ति च चन्दनानि ॥
सिद्धार्थयष्टिषु यथोत्तरहीयमानसन्तानभिन्नघनसूचिपरम्परासु ।
द्वित्रावशेषकुसुमासु जनिक्रमेण पाकक्रमः कपिशिमानमुपादधाति ॥
उदीच्यचण्डानिलताडितासु सुलीनमीनासु जलस्य मूले ।
नालावशेषाब्जलतास्विदानीं विलासवापीषु न याति दृष्टिः ॥
माद्यन्मतङ्गः पृषतैकतोषी पुष्यद्वराहो धृतिमल्लुलायः ।
दरिद्रनिन्द्यः सधनैकवन्द्यः स एष कालः शिशिरः करालः ॥

---

विशेषो न भाति नोपलक्ष्यते । स्पर्शक्रियायु तुहिनानलयोः तुषारवह्नयोः विशेषो नो भाति । शिशिरेण सर्वस्यापि जडीकृतत्वात् । परिरम्भणे दुर्भगासुभगयोः विशेषो नोपलक्ष्यते कुचोष्मणः सामान्यात् । शशिभास्करयोः सूर्याचन्द्रमसोश्च सेवने नोपलक्ष्यते विशेषः । शिशिराधिक्यात् भास्करौष्ण्यं न प्रतिभाति । वयस्थाश्लेषजन्योष्मणा शशिशैत्यमकिञ्चित्करमिव विज्ञायते ।

*पुष्पक्रियेति* । तुषारिणि काले शिशिरर्त्तौ मरुवके मयनफलाख्यवृक्षे पुष्पविकसनक्रिया वर्त्तते । जलकेल्यान्निन्दा । कुन्दानि माध्यानि पुष्पाणि अशेषकुसुमेषु धुरि अग्रे स्थितानि । अर्कविम्वम्, एणो मृगस्तिलकोऽङ्कभूतो यस्याऽसौ एणतिलको मृगाङ्कः । तस्मात् तदपेक्षया सौभाग्यं सुभगत्वं भजते शैत्यापनोद कत्वात् । चन्दनानि अतिशीतलत्वाद्दहन्ति असह्यानि भवन्तीत्यर्थः ।

*सिद्धार्थेति *। तथोत्तरम् उत्तरोत्तरं क्रमश इत्यर्थः हीयमानः क्षीयमाणः यः सन्तानः सुरद्रुमः तेन भिन्ना दारिता घना सान्द्रा सूचिपरम्परा शिरासन्तति र्यासु तासु । द्वित्राण्येव अवशेषाणि कुसुमानि यासु तासु । सिद्धार्थयष्टिषु श्वेतसर्षपयष्टिषु पाकस्य क्रमः पक्तेरारम्भः जनिक्रमेण उत्पत्तिक्रमेण कपिशिमानं श्यावत्वमुपादधाति स्वीकरोति ।

*उदीच्येति* । उदीच्येन उदग्भवेन चण्डेन तीक्ष्णेन अनिलेन ताडितासु आहतासु । जले मूले तले सुलीना मीन यासु तासु । नालस्य अवशेषो यासु एवम्भूता अब्जलताः कमलिन्यो यासु तासु विलासवापीषु क्रीडादीर्घिकासु दृष्टिर्न याति तत्र दृष्टिर्नगच्छति ।

*माद्यदिति* । स एष अनुभूयमानः करालः कठोरः शिशिरः काल ऋतुः समायाति । यत्र मतङ्गा गजा माद्यन्तो वर्त्तन्ते । पृषता मृगाः । पृषतस्तु मृगे विन्दौ इति हेमः । तोषिणो दृश्यन्ते । वराहाः शूकराः पुष्टा अवलोक्यन्ते । लुलाया महिषाः धृतिमन्तः

अभिनववधूरोषस्वादुः करीषतनूनपा-
दसरलजनाश्लेषक्रूरस्तुषारसमीरणः।
गलितविभवस्याज्ञेवाद्य द्युतिर्मसृणा रवे-
र्विरहिवनितावक्त्रौपम्यं बिभर्त्ति निशाकरः॥
स्त्रियः प्रकृतिपित्तलाः क्वथितकुङ्कुमालेपनै-
र्नितम्बफलकस्तनस्थलभुजोरुमूलादिभिः।
इहाभिनवयौवनाः सकलरात्रिसंश्लेषितै-
र्हरन्ति शिशिरज्वरारतिमतीव पृथ्वीमपि॥" शिशिरः॥
"चैत्रे मदर्द्धिः शुकसारिकाणां हारीतदात्यूहमधुव्रतानाम्।

---

धीराः सन्ति। एषामूष्माधिक्यादतिशीते शिशिरे प्रमोदवृद्धिरिति तत्वम्। दरिद्रा एनं निन्दन्ति शीतपीडितत्वात्। सधनाः वंदन्ते तन्निवारकसामग्रीसद्भावात्।

*अभिनवेति*। करीषस्य गोमयस्य यस्तनूनपातदग्निः अभिनववध्वा रोषवत्स्वादुः सुसहः। तुषारमिश्रितसमीरिणः असरलजनस्य कुटिललोकस्य आश्लेषवत् क्रूरो वर्त्तते। गलितविभवस्य नष्टधनस्य आज्ञा इव रवेः द्युतिः दीप्तिः मसृणा कोमलातुच्छत्यर्थः। निशाकरः सोमः विरहवनिताया वक्त्रस्य औपम्यं सादृश्यं बिभर्त्ति धारयति।

*स्त्रिय इति*। इह शिशिरसमये प्रकृतिः स्वभावः तेन पित्तलाः सोष्णाः अभिनवं यौवनमासां ताः स्त्रियः बालाः। क्वथितकुङ्कुमस्य आलेपनं येषु तैः। सकलासु रात्रिषु संश्लेषितास्तैः। नितम्बफलकः स्त्रीकटीपश्चाद्भागः। स्तनस्थलं कुचस्थलम्। भुजे बाहू ऊरुमूलं सक्थिमूलम्। एषां द्वन्द्वे प्राण्यङ्गत्वादेकवद्भावः। तदादिर्येषामवयवानां ते तथोक्ताः तैः हेतुभूतैः। अतीवपृथ्वीमपि अत्यधिकामपि शिशिरज्वरजन्याम्, आरतिं विरतिं हरन्ति दूरीकुर्वन्ति। अतिविषयित्वाच्छिथिलेन्द्रियाणां पुरुषाणां सत्यां कामेच्छायां शीतज्वरप्राप्तिरिव जायते उरोनितम्बोरूणां सम्मर्दस्पर्शाश्लेषणा-त्तच्छान्तिरिति वस्तुचिन्ता।

इति शिशिरः संक्षेपकृतवर्णनं शिशिरस्य समापदित्यर्थः।

*चैत्रे मदर्द्धिरिति*। शुकाश्च सारिकाश्च प्रसिद्धाः तासाम्। हारीतः पक्षिविशेषः। दात्यूहः कालकण्ठकः। मधुव्रतः प्रसिद्धः। एषामितरेतरयोगद्वन्द्वः। तेषाम्। चैत्रे मदर्द्धिः मादकताधिकता। सहकारस्य आम्रस्य बन्धुः। सहकारे चैत्रे एव मञ्जर्युत्पत्तेः बन्धुरिवोपकारकः। पुंस्कोकिलानां पुनः मदस्य वृद्धेरेष एव कालः समयः

पुंस्कोकिलानां सहकारबन्धुः मदस्य कालः पुनरेष एव ॥
मनोऽधिकं चात्र विलासलास्ये प्रेङ्खासु दोलासु च सुन्दरीणां ।
गीते च गौरीचरितावतंसे पूजाप्रपञ्चे च मनोभवस्य ॥
पुंस्कोकिलः कूजति पञ्चमेन बलाद्विलासा युवतौ स्फुरन्ति ।
स्मरो वसन्तेऽत्र नवैः प्रसूनैः स्वचापयष्टेर्घटनां करोति ॥
पिनद्धमाहारजनांशुकानां सीमन्तसिन्दूरजुषां वसन्ते ।
स्मरीकृते प्रेयसि भक्तिभाजां विशेषवेषः स्वदते वधूनाम् ॥

---

*मनोऽधिकमिति* । अत्र वसन्ते प्राप्ते सति सुन्दरीणां मनः स्वान्तं, विलासपूर्वके लीलापूर्वके । विलासो हावभेदे स्याल्लीलायामपि पुंस्ययम्" । लास्ये मृदुनृत्ये, प्रेङ्खासु चञ्चन्तीषु दोलासु हिन्दोलिकासु च गौर्याः पार्वत्याः चरितम् अवतंसः प्रधानं यस्मिन् तस्मिन् गीते गाने, मनोभवस्य कामस्य पूजाप्रपञ्चे अधिकं वाहुल्येन रमते ।

*पुंस्कोकिल इति* । अत्र वसन्तर्तौ प्राप्ते सति । पुमांश्चासौ कोकिलः पुंस्कोकिलः पुरुषत्वजातिविशिष्टः कोकिलः पञ्चमेन स्वरेण कूजति शब्दायते । बलाद् हठाद् युवतिजने विलासाः । यौवनेऽभ्यधिकाः स्त्रीणां विकारा वक्त्रगात्रजा इत्यभियुक्तोक्तेः । प्रियसमीपगमने ये स्थानाशनगमनविलोकितेषु विकाराः अकस्माच्च क्रोधस्मितचमत्कारमुखविक्लवनानि वर्त्तन्ते विलासपदेन उच्यन्ते । तदुक्तं—

"विलासोऽङ्गे विशेषो यः प्रियाप्तावासनादिषु" इति ।
यस्मात्स्थानासनादीनां मुखनेत्रादिकर्मणाम् ॥
विशेषस्तु विलासः स्यादिष्टसंदर्शनादिना इति

विलासोदाहरणम् यथा—

अत्रान्तरे किमपि वाग्विभवातिवृत्तवैचित्र्यमुल्लसितविभ्रममायताक्ष्याः ।
तद्भूरिसात्विकविकारमपास्तधैर्यमाचार्यकं विजयि मान्मथमाविरासीत् इति ॥

स्फुरन्ति प्रादुर्भवन्ति । स्मरः कामः नवैः प्रसूनैः कुसुमैः स्वकीयधनुर्लतायाः घटनां रचनां करोति सम्पादयति ।

*पिनद्धेति* । वसन्ते पिनद्धानि धारितानि । महारजनेन कुसुम्भेन । स्यात्कुसुम्भं वह्निशिखं महारजनमित्यपि इति कोषः । रक्तानि । तेन रक्तं रागादित्यण् । वृद्धिः । माहारजनानि कौसुम्भानि अंशुकानि वस्त्राणि यासाम् । सीमन्ते केशवेषे सिन्दूरं जुषन्ते तासाम् । स्मरीकृते कामत्वं प्राप्ते प्रेयसि प्राणवल्लभे भक्तिभाजाम् आदरयुक्तानाम् वधूनां वधूटीनां विशेषवेशः स्वदते रसं जनयति ।

अयं प्रसूनोद्धुरकर्णिकारः पुष्पप्रपञ्चार्चितकाञ्चनारः ।
विजृम्भणाकोविदकोविदारः कालो विकाशोद्यतसिन्दुवारः ॥
रोहीतकाम्रातककिङ्किराता मधूकमोचाः सह माधवीभिः ।
जयन्ति शोभाञ्जनकश्च शाखी सकेसरः पुष्पभरैर्वसन्ते ॥
यो माधवीमुकुलदृष्टिषु वेणिबन्धो यः कोकिलाकलरुतैः कथने च लाभः ।
पूजाविधिर्दमनकेन च यः स्मरस्य तस्मिन्मधुः स भगवान्गुरुरङ्गनानाम् ॥
नालिङ्गितः कुरबकस्तिलको न दृष्टो नो ताडितश्च चरणैः सुदृशामशोकः ।
सिक्ता न वक्त्रमधुना बकुलश्च चैत्रे चित्रं तथापि भवति प्रसवावकीर्णः ॥
चैत्रे चित्रौ रक्तनीलावशोकौ स्वर्णाशोकस्तत्तृतीयश्च पीतः ।

---

*अयमिति* । प्रसूनैः कुसुमैः, उद्धताः उद्धुराः कर्णिकाराः यस्मिन् सः । पुष्पाणां प्रपञ्चेन अर्चिताः युक्ताः काञ्चनाराः यस्मिन् सः । विजृम्भणायां विकसने कोविदाः पण्डिताः हृदयाकर्षकाः इत्यर्थः । विकाशे । विकशनं विकाशो भावे घञ् । तस्मिन् । उद्यताः कृतोद्योगाः सिन्दुवारा यत्र सः । अयं कालो वसन्तः प्राप्तः । सिन्दुवारस्य पूर्णतया विकाशः ग्रीष्मर्तौ भवति वसन्ते च तदारम्भः । अत एव विकासोद्यतसिन्दुवार इत्युक्तम् । कर्णिकारः "कठचम्पा" इति प्रसिद्धः । काञ्चनारः स्वनामप्रथितः । "कचनार" इति ख्यातः कोविदारः । सिन्दुवारः "स्योंडी" इति प्रतीतः ।

*रोहीतकेति* । सुगमः सम्बन्धः । वसन्ते रोहीतकादयः पुष्पभरैः जयन्ति । एतेषु पुष्पसमृद्धिः वसन्ते जायते इति भावः ।

*यो माधवीति*। माधवीलतायाः । मुकुलेषु । दृष्टिर्दर्शनम् तासु सतीषु । यस्य च भावेन भावलक्षणमिति सप्तमी। यो वेणिवन्धः । माधवीमुकुलं दृष्ट्वा तत् सदृशं यद्वेण्युद्ग्रथन मङ्गनाभिः कृतमिति भावः। यश्च कथने भाषणे कोकिलायाः कलरुतैः लाभः योगः। कोकिला कलरववन्मधुरं भाषणमिति भावः । यश्च दमनकपुष्पैः स्मरस्य पूजाकरणप्रकारः तस्मिन् सर्वत्र स भगवान् मधुर्वसन्तः अङ्गनानां नायिकानां गुरुराचार्यः उपदेष्टा इति यावत् ।

*नालिङ्गित इति* । सरलान्वयपद्धतिः । स्त्रीणां स्पर्शात्प्रियङ्गुर्विकसति वकुलः सीधुगण्डूषसेकात् पादाघातादशोकस्तिलककुरवकौ वीक्षणालिङ्गनाभ्याम् ॥ मन्दारो नर्मवाक्यात पटुमधुहसनाच्चम्पको वक्त्रवाताच् चूतो गीतान्नमेरुर्विकसति च पुरो नर्तनात्कणिकारः । इति । कविसम्प्रदायसिद्धिः । किन्तु आश्चर्यम् । चैत्रे वसन्त (एतद्वसन्तोपलक्षणम्) तत्तद्विदूनाऽपि तेषु २ पुष्पविकाशः इति ।

*चैत्रे चित्राविति* । चेतोयोनेः मनोभवस्य भूर्भुवःस्वस्त्रयेऽपि लोके अन्य-

जैत्रं तन्त्रं तत्प्रसूनान्तरेभ्यः चेतोयोनेः भूर्भुवःस्वस्त्रयेऽपि ॥
गूवाकानां नालिकेरद्रुमाणां हिन्तालानां पाटलीकिंशुकानाम् ।
खर्जूराणां ताडताडीतरूणां पुष्पापीडन्यासहेतुर्वसन्तः ॥ वसन्तः ॥
विकाशकारी नवमल्लिकानां दलच्छिरीषप्रसवाभिरामः ।
पुष्पप्रदः काञ्चनकेतकीनां ग्रीष्मोऽयमुल्लासितधातकीकः ॥
खर्जूरजम्बूपनसाम्रमोच-प्रियालपूगीफलनालिकेरैः ।
द्वन्द्वानि खेदालसतामुपास्य रतानुसन्धानमिहाद्रियन्ते ॥
स्रोतांस्यनम्भांसि सकूपकानि प्रपाः कठोरेऽहनि पान्थपूर्णाः ।
शुचौ समभ्यर्थितसक्तुपाने प्रगे च सायं च वहन्ति मार्गाः ॥
यत्कायमानेषु दिनार्द्धनिद्रा यत्स्नानकेलिर्दिवसावसाने ।

कुसुमापेक्षया तत् जैत्रं जयनशीलं तन्त्रमुत्तममौषधमिति यावत् । किं तत्तन्त्रम् । चैत्रे (एतद्वसन्तोपलक्षणम् ) प्राप्त रक्तनीलौ अत एव चित्रौ अशोकौ, ताभ्यां तृतीयः पीतः स्वर्णाशोकश्च ।

*गूवाकानामिति* । गूवाकः सुपारीति प्रसिद्धः । अन्यत्सुगमम् ।

इति वसन्तः संक्षेपेण वर्णितः ।

सुरभिवर्णनीयनिर्देशिवार्या च-यथा—

सुरभौ दोलाकोकिलमारुतसूर्यगतितरुदलोद्भेदाः ।
जातीतरपुष्पचयाम्रमंजरीभ्रमरझङ्काारा इति ॥

अथ ग्रीष्मो ऽभिधीयते ।

*विकाशकारीति* । नवमल्लिकानां विकाशं कर्त्तुं शीलमस्येति ( णिनू ) तथा । दलद्भिः विकसद्भिः शिरीषपुष्पैरभिरामः सुन्दरः काञ्चनकेतकीनां पुष्पाणि प्रददातीति तथा । उल्लासिता धातकीका यस्मिन् सोऽयं ग्रीष्मः समयः प्रादुर्बभूव ।

*खर्जूरेति* । इह ग्रीष्मे द्वन्द्वानि कामिनां मिथुनानि खर्जूरादिभिः सह क्रीडयेति शेषः रतः खेदस्तेन अलसतां निष्क्रियत्वम् उपास्य प्राप्य अपरापरक्रीडासु असामर्थ्यमनुभूयेत्यर्थः । रतस्यानुसन्धानं सुरतक्रीडैव भवतु इति तदन्वेषणमाद्रियन्ते सम्पादयन्तीति भावः ।

*स्रोतांसीति* । समभ्यर्थितं सक्तोः पानं यस्मिन् तस्मिन् शुचौ आषाढे । एतद्ग्रीष्मोपलक्षणम् । कठोरेऽहनि मध्याह्ने प्रपाः पानीयशालिकाः पान्थैः पूर्णाः । सकूपानां स्रोतसामम्भस्त्वात् । प्रगे प्रातः सायं च पान्थाः सञ्चरन्तीति तात्पर्यम् ।

*यत्कायमानेष्विति* । यत् या कायमानेषु तृणकुटीरेषु पर्णशालासु इति यावत्

यद्रात्रिशेषे सुरतावतारः स मुष्टियोगो घनघर्ममाथी ॥
या चन्द्रिका चन्दनपङ्कहृद्या या जालमार्गोनिलवीचिमाला ।
या तालवृन्तैरुदबिन्दुवृष्टि-र्जलाञ्जलिं सा शुचये ददाति ॥
कर्पूरचूर्ण सहकारभङ्ग-स्ताम्बूलमार्द्रक्रमुकोपक्लृप्तम् ।
हाराश्च तारास्तनुवस्त्रमेतन्महारहस्यं शिशिरक्रियायाः ॥
मुक्तालताश्चन्दनपङ्कदिग्धा मृणालहारानुसृता जलार्द्राः ।
स्रजश्च मौलौ स्मितचम्पकानां ग्रीष्मेऽपि सोऽयं शिशिरावतारः ॥"

अत्र हि—"पच्यन्त इव भूतानि ताप्यन्त इव पांसवः ।
क्वथ्यन्त इव तोयानि ध्मायन्त इव चाद्रयः ॥

एणाः स्थलीषु मृगतृष्णिकया ह्रियन्ते स्रोतस्तनुत्वजनिता जलवेणिबन्धाः ।
ताम्यत्तिमीनि च सरांसि जलस्य शोषाद्बद्धारघट्टघटिकावलयाश्च कूपाः ॥

---

दिने अर्द्धनिद्रा अर्द्धः स्वापः अर्द्धं जागरणम् सनिद्रं जागरणमिति तात्पर्यम् । यत् यो दिवसस्य अवसानसमये स्नानकेलिः । यद् यः रात्रिशेषे ब्रह्ममुहूर्त्तात् किंचित्प्रागेव । तत्र सुरतस्य धर्मशास्त्रेषु निषिद्धत्वात् । सुरतस्य अवतारः सम्पादनम् । अत्र यदिति अव्ययं बोध्यम् । स सर्वः घनघर्मस्य सान्द्रस्वेदस्य माथी विनाशकारी मुष्टियोगः । यथाऽन्यो विपक्षः मुष्टिताडनेन निराक्रियते तद्वदिति भावः ।

*या चन्द्रिकेति* । या चन्दनपङ्कलेपवद् हृद्या शीतलतया तापापनोदकत्वान्मनोहरा चन्द्रिका कौमुदी । या जालमार्गसमागतानिलवीचिमाला । या तालवृन्तैरुदबिन्दुवृष्टिः जलक्लिन्नव्यजनवायोरनुभूतिः । सा शुचये आषाढाय जलाञ्जलिं निवापाञ्जलिं ददाति । एतेन शुचिर्निःशेषतां गतः इति ध्वनितम् ।

*कर्पूरचूर्णमिति* । कर्पूरस्य चूर्णम् वासयोगः । चूर्णानि वासयोगाः स्युरित्यमरः सहकारस्य भङ्गः । आर्द्रैः क्रमुकैरुपक्लृप्तं रचितं ताम्बूलम् । सुगममन्यत् ।

*मुक्तालता इति* । चन्दनपङ्कैः दिग्धा उपचिताः । मृणालनिर्मितैः हारैरनुसृता सङ्गताः । सरलान्या युक्तिः ।

*अत्र हीति* । अत्र ग्रीष्मे हि इत्थं जायते । इत्थं कथम् ।

*पच्यन्त इति* । सरलः पन्थाः । ग्रीष्मे सर्वं सौरतापेन आकुलं जातमिति तात्पर्यम् ।

*एणा इति* । मृगतृष्णा मरीचिका । ह्रियन्ते नीयन्ते । प्रवाहाणां क्षीणत्वाज् जलानि वेणित्वं प्राप्तानि इति भावः । बद्धा नद्धा अरघट्टयन्त्राणां वलया मण्डलानि येषु ते कूपाः । सरलमन्यत् ।

करभाः शरभाः सरासभा मदमायान्ति भजन्ति विक्रियाम् ।
करवीरकरीरपुष्पिणीः स्थलभूमीरधिरुह्य चासते ॥
सहकाररसार्चिता रसाला जलभक्तं फलपानकानि मन्थाः ।
मृगलावरसाः श्रृतं च दुग्धं स्मरसञ्जीवनमौषधं निदाघे ॥
जलचन्दनचारवस्तरुण्यः सजलार्द्राः सहतारहारमालाः ।
कदलीदलतल्पकल्पनस्थाः स्मरमाहूय निवेशयन्ति पार्श्वे ॥
ग्रीष्मे चीरीनादवन्तो वनान्ताः पङ्काभ्यक्ताः सैरिभाः सेभकोलाः ।
लोलज्जिह्वाः सर्पसारङ्गवर्गा मूलस्रस्तैः पत्रिणश्चांशदेशैः ॥
हर्म्यं रम्यं चन्द्रिकाधौतपृष्ठं कान्तोच्छिष्टा वारुणी वारिमिश्रा ।

---

*करभा इति* । करभादयो मदमौद्धत्यमायान्ति गच्छन्ति । विक्रियां मैथुनं भजन्ति सेवन्ते । करवीरादयः स्थलीषु रोहन्ते ।

*सहकारेति* । निदाघे ग्रीष्मे एतदौषधं स्मरसंजीवनं कामप्राणप्रदम् मतम् । एतत्किमित्याह—*सहकारेति* । सहकारस्य अतिसुरभिचूतस्य रसेन । अर्चिता युक्ता रसाला शिखरिणी । रसालायां तु मार्जितः । शिखरिणी इति हैमनाममाला । इयं चातिशयकामोद्दीपिका । तल्लक्षणं सूदशास्त्रे यथा—

अर्धाढकः सुचिरपर्युषितस्य दध्नः खण्डस्य षोडशपलानि शशिप्रभस्य ।
सर्पिः पलं मधु पलं मरिचं द्विकर्षं शुण्ठयाः पलार्धमपि चार्धपलं चतुर्णाम् ॥
सूक्ष्मे पटे ललनया मृदुपाणिघृष्टा कर्पूरधूलिसुरभीकृतपात्रसंस्था ।
एषा वृकोदरकृता सरसा रसाला यास्वादिता भगवता मधुसूदनेन ॥ इति ।

जलभक्तम् जलयुक्तमन्नम् । अन्नेन सम्पादितं पेयमिति भावः । फलैराम्रादिफलैर्निर्मितानि पानकानि एलामरीचशर्कराकर्पूराम्लिकादिवस्तुसम्पादित पेयानि । मन्थाः सक्तुविकाराः । मन्थो रवौ पथि साक्तवे नेत्ररोगे चेति हैमः । मृगाणां लावानां पक्षिविशेषाणां च मांसरसाः । श्रृतं कृतपाकम् । श्रृतं पाके इति निपातनात्साधु । पयो दुग्धम् ।

*जलचन्दनेति* । आर्द्रचन्दनेन चारवो मनोहराः । निर्मलमौक्तिकमालावत्यः । कदलीदलनिर्मिततल्पे स्थिताः तरुण्यो युवत्यः स्मरमाहूय काममाकार्य पार्श्वे सन्निधौ सम्यग् निवेशयन्ति । सजलार्द्रा इत्यनेन कृतस्नाना इत्युपलक्ष्यते ।

*ग्रीष्मे* । चीरी झिल्लिका । भृङ्गारी चीरुका चीरी झिल्लिका च समा इमा इत्यमरः । सैरिभाः महिषाः । कोलाः शूकराः मूलस्रस्तैरंशदेशैः उपलक्षिताः नतांसा इति भावः । स्पष्टमन्यत ।

*हर्म्येमिति* । रम्यं मनोजसंजीवनकारिसर्वमनोहरवस्तुसमुचितमिति भावः ।

माला: कण्ठे पाटला मल्लिकानां सद्यो ग्रीष्मं हन्त हेमन्तयन्ति ॥ ग्रीष्मः ॥

चतुरवस्थश्च ऋतुरुपनिबन्धनीयः । तद्यथा सन्धिः, शैशवं, प्रौढिः, अनुवृत्तिश्च । ऋतुद्वयमध्यं सन्धिः । शिशिरवसन्तसन्धिर्यथा—

"च्युतसुमनसः कुन्दाः पुष्पोद्गमेष्वलसा द्रुमा
मनसि च गिरं गृह्णन्तीमे गिरन्ति न कोकिलाः ।
अथ च सवितुः शीतोल्लासं लुनन्ति मरीचयो
न च जरठतामालम्बन्ते क्लमोदयदायिनीम् ॥"

---

हर्म्यं प्रासादः । कान्तोच्छिष्टां पूर्वं कान्तया पीताम् । सरलमन्यत् । इति वर्षाः संक्षेपेण वर्णिताः । इयमत्र वर्षासु वर्णनीयपदार्थसंग्राहिकार्या—

वर्षासु घनशिखिस्मयहंसगमाः पङ्ककन्दलोद्भेदौ ।
जातीकदम्बकेतकझञ्झानिलनिम्नगाहलिप्रीतिः ॥

*चतुरवस्थ इति* । चतस्रोऽवस्था दशा यस्य । इति । असौ ऋतुः मासद्वयात्मकः काल उपनिबन्धनीयः । कास्ताः चतस्रोऽवस्था इत्याकाङ्क्षायामाह—*तद्यथेति* ।

तदिति अव्ययम् । ता अवस्था यथा—प्रथमावस्था संधिः श्लेषः । जिगमिषोरा जिगमिषोः द्वयोः ऋत्वोः श्लेषः । तत्र जिगमिषो ऋतोर्लिङ्गानि क्षीयमाणानि वर्णनीयानि आगन्तुकस्य च आरभ्यमाणानि लिङ्गानि वर्णनीयानि तत अनन्तरं प्रवर्त्तमानस्य द्वितीयावस्था शैशवं बाल्यम् । ततः पश्चात्तस्यैव ऋतोः प्रौढिः परिपूर्णता वर्णनीया । इयं तृतीया अवस्था । एवं च समाप्तौ द्वितीयर्त्तोः प्रारभ्यमानस्य अनुवृत्तिः अनुयायित्वम् ।

किं तावत्सन्धेर्लक्षणमित्यत आह—*ऋतुद्वयेति* । द्वयोः ऋत्वोर्मध्यं मध्यकालः सन्धिः । शिशिरश्च वसन्तश्चेति तयोः संधिर्यथा—

*च्युतसुमनसः इति* । कुन्दा माघ्याः । च्युताः सुमनसोः येषां ते च्युतसुमनसो जाताः । ननु माघ्यं कुन्दमितिकोशोक्त्या कुन्दमाघ्ययोर्नपुंसकत्वेन माघ्यं कुतो माघ्याः कुन्दा इति । चेत् शृणु । एतन्नामकवृक्षाभिप्रायेणात्र पुंस्त्वम् । कोशे च पुष्पाभिप्रायेण तत्वम् । फले लुगिति सूत्रेण प्रत्ययस्य लुकि कुन्दं माघ्यमित्येवातो यथोक्तं साधु । एतदपि बोध्यम्—च्युताः सुमनसः इत्यत्रापि न भ्रान्तिः कार्या यतो हि सुमनसां स्त्रीत्व एव तत्रापि बहुत्व एव प्रवृत्तिः यथाचोक्तम्—

आपः सुमनसो वर्षाः अप्सरः सिकताः समाः
स्त्रियामेते बहुत्वेस्युरेकत्वेप्युत्तरत्रयम् । इति

द्रुमा वृक्षाः पुष्पोद्गमेषु कुसुमप्रादुर्भावेषु अलसाः न तु सोत्साहा शीतस्य शेष-

वसन्तशैशवम्—

"गर्भग्रन्थिषु विरुधां सुमनसो मध्येऽङ्कुरं पल्लवा
वाञ्छामात्रपरिग्रहः पिकवधूकण्ठोदरे पञ्चमः ॥
किं च त्रीणि जगन्ति जिष्णु दिवसैर्द्वित्रैर्मनोजन्मनो
देवस्यापि चिरोज्झितं यदि भवेदभ्यास(वश्यं)नेयं धनुः ॥"

वसन्तप्रौढिः—

"साम्यं सम्प्रति सेवते विचकिलं षाण्मासिकैर्मौक्तिकैः
कान्तिं कर्षति काञ्चनारकुसुमं माञ्जिष्ठधौतात्पटात् ।
हूणीनां कुरुते मधूकमुकुलं लावण्यलुण्टाकतां
लाटीनाभिनिभं चकास्ति च पतद्वृन्ताग्रतः केसरम् ॥"

---

तया तज्जडीकृतत्वात् । इमे सहकारेषु स्थिताः कोकिलाः । मनसि गिरं गृह्णन्ति किन्तु न गिरन्ति नोच्चारयन्ति । अथ च सवितुः सूर्यस्य मरीचयः किरणाः । किरणोऽस्रमयूखांशुगभस्तिघृणिघृरश्मयः । भानुः करो मरीचिः स्त्री पुंसयोर्दीधितिः स्त्रियाम् । इत्यमरः । शीतोल्लासं शिशिरोद्गममेव लुनन्ति निःशेषं कुर्वन्ति । न च । चस्तोऽथ । न तु क्लमस्योदयं क्लेशोद्गमं दातुं शीलमस्यास्ताम् । जरठतां तीक्ष्णताम् आलम्बन्ते स्वीकुर्वन्ति । कुन्दानां च्युतसुमनस्त्वादि वसन्तप्रादुर्भावम्, द्रुमाणां पुष्पोद्गमालस्यादि शीतावस्थायित्वं द्योतयति । एवं द्वयोः सन्धिः सूच्यते ।

वसन्तस्य शैशवं यथा—*गर्भग्रन्थिष्विति* । वीरुधां लतानाम् । लताप्रतानिनि वीरुदित्यमरः । गर्भग्रन्थिषु सुमनसः पुष्पाणि । मध्येङ्कुरम् अङ्कुरस्य मध्ये । पारेमध्ये षष्ठ्या वेति समासः । पल्लवाः छदाः । पिकवध्वाः कण्ठोदरे कोकिलायाः कण्ठोदरे वाञ्छामात्रेण परिग्रहः इच्छामात्रेण स्वीकारो यस्यासौ । पञ्चमो ध्वनिः ।

किंच यदि मनोजन्मनो देवस्य कामप्रभोः द्वित्रैर्दिवसैः त्रीणि जगन्ति लोकत्रयं जिष्णु जयनशीलं चिरोज्झितं बहोः कालात्परित्यक्तं धनुः चापम् । अभ्यासेन क्रियासमभिव्याहारेण वश्यं स्वाधीनं भवेत् । एतेन वसन्तकालीनवस्तूनां समुद्गम्यमानत्वात्तस्यअल्पत्वेन शैशवं ज्ञायते ।

वसन्तस्य एतन्नामकर्त्तोः प्रौढिः परिपूर्णता—

*साम्यमिति* । विचकिलं पुष्पं सम्प्रति वसन्तसमये षाण्मासिकैः षण्मासात्प्रादुर्भूतैः मौक्तिकैः मुक्ताभिः साम्यं तुल्यतां सेवते भजते । यथा नवोत्पन्नानि मौक्तिकानि शोभन्ते तथा विचकिलानि पुष्पाण्यपि इति भावः । काञ्चनारस्य कुसुमं माञ्जिष्ठेन धौतं शोधितं रक्तमिति यावत् तस्मात्पटाद्वस्त्रात् कान्तिं शोभां कर्षति आगृह्णाति । मधूकस्य महुआ इति विख्यातस्य पुष्पविशेषस्य मुकुलं कुड्मलं हूणीनां हूणदेशीयस्त्रीणां

अतिक्रान्ततुलिङ्गं यत्कुसुमाद्यनुवर्त्तते ।
लिङ्गानुवृत्तिं तामाहुः सा ज्ञेया काव्यलोकतः ॥

वर्षासु ग्रीष्मलिङ्गाब्जविकाशानुवृत्तिः ।

यथा—खं वस्ते कलविङ्ककण्ठमलिनं कादम्बिनीकम्बलं
चर्चां पारयतीव दर्दुरकुलं कोलाहलैरुन्मदम् ।
गन्धं मुञ्चति सिक्तलाजसदृशं वर्षेण दग्धा स्थली
दुर्लक्ष्योऽपि विभाव्यते कमलिनीहासेन भासां पतिः ॥"

एव मन्याअपि ।

---

लावण्यस्य अवयवगतकान्तिविशेषस्य लुण्टाकतां बलाच्चौर्यं कुरुते सम्पादयति। लाटीनां लाटदेशीयाङ्गनानां नाभेः निभं सदृशं केशरं काश्मीरजत्वेन प्रसिद्धं वृन्ताग्रतः बन्धनमुखात् पतद् गलत् सत् चकास्ति शोभते । अत्र चतुर्षु पादेषु उपमालङ्कारः। सम्पूर्णपुष्पाणां विकसिततया वर्णनाद्वसन्तप्रौढिस्तु सुतरां स्फुटैव प्रतीयते ।

*अतिक्रान्तेति* । अतिक्रान्तस्य व्यतीतस्य ऋतोः लिङ्गं लक्षणं कुसुमादि यदनुवर्त्तते । तां लिङ्गानुवृत्तिं प्राहुराचार्या इति शेषः । ननु कथं नाम लिङ्गानुवृत्तिः ज्ञातव्येत्यत आह *सेति* । सा काव्यात् लोकाच्च ज्ञेया । काव्येषु तस्यास्तथा वर्णनं दृष्ट्वा, लोके च तस्यास्तथा स्थितिं दृष्ट्वा जानीयादिति भावः ।

तामुदाहरणमुखेन दर्शयितुं ग्रन्थकार उपक्रमते *वर्षास्वित्यादिना* । वर्षासु ग्रीष्मलिङ्गस्य निदाघलक्ष्मणः अब्जविकाशस्य कमलोत्फुल्लनस्य अनुवृत्तिः अनुसन्ततिः ।

*खमिति* । कादम्बिनीरूपं मेघमालारूपम् । कादम्बिनी मेघमाला त्रिषु मेघभवेऽभ्रियमित्यमरः । प्रावार :कम्बलम् (कर्तृ) ।

कम्बलो नागराजे स्यात्सास्नाप्रावारयोरपि
क्रमावप्युत्तरासङ्गे सलिले तु नपुंसकम् । इति । मेदिनी

मेदिनी। कलविङ्कस्य चटकस्य । कलविङ्कः पुमान् ग्रामचटकेऽपि कलिङ्कके । इति मेदिनी । कण्ठवद्गलवन्मलिनं मलीमसम् । मलीमसं तु मलिनं कच्चरं मलदूषितमित्यमरः । खमाकाशम् (कर्म) वस्ते आत्मना आच्छादयति । उन्मदम् उन्मत्तम् । दर्दुराणां भेकानां कुलं सन्ततिः कोलाहलैः कलकलैः चर्चां विचारणामध्ययनमिति यावत् । चर्चा संख्या विचारणा इत्यमरः । चर्च अध्ययने इत्यस्मात् स्त्रियामङ् टाप् । पारयतीव समापयतीव नाशयतीत्यर्थः ।

दग्धा दावाग्निना प्रज्वलिता स्थली पृथिवी वर्षेण वृष्ट्या । वृष्टिर्वर्षमित्यमरः। हेतुना । "षष्ठी हेतु प्रयोगे" "सर्व नाम्नस्तृतीया चे"ति हेतौ तृतीया । सिक्तानां लाजा·

किञ्च—ग्रैष्मिकसमयविकासी कथितो धूलीकदम्ब इति लोके ।
जलधरसमयप्राप्तौ स एव धाराकदम्बः स्यात् ॥

यथा—

"धूलीकदम्बपरिधूसरदिङ्मुखस्य रक्तच्छटासुरशरासनमण्डनस्य ।
दीप्तायुधाशनिमुचो ननु नीलकण्ठ नोत्कण्ठसे समरवारिधरागमस्य ॥"

जलसमयजायमानां जातिं यां कार्द्दमीति निगदन्ति ।
सा शरदि महोत्सविनी गन्धान्वितषट्पदा भवति ॥

यथा—"स्थूलावश्यायबिन्दुद्युतिदलितबृहत्कोरकग्रन्थिभाजो

---

नां सदृशम् तुल्यम् । तुल्यार्थैरतुलोपमाभ्यां तृतीयान्यतरस्यामिति षष्ठीविधानात् षष्ठ्या समासनिर्देशः । गन्धं मुञ्चति त्यजति । दुर्लक्ष्योऽपि कादम्बिनीकम्बलाच्छादिततया निरूपयितुमशक्योऽपि भासां पतिः सूर्यः कमलिनीनां नलिनीनां हासेन विकासेन विभाव्यते परिज्ञायते । अत्र कादम्बिन्यादीनां वर्षालिङ्गानां मध्ये कमलिनीहासस्य वर्णनेन ग्रीष्मर्त्तोरनुवृत्तिर्वर्त्तते इति प्रकाश्यते ।

अन्येऽपीति भ्रान्तः पाठ । अन्या अपीति तु वरम् । एवमुपरिदर्शितरीत्या अन्या अपि ऋतूनामनुवृत्तयो वोध्याः ।

किञ्च अन्यदपि इत्थं वोध्यम् । *ग्रैष्मिकेति* । ग्रैष्मिके ग्रीष्मभवे समये विकसनशीलः कदम्बो धूलीकदम्बनाम्ना लोके कथितः । स एव कदम्वः धाराधरसमयस्य जलधरकालस्य वर्षर्त्तोः प्राप्तौ सत्यां धाराकदम्बो भवति ।

*धूलीकदम्बेति* । ननु हे नीलकण्ठ ? मयूर ? अथ च त्रिपुरारे ? धूलीकदम्बेन ग्रैष्मिकसमयविकासिना कदम्वेन । समरपक्षे-सैन्यसम्मर्द्दोत्थेन धूल्याः कदम्बेन समूहेन परिधूसरं संजातकार्ष्ण्यं दिङ्मुखं यस्मिंस्तस्य । रक्तस्य शोणस्य छायया युतं सुरशरासनस्येन्द्रधनुषोर्मण्डलं यस्मिंस्तस्य । समरपक्षे च-रक्तस्य रुधिरस्य च्छायया समूहेन सङ्गतं शरासनं धनुर्यत्र तस्य । दीप्तं तीक्ष्णम् आयुधभूतमशनिर्वज्रं मुञ्चन्तीति । वर्षर्त्तुपक्षे मेघाः । समरपक्षे भटाः मुञ्चन्ति । समर एव वारिधराणामागमो यस्मिन्नसौ वारिधरागमस्तस्य । हेतोर्न उत्कण्ठसे तदर्थं नोत्सुको भवसि । षष्ठी हेतुप्रयोगे इति सूत्रेण समरवारिधरागमस्येत्यत्र हेतौ षष्ठी ।

*जलसमयेति* । यां जलसमये वर्षर्त्तौ जायमानां प्रादुर्भूयमानां जातिं माधवीलतां कार्द्दमीति पङ्क्तिलेति निगदन्ति कथयन्ति । शरदि एतदृतौ सा जातिः महोत्सविनी अतीवोद्भववती तथा गन्धेन हेतुना अन्विताः सङ्गताःषट्पदा भ्रमरा यस्यां सा भवति विद्यते ।

जात्या जालं लतानां जरठपरिमलप्लावितानां जजृम्भे ।
नानाहंसोपधानं सपदि जलनिधेश्चोत्ससर्पापरस्य
ज्योत्स्नाशुक्लोपधानं शयनमिव शशी नागभोगाङ्कमम्भः ॥

स्तोकानुवृत्तिं केतक्या अपि केचिदिच्छन्ति ।

यथा—"असूच्यत शरत्कालः केतकीधूलिधूसरैः ।
पद्मताम्रैर्नवायातश्चरणैरिव वासरैः ॥"

शरद्भवानामनुवृत्तिरत्र बाणासनानां सकुरुण्टकानाम् ।
हेमन्तवक्त्रे यदि दृश्यतेऽपि न दृश्यते बन्धविधिः कवीनाम् ॥

---

यथेति उदाहृत्य तां दर्शयति—*स्थूलावश्यायेति* । स्थूलाः ये अवश्यायस्य तुषारस्य । अवश्यायस्तु नीहारस्तुषारस्तुहिनं हिममित्यमरः । विन्दवः पृषताः । पृषन्ति विन्दुपृषता इत्यमरः । तेषां द्युत्या कान्त्या दलितानां तिरस्कृतानां वृहतां महतां कोरकाणां कुड्मलानां ग्रन्थयस्तान् भजन्तीति तस्याः जात्या माधव्याः । जरठेन कठोरेण परिमलेन विमर्दोत्थजनमनोहरगन्धेन । विमर्दोत्थे परिमलो गन्धे जन मनोहरे । इत्यमरः । प्लावितानां सङ्गतानां लतानां जालम् जजृम्भे चकास । अथ शशी चन्द्रः सपदि त्वरया अपरस्य पश्चिमस्य जलनिधेः समुद्रस्य । नानाहंसा पवताः । हंसो गुरुः पर्वतः इति शब्दरत्नावली कोषः । एव उपधानानि यस्मिस्तत । अथवा नानाहंसानां मानसा लयानामुपधानं प्रणयः स्नेहो यत्र । उपधानमित्यस्य प्रणयोऽर्थः मेदिनी कोशानुसारी वोध्यः । नागानां सर्पाणां भोगः फण एव ।

भोगः सुखे धने चाहेः शरीरफणयोर्मतः ।
पालनेऽभ्यवहारे च योषिदादि भृतावपि । इति मेदिनी ॥

अङ्क चिन्हं यस्मिस्तदम्भो जलम्प्रति उत्ससर्प अपससार । किमिव । ज्योत्स्नावच्चन्द्रिकावत् शुक्लानि श्वेतानि उपधानानि उपवर्हाः । उपाधानं तूपवर्हं इत्यमरः । यस्मिस्तच्छयनं शय्याम् । शय्या शयनीयवत् । शयनमित्यमरः । इव यथा । अत्र स्थूलेत्यादिना अर्धपादेन मालत्या जात्या सौरभाभावितत्वमुपवर्णितम् ।

*स्तोकेति* । केचिदाचार्याः केतक्या अपि स्तोकानुवृत्तिम् अल्पानुवर्त्तनम् इच्छन्ति वाञ्छन्ति ।

*असूच्यतेति* । यथा कस्मिंश्चित्स्थानविशेषे नवायातः नूतनसम्प्राप्तः पुरुषः चरणैरसूच्यत । चरणचिह्नानि दृष्ट्वा नवपुरुषस्य आगमस्तर्क्यते तथैव केतक्या धूल्या धूसरैः पद्मैराताम्रै रक्तैः वासरैः शरत्कालः असूच्यत पर्यज्ञायत । वासरस्य केतकीधूली धूसरतया पद्मातात्म्रतया च शरत्कालस्थितिः सम्भाव्यते ।

*शरद्भवानामिति* । यद्यप्यत्र हेमन्तवक्त्रे हेमन्तर्त्तोः मुखे शरद्भवानां शरदृतु-

हेमन्तशिशिरयोरैक्ये सर्वलिङ्गानुवृत्तिरेव । उक्तं च । "द्वादशमासः संवत्सरः, पञ्चर्तवो हेमन्तशिशिरयोः समासेन"।

मरुबकदमनकपुन्नागपुष्पलिङ्गानुवृत्तिभिः सुरभिः ।
रचनीयश्चित्रश्रीः किञ्चित्कुन्दानुवृत्या च ॥
"गेहे वाहीकयूनां वहति दमनको मञ्जरीकर्णपूरा-
नुन्मादः पामरीणां मरुति मरुबकामोदिनि व्यक्तिमेति ।
सद्यो भङ्गानुसारस्नुतसुरभिशिराशीकरः साहकारः
सर्पन्नम्भःशरावे रचयति च रसो रेचकीचन्द्रकाणि ॥

---

समुत्पन्नानां वाणानाम् असनानाम् कुरुण्टकानां च अनुवृत्तिः आगतिः दृश्यते चक्षुः पदवीमवतरति । तथापि कवीनां बन्धविधौ आसङ्गो न परिज्ञायते ।

कुत एतदित्याह—*हेमन्तेति* । हेमन्तस्य शिशिरस्य च एकतायां हेतुः सर्वेषां लिङ्गानामनुवृत्तिरागतिरेव । उक्तं चेत्यनेन प्रमाणयति । द्वादशभिः मासैः संवत्सरः हेमन्तशिशिरयोः समासेन एककरणेन पञ्चैव ऋतवो भवन्ति । अतः शरद्भवानां लिङ्गानां हेमन्ते दर्शनं न अपूर्वम् ।

सुरभिर्वसन्तः । वसन्ते पुष्पसमयः सुरभिरित्यमरः ।

*मरुवकेति* । मरुवको मदनः । पिण्डीतको मरुवकः श्वसनः करहाटकः । शल्यश्च मदने इत्यमरः । दमनकः वृक्षविशेषः । पुन्नागः केसरः । पुन्नागे पुरुषस्तुङ्गः केसरो देववल्लभः इत्यमरः । एतेषां पुष्परूपाणां लिङ्गानामनुवृत्तिभिः । तथा किञ्चिदल्पं कुन्दस्यानुवृत्त्या च चित्रा नानाकारा श्रीः शाभा यस्यासौ रचनीयः कर्त्तव्यः ।

*गेहे वाहीकेति* । वाहीको नाम देशविशेषः पञ्जाब इति प्रसिद्धः । तत्रत्यः पुरुषो वाहीक इति केचित् । अन्ये तु वहिर्भवो बाहोकः इति व्युत्पत्त्या शास्त्रीया वाराद्बहिर्भूत इत्यर्थः, "वहिषष्टिलोपो यञ्च" "ईकक् च" इति वार्त्तिकद्वयेन वहिः शब्दस्य टिलोपे ईकक् प्रत्यये च कृते बवयोरभेदाद्वाहीकरूपमित्याहुः । ते चामी युवानस्तेषां गेहे दमनको वृक्षः मञ्जरीरूपान् कर्णपूरान् कर्णाभरणानि वहति धारयति उत्पादयतीति यावत् । मरुबकस्य मदनस्य आमोदो निर्यासः यस्मिन्नस्तीति तस्मिन् महति वायौ वहति सति पामरीणां नीचानाम् ।

विवर्णः पामरो नीचः प्राकृतश्च पृथग्जनः ।
निहीनोपसदो जाल्मः क्षुल्लकश्चेतरश्च सः । इत्यमरः ।

उन्माद औद्धत्यं व्यक्तिं प्राकट्यमेति गच्छति । सद्यो झटिति भङ्गस्य त्रोटनस्य अनुसारेण अनुगत्या स्नुता द्रुता सुरभिषु शिरासु सुगन्धासु नाडीषु शीकरा अम्बुकणा यस्यासौ । साहकारः सहकारसम्बन्धी रसः जलम् । अम्भसः शरावे

कुंदे मन्दस्तमाले मुकुलिनि विकलः कातरः किङ्किराते
रक्ताशोके सशोकश्चिरमतिविकचे चम्पके कुंचिताक्षः ।
पान्थः खेदालसोऽपि श्रवणकटुरटच्चक्रमभ्येति धुन्वन्
सोत्कण्ठः षट्पदानां नवमधुपटलीलम्पटं कर्पटेन ॥"

यथा वा—"धुनानः कावेरीपरिसरभुवश्चन्दनतरून्
मरुन्मन्दः कुन्दप्रकरमकरन्दानवकिरन् ।
प्रियक्रीडाकर्षच्च्युतकुसुममामूलसरलं
ललाटे लाटीनां लुठितमलकं ताण्डवयति ॥"

---

पात्रे सर्पन् गच्छन् रेचकीचन्द्रकाणि रचयति करोति ।

*कुन्दे मन्द इति* । मार्गश्रमजन्यखेदेन अलसोऽपि किन्तु सोत्कण्ठः सस्पृहः पान्थः पथिकः । नवायां मधुपटल्यां मधुपिटके । अथ पटलं (लो) पिटके च परिच्छेद छदिर्दृग्रोगतिलके क्लीबं, वृन्दे पुनर्नना । इति मेदिनी । लम्पटं संसक्तम् श्रवणे श्रोत्रे कटु यथास्यात्तथा रटद् गुञ्जद् षट्पदानां द्विरेफाणां चक्रं मण्डलं कर्पटेन वस्त्रेण धुन्वन् कम्पयन् शब्दं मा कुरुतेति धिया तान् उद्वेजयन् अतित्वराकुलो गृहे अभ्येति आगच्छति । कीदृशः पान्थः । कुन्दे मन्दः कुन्दमपि विकसितं गृहं नागमम् इति विचारयन् क्षीणप्रभः । मुकुलिनि संजातकुड्मले तमाले दृष्टिं ददन् विकलः विह्वलः । किंकिराते चक्षुः पातयन् कातरो दीनो भवति । रक्ताशोके नयने प्रसारयन् चिरं सशोकः । अति विकचे चम्पके कुञ्चिताक्षः कुटिलचक्षुः संजातः । कुन्दप्रभृतिषु विकसितेषु मान्द्यप्राप्तौ हेतुरयम्-यतो हि-नायकेन स्वागमनविषयं नायिकायै समयः कृतः, यदहं कुन्दप्रभृतानां विकसनात्पूर्वमेव भवतीसविधेऽवश्यं प्राप्स्यामि । तयापि स्वीकृत्य इदमुक्तं यदि नायास्यते तदा मन्मरणमेव निश्चिनु अतः परं प्राणान् धारयितुं न शक्ष्ये इति । मान्द्यस्येदं तत्वम्, समयस्तु अतिवाहितः परं तथापि अस्ति आशा । वैकल्यस्यायं हेतुः यद् दुःखसहनमन्तरा नात्र कश्चिदुपायः । कातर्यस्य तात्पर्यम् यदीश्वर एव शरणम् स एव परिरक्षिता स्यात् तदा जीवनं विभूयामन्यथा मरणं निश्चप्रचम् । सशोकतायाः कुञ्चिताक्षत्वस्य भावमाधुरी स्पष्टैव । जातेऽपि सर्वपुष्पाणां विकाशे सोत्कण्ठतया गृहाभिमुखमागच्छत्येव । इति सारम् ।

*धुनान इति* । कावेरीनद्याः परिसरभूमौ पर्यन्तभुवि । पर्यन्तभूः परिसरः इत्यमरः । समुत्पन्नान् चन्दनतरून् धुनानः कम्पयन् । कावेरीपर्यन्तभूसंचारितया वायोः शैत्यं व्यज्यते । कुन्दप्रकरस्य माघ्यसमूहस्य मकरन्दान् परागान् अवकिरन् विक्षिपन् । चन्दनतरुकुन्दमकरन्दसंपर्कितया वायोः सौगन्ध्यं प्रकाश्यते । मन्दः मन्दतया

एवमन्याप्यनुवृत्तिः ।

विचकिलकेसरपाटलिचम्पकपुष्पानुवृत्तयो ग्रीष्मे ।
तत्र च तुहिनर्तुभवं मरुबकमपि केचिदिच्छन्ति ॥

यथा—"कर्णे स्मेरं शिरीषं शिरसि विचकिलस्रग्लताः पाटलिन्यः
कण्ठे मार्णालहारो वलयितमसिताम्भोजनालं कलाच्योः ।
सामोदं चन्दनाम्भः स्तनभुवि नयने म्लानमाञ्जिष्ठपृष्ठे
गात्रं लोलज्जलार्द्रं जयति मृगदृशां ग्रैष्मिको वेष एषः ॥"

---

प्रवहनशीलः । एतेन वायोः मांद्यं वाच्यमेव । मरुद्वायुः । प्रियेण सह क्रीडायां केलौ, आकर्षेण च्युतानि गलितानि कुसुमानि यस्मात् तत् । आमूलं सरलम् आचूडम् ऋजु । ललाटे भाले लुठितम् उपावृत्तम् लाटीनां तद्देशीयावलानाम् अलकम् चूर्ण-कुन्तलम् ताण्डवयति नर्त्तयति ।

एषु त्रिष्वपि पद्येषु मरुवकदमनककुन्दानां शिशिरर्तुलिङ्गानां वसन्तेऽनुवृत्तिः कविभिर्वर्णिता । एवमुक्तरीत्या अन्या अपि उक्तैरवशिष्टा अपि अनुवृत्तिः वोद्धृभिर्जि-ज्ञासुभिर्बोध्या वर्णयितृभिः कविभिर्वर्णनीया चेति हृदयम् ।

एवं वासन्तिकीमनुवृत्तिमुदाहृत्य ग्रैष्मिकीमुदाहर्त्तुमुपक्रमते-*विचकिलेति* । विचकिलो वृक्षविशेषः । केसरः पुन्नागः । पाटलिः पाडली इति ख्याता । पाटलिः पाटलामोघा काचस्थाली फलेरुहा । कृष्णवृन्ता कुबेराक्षीत्यमरः । चम्पके हेमपुष्पकः । अथ चाम्पेयश्चम्पको हेमपुष्पक इत्यमरः । एषां वासन्तिकवृक्षसम्बन्धिपुष्पाणा-मनुवृत्तयो ग्रीष्मर्त्तौ सम्भाव्याः । केचिदाचार्याः तत्र ग्रीष्मे तुहिनर्त्तौ भवमुत्पन्नं मरुबकं मदनमपि इच्छन्ति वाञ्छन्ति ।

*कर्णे इति* । मृगदृशाम्-इत्यत्र द्विविधा समासगतिः । तथाहि-यदि मृग इव नयने यस्या सा मृगनयनेति समासे मृगशब्देन लक्षणया तन्नयने विवक्षिते भवतस्तथा केवलमृगस्यैवोपमानप्रातिपदिकत्वम् । मृगदृशाविव दृशौ यस्याः सा मृगदृग् इति विवक्षायाम् "अनेकमन्यपदार्थे" इति भगवत्पाणिनिमहर्षिप्रणीतसूत्रस्थेन "सप्त-म्युपमानपूर्वपदस्य बहुव्रीहिरुत्तरपदलोपश्चेति कात्यायनकृतवार्त्तिकेन मृगदृगित्यु-पमानपूर्वपदस्य दृक्शब्देन सह बहुव्रीहौ । लोकप्रसिद्धोपमानवाचिनि मृगदृशौ इति पूर्वपदे उत्तरपदभूतस्य दृक्शब्दस्य लोपस्तथा मृगदृगित्यस्योपमानत्वम् । मृग-पदं तद्दृशि लाक्षणिकमिति कातन्त्रकालापकौमारव्याकरणसम्मतम् । सप्तम्युपमा-नेत्यादिकं तु पाणिनीयव्याकरणानुसारीति बोध्यम् । नायिकानाम् । एष पुरो दृश्य-मानः ग्रैष्मिको वेषः ग्रीष्मकालोद्भववस्तुसम्पादितनेपथ्यः जयति सर्वोत्कृष्टतया वर्त्तते । कीदृशो वेषः । यत्र काले कर्णयोः स्मेरमीषद्विकसितं शिरीषपुष्पम् । शिरसि

यथा च—"अभिनवकुशसूचिस्पर्द्धि कर्णे शिरीषं
मरुबकपरिवारं पाटलादाम कण्ठे ।
स तु सरसजलार्द्रोन्मीलितः सुन्दरीणां
दिनपरिणतिजन्मा कोऽपि वेशश्चकास्ति ॥"

एवमुदाहरणान्तराणि ।

ऋतुभववृत्त्यनुवृत्ती दिङ्मात्रेणात्र सूचिते सन्तः ।
शेषं स्वधिया पश्यत नामग्राहं कियद्ब्रूमः ॥
देशेषु पदार्थानां व्यत्यासो दृश्यते स्वरूपस्य ।
तन्न तथा बध्नीयात्कविबद्धमिह प्रमाणं नः ॥

---

मूर्ध्नि पाटलिन्यः पाटलवर्णाः विचकिलकुसुमनिर्मितस्रजो, लताः मालाः । कण्ठे ग्रीवायाम् मृणालनिर्मितो हारः । कलाच्योः "कलाई" इति प्रसिद्धयोः पाणिमूलयोः । बलयितं कटकाकारेण परिणतम् असिताम्भोजस्य नीलकमलस्य नालम् । स्तनभुवि कुचप्रदेशे सामोदं ससौरभं चन्दनाम्भः । म्लाने अलसीभूते माञ्जिष्ठवद्रक्ते पृष्ठं चरमभागौ कटाक्षे इतियावत् ययोस्ते नयने नेत्रे वर्त्तेते ।

*अभिनवेति* । दिनस्य परिणतौ दिवसावसाने जन्म आविष्कारो यस्यासौ स प्रसिद्धः कोपि अनिर्वचनीयमहिमा सुन्दरीणां प्रेयसीनां वेषः चकास्ति । अभिनवानां प्रत्यग्रोत्पन्नानां कुशानाम् दर्भाणाम् सूचीः शिखाः स्पर्द्धितुं शीलमस्येति अभिनवकुशसूचिस्पर्द्धि शिरीषम् शिरीषपुष्पम् । कर्णे । जातित्वादेकवचनम् । कर्णयोः स्थितम् । मरुवकस्य परिवारं सहस्थायि पाटलाया दाम स्रक् कण्ठे गले वर्त्तते । किंभूतो वेषः सरसजलेनार्द्रः एवमुन्मीलितः प्रकाशितः ।

एवममुना प्रकारेण अन्योन्यर्त्तूनामनुवृत्तेरुदाहरणानि अन्यान्यपि मृग्याणि ।

*ऋतुभवेति* । हे सन्तः ? सज्जनाः ? अस्माभिरिति शेषः ऋतुभवानां तत्तदृतूत्पन्नानां पुष्पाणां वृत्तिः, अनुवृत्तिश्च दिङ्मात्रेण शैलीप्रदर्शनधिया सूचिता । शेषं यत्रावशिष्टं वृत्तं तद् यूयं स्वधिया निजबुद्ध्या पश्यत अवलोकयत । नामग्राहं प्रत्येकनामग्रहणपूर्वकं कियद्वस्तु ब्रूमः । बृहस्पतिरपि अनन्तस्य वस्तुराशेः नामग्राहं निरूपणेऽसमर्थः तर्हि कोन्यः पुमान् निरूपयेत् ।

*देशेष्विति* । देशेषु नानादेशेषु पदार्थानां स्वरूपस्य आकारस्य लक्षणस्य च व्यत्यासो दृश्यते । तत्पदार्थस्वरूपं तथा व्यत्यस्तं न बध्नीयात् काव्यघटकतया न वर्णयेत् । नूतनकवेः कृते शिक्षणासौ । यतः इह काव्ये प्राचीनकविनिबद्धस्वरूपं पदार्थानां नोऽस्माकं मते प्रमाणम् ।

शोभान्धोगन्धरसैः फलार्चनाभ्यां च पुष्पमुपयोगि ।
षोढा दर्शितमेतत्स्यात्सप्तममनुपयोगि ॥

यथा—यत्प्राचि मासे कुसुमं निबद्धं तदुत्तरे बालफलं विधेयम् ।
तदग्रिमे प्रौढिधरं च कार्यं तदग्रिमे पाकपरिष्कृतं च ॥
द्रुमोद्भवानां विधिरेष दृष्टो वल्लीफलानां न महाननेहा ।
तेषां द्विमासावधिरेव कार्यः पुष्पे फले पाकविधौ च कालः ॥
अन्तर्व्याजं बहिर्व्याजं बाह्यान्तर्व्याजमेव च ।

---

कतिधा पुष्पं वर्णनीयमिति निरूपयितुं प्राचीनाचार्यानुमतं स्वमतमुपचिनोति—*शोभान्ध इति* । कानिचित्पुष्पाणि शोभासम्पादकानि । यथा बन्धूकप्रभृतीनां पुष्पाणि । कानिचिच्च अन्धसि भोजने उपयुक्तानि । यथा स्थलकमलाकादीनां पुष्पाणि । अपराणि च गन्धोपयोगीनि । यथा मालतीवकुलावलीप्रभृतीनाम् । इतराणि रसप्रदातृतया कार्यकराणि । यथा शिरीषप्रभृतीनाम् । अन्यानि च फलरूपेण परिणम्यमानानि भवन्ति । यथा खर्जूरजम्बूपनसाम्रमोचप्रियालपूगीफलनालिकेरादीनाम् । कानिचन अर्चनायामुपयुक्तानि भवन्ति । यथा नवमल्लिकादीनाम् । एवं च षट्प्रकारेण पुष्पाणामुपयोगा लोके दृश्यते । अतः षड्धैव तानि वर्णनीयानीति भावः । तदेवैतद्दर्शितम् । सप्तमो यः प्रकारो वर्त्तते सोऽनुपयोगी स न कविभिर्ग्राह्यः ।

पुष्पाणां फलानां च वर्णनरीतिमुपदिशति । *यत्प्राचीति* । यत्कुसुमं प्राचि पूर्वस्मिन् मासि निबद्धम् वर्णितम् । तत्, उत्तरे मासि बालं विधेयम् । तस्मादग्रिमे मासि प्रौढिधरं कार्यम् । तत उत्तरस्मिन् मासे पाकेन परिष्कृतं सुन्दरम् कार्यम् ।

किं सर्वेषां पुष्पाणां फलानां कृतेऽयमुपदेश इत्यत आह—*द्रुमोद्भवानामिति* । द्रुमोद्भवानां वृक्षोत्पन्नानाम् । एष उपरि निर्दिष्टो विधिः प्रकारो दृष्टः अन्तर्भावितणिजर्थः । दर्शित इत्यर्थः । वल्लीफलानां लतोद्भवानाम् महान् एतादृक् चतुर्मासात्मकः अनेहा कालो न ज्ञेयः । तेषां वल्लीफलानां तु विधिः द्वौ मासौ अवधिर्मर्यादा यस्यासौ कार्यः । एवं पुष्पे फले च पाकविधौ कालः समुद्दिष्टः ।

*अन्तर्व्याजमिति* । केषुचित्फलेषु व्याजं क्षेपणीयं परिहरणीयं वस्तु ( गुठली ) अन्तः स्थितं भवति । केषांचिद्बहिः । ( छिलका ) केषां च बहिरपि अन्तरपि । केषांचन सर्वत्र परिहरणीयं किंचिदेव ग्राह्यम् यथा सीताफले । अपरेषां मध्ये बहुतरं तत् । कानिचन सर्वथा निर्व्याजानि । अयमर्थः विपूर्वकादज क्षेपणे इत्यस्मा-

सर्वव्याजं बहुव्याजं निर्व्याजं च तथा फलम् ॥
लकुचाद्यन्तर्व्याजं तथा बहिर्व्याजमत्र मोचादि ।
आम्राद्युभयव्याजं सर्वव्याजं च ककुभादि ॥
पनसादि बहुव्याजं नीलकपित्थादि भवति निर्व्याजम् ।
सकलफलानां षोढा ज्ञातव्यः कविभिरिति भेदः ॥
एकद्वित्र्यादिभेदेन सामस्त्येनाथवा ऋतून् ।
प्रबन्धेषु निबध्नीयात्क्रमेण व्युत्क्रमेण वा ॥
न च व्युत्क्रमदोषोऽस्ति कवेरर्थपथस्पृशः ।
तथा कथा कापि भवेद् व्युत्क्रमो भूषणं यथा ॥
अनुसन्धानशून्यस्य भूषणं दूषणायते ।

---

द्धातोः घञि निष्पन्नस्य क्षेपणार्थकस्य व्याजशब्दस्य फलेषु परिहरणीयं वस्तु त्वगादिं व्याजार्थः । यथोत्तरपद्ये स्पष्टम् ।

*लकुचादीति* । लकुचः वडहर इति प्रसिद्धः । लिकुचो लकुचो डहुरित्यमरः । लकुचादि फलम् अन्तः व्याजं परिहरणीयम् । अग्राह्यमिति यावत् । यस्य तत् । मोचादि कदलीप्रभृति वहिर्व्याजम् क्षेपणीयं वस्तु वहिरेव । आम्रादि फलम् उभय-व्याजम् अन्तरपि वहिरपि अग्राह्यं वस्तु । अन्तः गुठली इति प्रसिद्धम् । वहिः छि-लका इति ख्यातं वस्तु । ककुभादि अर्जुनादि फलम् सर्वव्याजम् अर्थात् ककुभादिषु किञ्चिदेव द्रव्यं ग्राह्यं सर्वं परिहरणीयमेव । पनसादि फलम् । पनसः कण्टकिफल मित्यमरः । कटहर इति प्रतीतं फलं पनसः वहुतरव्याजयुक्तम् । नीलकपित्थादि अन्तर्वहिरादिप्रदेशे सर्वत्रापि व्याजरहितम् । इत्येवं प्रदर्शितरीत्या कविभिः सकल फलानां षोढा भेदो ज्ञातव्यो वोध्यः ।

*एकेति* । एकमृतुम् । द्वौ वा ऋतू । त्रीन् वा ऋतूनित्यादि भेदेन । अथवा सामस्त्येन संहीभावेन सर्वान् ऋतून् व्युत्क्रमेण वा प्रबन्धेषु कविर्निबध्नीयात् ।

ननु व्युत्क्रमेण ऋतूनां निबन्धने कविरुपहासास्पदः अग्राह्यवचनश्च संभवेदिति निराकुर्वन्नाह-*न चेति* अर्थपथस्पृशः काव्यवर्णनीयपदार्थानुसारिपदे गच्छतः कवेः व्युत्क्रमेण ऋतूनां वर्णने दोषो नास्ति । व्युत्क्रमवर्णनस्य दोषोद्धारप्रकारं प्रकाश-यति--*तथेति* । तथा कापि अनिर्दिष्टप्रकारा कथा इतिवृत्तमुपस्थातव्या यथा व्युत्क्रमोऽपि भूषणं भवेद् ।

ऋतूनां व्युत्क्रमवर्णने भूषणदूषणे कविनित्यते इति प्रकटयति-*अनुसन्धा-नेति* । अनुसन्धानशून्यस्य पूर्वापरपदार्थालोचनरहितस्य कवेः भूषणं दूषणायते सा

सावधानस्य च कवेर्दूषणं भूषणायते ॥
इति कालविभागस्य दर्शिता वृत्तिरीदृशी ।
कवेरिह महान्मोह इह सिद्धो महाकविः ॥

॥ इति राजशेखरकृतौ काव्यमीमांसायां कविरहस्ये प्रथमेऽधिकरणे कालविभागो नाम अष्टादशोऽध्यायः ॥

समाप्तमिदं प्रथमाधिकरणं कविरहस्यं काव्यमीमांसायाम् ॥

---

वधानस्य सर्वत्र जागरूकस्य कवेः दूषणमपि भूषणं भवति । अध्यायोपसंहाराशयेनाह-*इतीति* । इत्येवं कालविभागस्य ईदृशी वृत्तिः पद्ध तिः दर्शिता । ननु किमर्थमेतावान् प्रयासः त्वया कृतः इत्यत आह-*कवेरिति* । इह कालविषये कवेः महान् मोहः बुद्धिभ्रमः । इह सिद्धो निष्णातो महाकविर्भूयात् ।

इति साहित्याचार्याहिताग्निश्रीमधुसूदनशर्मणः कृतौ मधुसूदनीविवृतौ कालविभागव्याख्यानं नाम अष्टादशोऽध्यायः संपूर्णः ।

समाप्तश्चायं ग्रन्थः ।